श्रीशिवः शरणम्।

श्रीमन्महाभारतान्तर्गतं

# नलोपाख्यानं

# सावित्र्युपाख्यानं

## च



स्वर्गीय श्रीअण्णाशास्त्रिविद्यावाचस्पतिविद्यालङ्कारमहोपदेशकेन
विनिर्मितया बालबोधिन्याख्यया
व्याख्यया समुल्लसितम्।

स्वर्गीय श्रीप्रतापचन्द्रराय. सी. आय. ई. विरचितेन
इंग्रेजीभाषानुवादेन संवलितम्।

**प्रथमभागात्मकम्।**

---

पुण्यपत्तने

श्रीमज्जगद्धितेच्छुयन्त्रालये संमुद्य प्रकाशितम्।

---

खिस्ताब्दाः १९१७.

व्याख्यातरि केवलमायतन्ते प्रबन्धस्यास्याधिकाराः सर्वेऽपि ।

श्रीशिवः शरणम् ।

# भूमिका ।



श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।
तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ॥

इह खलु जगति यानि नाम विद्यन्त आश्चर्याणि वस्तूनि तेष्वेवेदमन्यतमं महाभारतं नाम । एष किल निरर्गलप्रसरः पीयूषसारसरसः सरस्वतीनिःस्यन्दो मुनीन्द्रस्य तत्रभवतः कृष्णद्वैपायनस्येति विदितमेवैतदक्षरमुखानामशेषाणाम् । यथा किल समुन्नततया निखिलेऽपि भुवनतलेऽप्रतिभटो महीधरप्रवरो हिमवान्, यथा वा पावनतमेष्वद्वितीया महेश्वरशिरोविहारिणी भगवती भागीरथी, यथा वा सकलक्षेत्रमूर्धन्यभूता समस्तदुरितध्वान्तप्राग्भारविध्वंसिनी भगवती वाराणसी, एवमेव च महत्तया च सरसतया च पावनतया च हृदयहारितया चाद्वितीयमेव भुवनेष्वशेषेषु प्रबन्धरत्नं महाभारतं नाम । न हीदृशमपरं शक्यमालोकयितुं क्वापि केनापि । यानि च नामाविनश्वराणि निखिलातिशायीनि भूषणानि भारतस्य वर्षस्य तेष्वेवेदमन्यतमम् । स्थाने किलोदीरित कविप्रकाण्डेन गोवर्धनाचार्येण—

व्यासगिरां निर्यासं सारं विश्वस्य भारतं वन्दे ।
भूषणतयैव संज्ञां यदङ्कितां भारती वहति ॥ इति ।

एतदेवोपजीव्य विरचिता हृदयहारिणस्ते ते प्रबन्धाः प्राचीनैः कविभिः । किमधिकं, साक्षाद्वा परम्परयाऽपि वा महाभारतमेव प्रायश उपजीवन्ति प्रबन्धाः सर्वेऽपि प्राच्याम् । न खलु नास्त्यसावर्थः श्रीमति महाभारते यो नान्यत्रोपपादितः समालोक्येत । अत एवोक्तमभियुक्तैः "व्यासोच्छिष्टं जगत्सर्वम्" इति ।

यथा किल सारभूतमखिलेऽपि वाङ्मये महाभारतमेवमेव च विद्योन्नतेऽत्र सारभूतानि भूयांस्याख्यानानि । यानि किलानुवाच्यमानान्यात्मप्रवणतां नयन्ति द्रावयन्त्यन्तरङ्गाण्यनुवाचयितॄणां परिभ्रमयन्ति प्रमदमहार्णवे, स्खलयन्ति च प्रमोदाश्रुसंतानमिति न खल्वेतदविदितं महाभारताभिज्ञस्य कस्यापि रसिकस्य । एवं विधेष्वेव चाख्यानेष्वन्यतमं महाभारतान्तःपातिनि वनपर्वणि विभ्राजमानं तरलायमानमिव वनपर्वहारे नलोपाख्यानं च सावित्र्युपाख्यानं चेत्युपाख्यानद्वितयम् । यदेतादिदानीं संयोज्य नवीनया व्याख्यया समुपहृतं सहृदयेभ्योऽस्माभिः ।

अनयोश्चोपाख्यानयोरादिमे निषधदेशाधिनायकः पुण्यश्लोकप्रवीरः श्रीमान् नलो नाम धीरोदात्तचरितो नायकः। यः किल स्वयंवरार्थमनुप्राप्तानप्यपहाय महेन्द्रप्रभृतीनमरान्स्वयंवृतो राजहंससमुपागतगुणानुरक्तया गुणज्ञया विदर्भराजस्य भीमस्य दुहित्रा परमपतिमतया दमयन्त्या। अस्य च महात्मन उपाख्यानमिदं महात्मनामपि पुण्यश्लोकानामपि नियतेरनतिक्रमणीयत्वमवबोधयति। द्यूतादीनां च कामजानां व्यसनानां परमानिष्टजनकत्वमभिद्योतयति। श्रीमता नलेन सौवर्णविहङ्गमानामादानाय प्रसारितस्य वसनस्यैव तैर्हरणं प्रदर्शयच्च 'विपद्विपदमेवानुधावति' इत्येतमर्थं विस्पष्टयति। मध्येकाननं च प्रसुप्तायाः सहधर्मिण्याः पुण्यश्लोककृतं त्यागमभिदधत् सुलभसाहसत्वं विपदामभिव्यञ्जयति। दमयन्त्याश्च दासीभावावलम्बनमाचक्षाण 'नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण' इत्येतद्वचनोक्तमर्थं यथार्थमाचष्टे। उन्मत्ततुल्यं चारण्ये परिभ्रमतो नलस्य कर्कोटकदंशेन नागेन साहाय्यप्रधानमुपनिबध्नत् ' यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम्' इत्येनमर्थं प्रत्याययति। नलसदृशस्य महात्मनो नरपतेरयोध्याधिपतिसारथ्यस्वीकरणं कथयच्च ' नियतिनलोऽत्रनतायां विपदि तदनुरूपेणैव व्यापारेणातिवाहनीया दिवसा ' इत्युपदिशति। सुदूरं च विघटितयोरन्ततो दमयन्तीनलयोः समागमं समुपवर्णयत् ' देशादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्। आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः॥ इत्येनमर्थं विशदयति। आचष्टे च 'संपद्विपद्वापि निसर्गलोला कुत्रापि न स्थैर्यमुरीकरोति' इति। अवबोधयति किलात्र पातिव्रत्यस्य पारमार्थिकं चोऽज्ज्वलं च स्वरूपं श्रीमत्या दमयन्त्याश्चरितम्। सन्ति किलोपाख्यानेऽस्मिंस्तथाविधाः प्रसङ्गाः केऽपि ये हि समनुवाच्यमानाः परिस्खलयन्त्यश्रूणि। यद्यपि नेदं काव्यं तथापि कश्चित्सहजयैव रसवत्तया काव्यमप्यतिशेते। रसवत्तमतयैवोपजीव्यैतद्विरचितानि तैस्तैः कविभिस्तानि तानि काव्यानि। तत्र तावच्छ्रीमता कालिदासेन विरचितमिति श्रूयमाणं नलोदयं नाम यमकमात्रप्रधानमत एव च जघन्यश्रेणीयं क्षुद्रं काव्यं प्रथमम्। द्वितीयं च महाकविना वामनभट्टबाणेन संग्रथितं नलाभ्युदयं नाम। यत्किलाष्टमसर्गान्तमेवोपलभ्यते। यत्र च समवलोक्यते महाभारतीयः क्रमश्च भूयसी च्छाया च। हृदयहारिणी किलात्रत्या वाक्सरणिः। तृतीया पुनर्नलचम्पूः। नास्यां समग्रमेव गुम्फितं नलचरितं कविना, नापि वा समुपात्ता भारतीयनलचरितच्छाया। तुर्यं श्रीमता कवीन्द्रेण श्रीहर्षेण संदब्धं नैषधचरितम्। यद्यपि व्युत्पादकमेतत् तथापि नातिहृदयहारीत्येव निर्विशङ्कमभिधीयतेऽस्माभिः। अपवादः पुनरत्र केवलं करुणोक्तिहेसस्य। चरितं पुनस्तत्रभवतो नलस्यैकान्तत एव तिरोहितं वाऽन्यथा वा कृतं प्रभविष्णुना श्रीहर्षेण। कुत्र वा निसर्गत एव रसप्रवहन्नलोपाख्यानं? क्वापि वा शृङ्गारसाराणि श्रीहर्षवचनानि? यदि तु सामान्यजनदुरवबोधं सभ्यजनानादरणीयेन च शृङ्गारेण संघटितं काव्यं काव्यमूर्धन्यतामवगाहेत निर्दन्द्वमेव तदा कुमारसंभवादीनां शीर्षे

पदं नैषधचरितम्। पञ्चमं पुनः श्रीमता कृष्णानन्देन प्रणीतं सहृदयानन्द नाम। यत्किल किरतीव सुधां श्रोत्रपुटे श्रोतृणाम्, यच्च मदयत्यनुवाच्यमानमन्तरङ्गाणि रसिकानाम्। यदपि च समुपस्थापयति पुरस्तात्सुविशुद्धां मूर्तिं प्रसादगुणस्य। सर्वथा पञ्चममप्येतत्प्राशस्त्यमेवावहति काव्येष्वेतेषु। एतद्विभिन्नानि पुनर्नाद्यापि नयनसरणिं नः समवतीर्णानि नलचरितमधिकृत्य विरचितानि काव्यानि। भारतमञ्जर्यादिगतानि तु न स्वतन्त्राणि।

सावित्र्युपाख्याने च विशदीकृत पतिव्रतानां पतिप्रेम, महतां च वचनस्यापरिवर्तनार्हत्वं, सम्पद इव च विपत्तन्तुभङ्गुरत्वं विपदः, महत्यामपि च विपदि धैर्यस्यापरित्याज्यत्वं, बलीयसश्च पुरुषकारस्य दैवातिक्रमणसामर्थ्यम्। न किल मनोहरमपि चरितमेतदधिकृत्य विरचितं काव्यं किमपि केनापि संदृष्टमस्माभिः। केवलं गद्यैः परिवर्तितं केनापि क्वापि चरितमेतदालोकितम्।

यत्र च महाभारत उपनिबद्धमेतदाख्यानद्वितयं तदेतत्

## कुतो वा महाभारतं ?

इत्येवमनुयुञ्जानाः केऽपि लघोरपि भारतस्यापरस्य सत्तामुत्प्रेक्षन्ते। वस्तुतस्तु भरतान् ( भरतवंशजान् भूपान् ) अधिकृत्य कृतत्वाद्भारतमिति संज्ञामनुप्राप्तं प्रबन्धरत्नमिदं निसर्गत एव महत्त्वान्महाभारतत्वमापन्नम्। संदृश्यन्ते ह्यनपेक्षाकृता अप्येवंविधाः संज्ञाः। यथा महोदधिरिति। न ह्यस्ति लघूदधिर्नाम समुद्रः कोऽपि। अस्य च महाभारतसंज्ञाया प्रवृत्तौ निमित्तमभिहितं महाभारते ' एकतश्चतुरो वेदा भारतं चैतदेकतः। पुरा किल सुरैः सर्वैः समस्य तुलया धृतम्॥ चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते '॥ इति। अस्तु वा जैमिनीये भारतसंज्ञा वैयासिके चास्मिन् महाभारतमिति। न ह्येतावताऽऽदितो लघोः प्रबन्धस्यास्याख्यानैश्चोपाख्यानैश्च परिबृंहितत्वात्पश्चान्महाभारतत्वापत्तिरिति युक्तमभिधातुमिति कृतमप्रकृतानुसरणेन।

महाभारतं च कस्मिन्काले प्रादुर्भूतमिति जिज्ञासायां कलेर्युगस्यारम्भ इत्येव युक्तमाख्यातुम्। तदैव हि सार्वभौमपदमधिरूढो महाराजो युधिष्ठिर इति। संप्रति च कलेः पञ्च सहस्राण्यब्दानामतिक्रान्तानि। शिष्टपरम्परया च भारतीयेषु निराबाधं प्रचरितैव संवत्सरसंख्या नाश्रद्धेयतामर्हतीति नो बुद्धिः। नवीनयापि पुनः सरण्या सोऽयमेव भारताविर्भावकालः स्फुटीभवति। विस्तरभिया च नात्र काकदन्तगणनयाऽऽत्मानमायासयितुमिच्छामः।

## महाभारतीयानि पद्यानि

किल नार्वाचीनानां कवीनामिव समालक्ष्यन्ते। तानि हि वैदिकीमिव सरणिमालम्बन्ते। यथा तावद्वैदिकानि च्छन्दांस्यक्षरसंख्यातान्येवमेव प्रायेण

भारतीयानि । विशेषतश्चाष्टाभ्यधिकाक्षराणि । क्वचित्पुनर्गाथा अपि समालक्ष्यन्ते । गाथा च नाम पादादिनियमरहितं छन्दः । अत एवास्मिन् क्वचिदष्टाक्षरपङ्क्तिसमानस्यापि वृत्तस्य चरणे नवान्यप्यक्षराणि संदृश्यन्ते । क्वचिच्च षड्वाऽष्टौ-वा तदधिका अपि या चतुर्भ्यो न्यूना अपि वा चरणाः । छन्दसः पुनरेतस्य लक्षणं 'अत्रानुक्तं गाथा' इति सूत्रितं भगवता पिङ्गलाचार्येण । विवृतं चैतत् 'विषमाक्षरपादं वा पादैरसमं दशधर्मवत् । यच्छन्दो नोक्तमत्र गाथेति तत्पूर्वसूरिभिः प्रोक्तम्' ॥ इति केदारेण । इदमेव चास्योदाहरणम्, एवंविधानां च च्छन्दसामुपनिबन्धेन प्रतीयते प्रागेव लौकिकच्छन्दसां प्रचारतः प्रादुर्भूत नलोपाख्यानं, सावित्र्युपाख्यानं च तत एव च महाभारतमपीति । स चायं कालो नार्वाचीनः परन्तु प्राचीनतम एवेति विस्पष्टम् .

## महाभारतीय व्याकरणप्रयोगा अपि.

भूयिष्ठमत्र निदर्शनभावमासेवन्ते । अत्र हि नात्मनेपदपरस्मैपदनियमो धातूनाम् । यथा 'वसस्व मयि कल्याणि' (६५–६५) 'उच्छिष्टं नैव भुञ्जीयाम्' (६५–६८) 'यच्चान्यदपि पश्येथाः' (७५–६) 'निवर्त गच्छस्व न ते श्रमो भवेत्' (२९६–२१) इत्यादौ । न नुम्नियमः । यथा 'अत्रैव वसती भद्रे' (६५–६६) 'कुर्वन्तीं प्रभया देवीम्' इति । न गणनियमः । यथा 'न स्वपामि निशास्तदा' (६५–६१) इत्यादौ । न सन्धीनामवश्यं भावित्वम् । यथा 'सत्यनामा भवाशोक अशोकः शोकनाशनः ।' (६४–१०६) 'त्वां दृष्ट्वा व्यथिताः स्मेह' (६४–११७) 'उताहोऽसि वराङ्गना' (६४–११९) इत्यादिषु । संख्याशब्दानां विंशत्यादीनां बहुत्वमपि । यथा 'पञ्चाशद्भिर्हयैश्चैव षड्शतैश्च पदातिभिः । (७८–२) इत्यादौ । कुत्वेऽपि चानियमः । यथा 'वंशभोज्यमिदं राज्यं' (७८–९) इत्यादिषु । सर्वनामताऽप्यनियता । यथा 'द्वयोरेकतरे शुद्धिः' इत्यत्र । भवच्छब्दयोगेऽपि युष्मद्धन्मध्यमः पुरुषः । यथा 'नेतुं किल भवान् कस्मादागतोऽसि स्वयं प्रभो' (२९६–१४) इत्यत्र । शतुः स्त्रीप्रत्ययाभावः क्वापि । यथा 'निरीक्षमाणा भर्तारं सर्वावस्थमानिन्दिता । मृतमेव हि तं मेने काले मुनिवचः स्मरन्' (२९५–३२) इत्यत्र । समासान्तोऽजस्थानेऽपि । यथा 'कुलस्य संतानकर सुवर्चसम्' (२९८–३८) इत्यादौ एवं धात्वादेशा अपि । यथा 'न विषीदितुमर्हसि' (७९–१२ इत्यादौ

## छान्दसा अप्यत्र प्रयोगा दृश्यन्ते

यथा 'ततोऽग्निमानयित्वेह' (२९७–७८) इत्यत्र 'निवर्तयित्वा सावित्रीं स्वमेव भवनं ययौ' (२९७–६०) इत्यत्र चेत्येवमादिषु 'क्त्वा च च्छन्दसि' इति क्त्वैव न तु ल्यप् । यथा वा 'वेतनं ते शतं शता' इत्यत्र जसो डा । यथा वा 'भ्रातृणां सोदराणां च तथैवास्या भवच्छतम्' (२९८–१३) इत्यत्र ल्यड्यङभावः ।

## नव्या अपि च केऽपि नियमाः

समालक्ष्यन्ते । यथा सामीप्यार्थे सप्तमी । यथा । 'सुखमस्म्युषिता त्वयि' ( ६९–१८ ) इत्यत्र । त्वयि त्वत्समीप इत्यर्थ । एव 'वस वै मयि बाहुक' ( ६७–७ ) इत्यादौ च । क्वचित्पुनस्तृतीयार्थेऽपि सप्तमी । यथा पुनस्त्यानुमते तत । ( ६९–२२।२३ ) इत्यादौ । आपेक्षिक्याः पञ्चम्याः स्थाने तृतीयापि । यथा 'अक्षसरकारमपि च जानाम्यन्यैर्विशेषतः' ( ६७–३ ) एवमादिषु । देशवाची च शब्दः स्त्रियामावन्ततया प्रयुक्तस्तद्देशराजधानीमभिधत्ते । यथा 'ततो विदर्भा सम्प्राप्तम् । ( ७३–१ ) इति । अभ्यागच्छत्कोशलायाम्' इति (७६–२८) च ।

एवविधानां च प्रयोगाणा विचारे लौकिकव्याकरणनिर्माणतः प्रागेव प्रादुर्भूत महाभारतमित्यवश्य वक्तव्य भवति । अन्यथा ह्यपशब्दा एवैते सपद्येरन् । रूढमूले हि लोके व्याकरणे तद्विरुद्धाः शब्दा अपशब्दतया प्रोच्यन्ते । नाप्येते समाद्रियन्ते । प्रत्युत विनिन्द्यन्ते 'म्लेच्छो ह वा एष यदपशब्द' इत्यादिभिः । अप्रचरिते वाऽप्यरूढमूलेऽपि वा व्याकरणे यादृशा लोके प्रयोगास्तादृशा एव समाद्रियमाणाश्चोपनिबध्यमानाश्च कविभिर्न रसमपकर्षन्ति । तत एव च नैव दोषपक्षे प्रविशन्ति । समापद्यन्ते च शिष्टानामप्यादरणीयत्वम् । एवमपि चातिमात्रमेव प्राचीन महाभारत च तदन्त पात्येतदाख्यानद्वितय चेति नात्र सदेहः समुन्मिषति ।

### महाभारतीयभाषाविषये च विद्यते काचिदाख्यायिका ।

या किल विज्ञायमाना रञ्जयेन्मनः प्रियपाठकमहोदयानामिति सेयमत्र सक्षेपत उपनिबध्यतेऽस्माभिः । यथा । कदाचित्किल महाकविः कालिदासो वाराणस्यां व्यासमूर्तिमालोक्य नाभिमस्या अङ्गुल्या समालोडयितु प्रावर्तत । तदा च भगवान् व्यासः प्रादुर्भूय 'महात्मन् किमेतत्?' इत्यप्राक्षीत् । कालिदासः प्राह 'भगवन् पदे पदे किल प्रयुक्ताश्चकारा महाभारते भवता 'द्रोण च भीष्म च जयद्रथ च' त्यादिषु । तदिदानीमपि किमेते निरवशेषतामापन्नाः किं वा समवशिष्यन्त एव ते जठर इति विज्ञातुकाम उदर त आलोडयामीति'। व्यासस्तु विहस्याह 'भद्र यदि शक्नोषि विरचय मदुक्तमर्थमालम्ब्य विनैव चकारप्रयोग पद्यम् । सोऽयमर्थः—पञ्चसु पाण्डवेषु प्रथमो द्रौपद्याः पतिश्चासीच्छ्वशुरश्च । चरमस्तु पतिश्च देवा च । तदितरे पुनः पतयश्च श्वशुराश्च देवराश्चे' ति । कालिदासोऽप्येतदाकर्ण्य झटित्येव प्रत्याह 'पतिश्वशुरता ज्येष्ठे पतिदेवरतानुजे । इतरेषु तु पाञ्चाल्यास्त्रितय त्रितय त्रिषु ।' इति । तदाकर्ण्य पर विस्मयमापन्नो भगवान् व्यासः प्रासीदत् । इति । सेय जनवदनविहारिण्याख्यायिका मनोविनोदमात्रफलैवेति नैतदानर्थक वक्तुम् ।

पर्यालोचिते चास्मिन्नाख्यानद्वितये महाभारतसमये संप्रतीव जनानां केषुचिद्विषयेष्वासीदेव श्रद्धेति स्फुटीभवति। यथा ग्रहचारजनितेषु फलेषु। तत एवोक्तम् 'ग्रहा न विपरीतास्तु' इति (६५-२४) वैपरीत्यं च प्रतिकूलत्वम्। तच्च ग्रहाणां स्वजन्मराशितः स्थानविशेषावस्थानेन द्योत्यम्। रातश्च प्रतीयते राशिविज्ञानमप्यासीदेव महाभारतकाल इति। एवं सामुद्रिकेऽप्यासीद्विश्वासः। अत एवोक्तं 'अस्या ह्यपि भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः। * * * चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः।' (६९-५-७) इति। प्रश्नशास्त्रेऽपि। तत एवोक्तं 'ब्राह्मणान् विविधज्ञानान् पर्यपृच्छद्युधिष्ठिरः।' (७९-२७) इति। प्रतीयते च महाभारतावसरे गणितशास्त्रसत्ताऽपि। अत एवोक्तम् 'विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम्।' इति। कलासु च मूर्तिनिर्माणं चित्राणां चालेखनमासीदेव। अत एवोक्तम् 'बालस्याश्वाः प्रियास्तस्य करोत्यश्वांश्च मृण्मयान्। चित्रेऽपि विलिखत्यश्वान्' (२१३-१३) इति। अश्वशास्त्रादिकं च ततस्ततः स्पष्टयत्यात्मनः सत्तामिति विज्ञायैतैव विनापि परिश्रमं जिज्ञासुभिः

## धर्मसंहितास्तु महाभारततः प्राचीना इति

महाभारते तद्गतानां वचनानां प्रमाणतयोपन्यासाद्विश्रीयते। एतच्च सावित्र्युपाख्याने २९३ अध्यायगतस्य त्रयस्त्रिंशस्य तदुत्तराध्यायगतस्य च पड्विंशस्य पद्यस्यावलोकनेन शक्येत विज्ञातुम्।

तदेवं यावदुपलम्भं विनिवेदितं प्रियपाठकेभ्य आख्यानद्वितयविषयेऽत्र निवेदनीयमस्माभिः। सर्वथा च परिचाययेत्प्राचीनं समयं, सजनयेज्ज्ञानकलां, समुपदिशेत्सदाचारितं, अवबोधयेत्सुविशुद्धां पातिव्रतीं, ज्ञापयेत्पारमार्थिकं च सुविशुद्धं च प्रणयं, निवेदयेच्चावश्यभाविनां भावानामपरिहार्यत्वं, नियतेश्च बलीयस्त्वं, बलीयसश्च पुरुषकारस्य विशुद्धतमस्य च धर्मस्य नियतिमप्यतिवर्तमानत्वमेतदाख्यानद्वितयमित्यस्ति नो विश्वासः। बुद्धचरिताद्यपेक्षया तु पठनं एतस्य महीयानेव संभाव्यते लाभश्छात्राणामिति नात्र संदेहः। तदेतस्यानुशीलनेन सफलास्तु श्रेयः प्रियपाठका इत्याशास्य विरम्यतेऽस्माभिरिति शिवम्।

विनयावनतः

श्रीअप्पाशर्मा विद्यावाचस्पतिः

श्रीशिवः शरणम् ।

# विज्ञापनम् ।

विदितमेवैतन्मोहमयीविभागीयानां भूयसां विदुषां यदागामिनि १९१३तमे ख्रिस्तीयवत्सरे नलोपाख्यानं च सावित्र्युपाख्यानं चेत्येतदुपाख्यानद्वितयं पी. ई. श्रेण्यां अध्येयतया विनियुक्तं मोहमयीविभागीयेन विद्याधिकरणेनेति । अति मनोहरं चान्तरान्तरा दुरवबोधं चाख्यानान्तरमिवैतदपि श्रीमन्महाभारतान्तःपात्युपाख्यानद्वन्द्वम् । अत एव चैतदन्तरान्तरा व्याख्यानसापेक्षमिति शक्यमेवैतद्विज्ञातुं जिज्ञासुभिः । सन्ति खल्वत्र प्राचीना व्याख्यास्तथापि नैता बालानामुपकुर्वन्ति । प्रगल्भमतिमतामेव हि कृते तदारम्भः । तत एव च नात्र दुरवगमप्रायाण्यपि तत्तानि पदानि व्याख्यायन्ते, न वा प्रदर्श्यते जटिलतमेषु स्थलेषु सम्बन्धो, न वा व्याकरणादिकं यथास्थानमुपनिबध्यते । यापि चात्र सरणिर्व्याख्यानस्य नेयमुपकारिणी बालानाम् । केचित्पुनर्महाभारतव्याख्यातारः सर्वत्र वेदान्तमेव पश्यन्तः सुतरामुत्तानार्थान्यपि पदानि वेदान्तविषयतया व्याचक्षाणा व्याकुलीकुर्वन्त्यन्तरङ्गं विदुषाम् । तत एव च विनिर्माय नवीनामेव व्याख्यां बालबोधिनीं नाम प्रकाश्यतेऽस्माभिस्तया सनाथमेवैतदुपाख्यानयुगम् ।

व्याख्यायास्तावद्विनिर्माणे सुविशुद्धं मूलमावश्यकमिति तदधिगमार्थं प्रयतमानैः समासादितानि पञ्च महाभारतपुस्तकान्यस्माभिः । तानि च—

(१) कलिकातायां स्वर्गीयेण श्रीमता प्रतापचन्द्ररायमहोदयेन देवनागराक्षरैः सुमुद्रं प्रकाशितम् । यत्रास्माकं पञ्चपदेशः ।

(२) वाईक्षेत्रमधिवसद्भिः श्रीमद्द्रविडोपनामभिर्नानासाहेबमहोदयैर्दत्तम् । लिखितमेतदतिप्राचीनं नीलकण्ठीयव्याख्यासवलितं सुविशुद्धं च । यत्किल नसंज्ञतया निर्दिष्टमस्माभिः । एतच्च वाराणस्यां लिखितमिति विज्ञायते ।

(३) वाईक्षेत्रनिवासिभिर्व्यासोपाख्यैः श्रीमयूरेश्वरशर्मभिः प्रवितीर्णम् । यस्सञ्ज्ञयोपनिबद्धम् । एतच्च श्रीमता चतुर्भुजमिश्रेण विरचितया व्याख्य-

या सवत्ति जटिलप्रायाक्षर १८११ तमे विक्रमाब्दे भट्टमाधवजी त्यारव्येन केनाप्यमदावादनगरे लिखितम्।

(४) भूयोभिरेव भारतवर्षीयैः सुविशुद्धतया च प्रामाणिकतया च बहु श्लोध्यमाण कुम्भघोणत. श्रीमद्भिः कृष्णाचार्यमहोदयै. प्रकाशितम्। यदिह कनाम्ना सकेतितम्।

(५) पुण्यपत्तने 'न्यू इंग्लिश्स्कूल्' सज्ञाया पाठशालाया सस्कृताध्यापकपदमधितिष्ठद्भिरोकोपाह्वै. श्रीमहादेवशर्मभिर्विश्राणितम्। यत्किल मत्सनाम आरमहत्ताभावहति। मुद्रित च नीलकण्ठीयव्याख्यासनाथ चैतत्। इति।

एतेषु च पञ्चसु पुस्तकेषु श्रीमता प्रतापचन्द्ररायेण प्रकाशितमेव प्रमाणीकृतमस्माभि। विनिवेशित च मूलपदे। अन्ततो हि विनिवेशितस्तस्यैव महात्मन इग्रेजीभाषामयोऽनुवाद इति। अधस्तात्पुनर्विनिवेशितानि तत्तत्पुस्तकगतानि पाठान्तराणि। एतेषु च पाठेषु टिप्पनीगता अपि मूलापेक्षया काश्चिन्मनोरमा इत्यत्र नास्ति न सदेह। अनुवादनैसादृश्यभीतैरस्माभि पुन सत्यप्येव प्रतापपुस्तकमेव मूलीकृतमस्माभि। पाठभेदाना तु चारुत्वाचारुत्वविचारो व्याख्याया विहित।

सर्वत किल प्रथितप्रायमिदानीं भारते वर्षे कुम्भघोणनगरत. श्रीकृष्णाचार्यै. प्रकाशित महाभारतम्। एतच्च नानाविधदाक्षिणात्यकोशानुसारेण सशोधितमिति प्रतिज्ञा तेषाम्। प्रशस्यते चैतत्प्राचीनमतानुयायिभिरिव मुक्तकण्ठमेव नव्यमतानुवर्तिभिरपि विद्वद्वरै। अतश्च तदेव मूलतया स्वीकरणीयमित्यासीन्मनोरथोऽस्माकम्। किन्तु सू' मेक्षिकया सदृश्यमानमेतच्छैथिल्यमेवानैषीन्मनोरथमेनमास्माकीनम्। यानि हि समासादितानि महाभारतपुस्तकान्यस्माभिस्तत्र द्वितीय च तृतीय चेत्येते लिखिते च प्राचीने च। तदितरेष्वपि च पञ्चसमनेकैर्विद्वद्भि सशोधितमतिमात्रमेव शुद्ध च। कुम्भघोणमुद्रिते पुन. पुस्तके सदृश्यमाना भूयास एव पाठा' पुस्तकचतुष्टयेऽस्मिन्नोपलभ्यन्ते। न केवल कियन्तश्चित्सदपाठा एव पद्यान्यपि च भूयास्यन्यत्राविलोक्यमानानि कुम्भघोणपुस्तके समालक्ष्यन्ते। किमधिक नलोपाख्यानान्ते हरिश्चन्द्राख्यानमप्येकमाधिकमेवात्र विनिविष्ट सदृश्यते। नानाविधदाक्षिणात्यकोशानुसारेण सशोधितेऽपि पुन. पुस्तक एतस्मिन्न किल विनिर्दिष्ट कस्मिन् वा पुस्तक उपलब्धपद पद्यमाख्यान वेदमिति। कियत्सुचित्पुन. स्थानेषु मन्यामहे तत्रभवतो मुनीन्द्रस्य बादरायणस्य वाचि च्युतसस्कारतामसहमान एव प्रादुरकरोत्कुम्भघोणपुस्तके पाठभेदमात्मनम्। यथा 'पत्नी हि पातिना सदा' इति सर्वत्र पुस्तकेषु (अ. ६९५.४१) सदृश्यमान पाठ. पतिनेत्येतस्यासस्कृतत्वामिचाराङ्कमान 'पत्नी पत्या हि नित्यदे' त्येवरूपेण विपरिणत। यथा वा 'अशोभयच्च नगर पताकाध्वजमालिनम्।' (७६१६) इत्येष 'अशोभयच्च नगरीं पताकाध्वजमालिनीम्।' इत्येवरूपता प्राप्त। पताकाध्वजमालिनमित्येतस्य नगरविशेषणतानुपपत्तिरेवात्र

निदानम्। यथा वा 'नरवीरस्य वै तस्य नलस्यानयने यत' इत्येतत्पद्यार्धमात्मनेपदाभावं यतेःपरिहर्तुमिव 'नलस्य नरवीरस्य यतस्वानयने पुनः' इत्येवं परिणतिमनुप्राप्तम्। क्वचित्पुनः कुम्भघोणपुस्तकवर्तिनः पाठस्यास्थाने भीरुतापि स्फुटीभवति। यथा 'सुनाभाक्षिभ्रुवाणि च' (५७।७) इत्येष पाठः 'सुनासानि शुभानि च' इत्येवंविधत्वमापन्नः। अत्र चाक्षिभ्रुवशब्दस्यासाधुत्वसंदेहेनैव निदानेन भवितव्यम्। अस्थाने पुनरेषः। 'अचतुर' त्यादिना हि निपातनात्साधुरेवाक्षिभ्रुवशब्द इति। एवं 'दत्त्वा चाश्वशिरोऽगच्छत्' इत्यसावपि श्लोकपादोऽश्वशिरसो गमनकर्मत्वानर्हतामिव संभावयन् 'आशु सरोऽगच्छत्' इत्येतदात्मनैवात्मानं परिणमयामास। नैव पुनरशासीदश्वशिरश्च नाम तीर्थविशेष इति। टिप्पन्यः पुनः प्रायेण सर्वा अपि नीलकण्ठपुस्तकानुसारिण्यो नीलकण्ठव्याख्यातः समुद्धृता एव कुम्भघोणीये पुस्तके समालक्ष्यन्ते। सरला अपि पुनर्नीलकण्ठापेक्षया चतुर्भुजमिश्रादिभिर्विनिर्दिष्टा नात्रोपनिबद्धा अर्थाः। तत्किमुपेक्षणीयतयैवामी संभाविताः सुसंस्कृतं महाभारतमभिकामयमानैः श्रीकृष्णाचार्यैः। किं वा नाधिगतं टीकान्तरपुस्तकमिति नैतच्छक्यते संभावयितुमस्माभिः। इत्थं च नीलकण्ठीयव्याख्याऽनुसारिण्यपि पुस्तक एतस्मिन्समादृता अपि नीलकण्ठेनावश्यका अपि पाठभेदमात्रेणापि नोपदर्शिताः पाठाः। यथा 'उवाच वाक्यं तत्त्वज्ञो नैषधं वदतां वरः।' (७७ ११) इत्येतदर्धमित्येवमादयः। दिङ्मात्रं किलैतद्विस्तरभीरुभिः प्रदर्शितमस्माभिः। शक्यं चैतत्तत्र तत्र मूले च टिप्पन्यां च चक्षुः प्रक्षेपाद्भिः समवगन्तुं विद्वद्भिः। तदेवं भूयसामेवानपेक्षितानामनिर्दिष्टप्रभवाणां पाठानामुपलम्भादपेक्षितानां च केषांचिदनधिगमात्समधिगतेषु चानेकेषामनौचित्यात्प्राचीनत्वसंभावनायां सदेहोन्मेषाच नात्र प्रमाणीकृतं कुम्भघोणपुस्तकमस्माभिः। समुचिताः पुनरेतद्गताः पाठा विनिवेश्य व्याख्याया ससाधुवादं व्याख्याताः।

समुपलब्धयोश्च व्याख्ययोः श्रीमतो नीलकण्ठस्यैव प्राचीनेति प्रतिभाति। अस्यां पुनः सुविरलान्येव पदानि व्याख्यातानि। क्वचिच मानुष्यकसहजं समालक्ष्यते स्खलितमपि। यथा 'तथा त्वमपि राजेन्द्र समुद्धक्ष्यसेऽचिरात्।' (७९-५) इत्यत्र 'वक्ष्यसे दीव्यसे। वश कान्तावित्येतस्य रूपम्।' इति व्याख्यातं तत्रभवता नीलकण्ठेन। वशकान्तावित्यत्र पुनःकान्तिशब्द इच्छार्थो नैव तु दीप्त्यर्थ इति नैतदविस्पष्टम्। यथा वा 'दत्त्वा चाश्वशिरोऽगच्छत्' इत्यत्र (७९-२१) अश्वशिरोश्वहृदयमित्येवं विवृतम्। अश्वशिरसस्तु तीर्थत्वेन मनस्यपरिस्फुरणादेवैय व्याख्या प्रादुरभूत्। एवं 'न तेऽपवर्गः सुकृताद्विना कृत' इति यमसावित्रीसंवादगतपद्यव्याख्यायामप्यपवर्गशब्दोऽपवर्जनवाच्यपि सन्नन्यथा व्याख्यातो नीलकण्ठेन। प्रदर्शितानि च प्रायेणैवंविधानि स्थलानि व्याख्यायामस्माभिः।

चतुर्भुजमिश्रः पुनर्विरलतमान्येव पदानि व्याचष्टे। सरलमेव चालम्बते

पन्थान प्रायेण । न चापि सर्वेगमेव वेदान्तमनुधावति श्रीमतो नीलकण्ठस्यैव लेखन्येतस्य । तथापि तु नातीव शिथिल प्राचीनपथाभिनिवेश एतस्य । यथा चैतत्तथा यमसाविन्नीसंवादादिपु स्फुटीभवति । अन्यत्रापि च यत्रैव प्रतिभाति तत्रेद विशदीकृतमस्माभि ।

तदेव सत्यपि व्याख्याद्वितय आवश्यकैवात्र बालावबोधिनी कापि व्याख्येति विचिन्तयद्भिर्विनिर्मिता बालबोधिनी नाम व्याख्याऽस्माभि । अस्या च विवृतानि तानि तानि दुरवबोधानि पदानि । विनिवेशितानि तत्र तत्राथ प्रमाणानि । स्फुटीकृतो भाव । विशदीकृत सरन्ध । विचारित च बहूना पाठाना साधुत्व चासाधुत्व च । तथा च समवलम्बिता भाषाया सरणिर्ययैव विनैव प्रयासमल्पेनापि वा प्रयासेन शक्येत च्छात्रैरयमवबोद्धुम् ।

यद्यप्येवमेकान्तत एवावहितमेतस्या विनिर्माणेऽस्माभिस्तथापि न किल न स्यात् स्खलितमेतस्याम् । यावच्छक्य तु प्रयतित तत्परिहारेऽस्माभिरिति क्षम्यता विद्वद्भिर्यदि स्यादस्योपलम्भ क्वापि । यमसावित्रीसवादसङ्गतिस्तु प्राचीनैरप्रदर्शितैव प्रदर्शितोऽस्माभि । सेयमपि मन्यामहे प्रमोदमेवान्तरङ्ग रसिकानाम् ।

यत्सत्य, सस्कृतपुस्तकाना मुद्रण हि नामेद ' षष्ठ महापातक ' मेव । गरीयसी ह्यत्र वैयाकुली भवति यन्त्रालयेष्वक्षराणा मथने । दुर्लभाश्च सशोधयितार दुर्लभतमाश्च स्वीयनिर्विशेषमन्यदीयपुस्तकमुद्रणे सावहित प्रयतमाना मुद्रायन्त्राधिपतय । तदेवमाश्चर्ये यत्प्रबन्धनिर्माणव्यापृतेऽप्यत्र विन्यस्तसशोधनभरे प्रकाशयितरि समन्वशिष्यन्ते प्रकाश्यमानेषु प्रबन्धेष्वशुद्धय क्वचिदिति । अत एव च प्रार्थयामहे धीमत क्षम्यता कतिपयापमुद्रणविषये युष्माभिरिति । शक्यैव च व्याख्या च मूल च नयश्चदाधरणायेन सशोधयद्भिरपमुद्रणानामेषामपमुद्रणतावगन्तु प्रभावद्भि । मुद्रण हि नामेद द्रविणोत्सर्गशीलस्यापि दैवमेवापरमिहलोकभवम् । मुद्रायन्त्राधिपतय एव च ब्रह्माणो येष्विद समायतते ।

एव च नानाविधाना पुस्तकानामनुरोधेन सशोध्य च मन्यया च व्याख्याय सशोध्य सुबोधतामनुप्रापित नलोपाख्यान च सावित्र्युपाख्यान चेत्येतदाख्यानद्वितयमस्माभि । अत्र पुनरावश्यक केषाचन च्छात्राणा कृते इमे जीभाषामयस्यानुवादस्यापि विनिवेश इति विचिन्तयन्तस्तत्रापि प्रावर्तिष्महि । अनुमोदित च सानन्द दिगन्तविश्रान्तयशसा सी आय् ई बिरुदशालिना स्वर्गीयेण श्रीमता प्रतापचन्द्ररायमहोदयेन विनिर्मितस्यानुवादस्य प्रकाशन समाननीयया कल्याणगुणशालिन्या च तदीयकन्यकया श्रीमत्या हरिदासीदासीदेव्येति सहस्रश किलास्यै धन्यवादा वितराम । चिर चास्या कृतज्ञा स्म । अनुवाद पुनरय प्रशसितस्तैस्तै पण्डितप्रवरै पुस्तकस्यास्यान्ततो विनिवेशित । मन्यामहे स्यादेवातो महीयसी सौकरी छात्राणामिति ।

## इंग्रजीभागमयी पुनष्टिप्पनी

नैतान्तमेवानावश्यिका योजयितुम् । अपेक्षन्ते ह्येनां छात्रा इति समाकलयन्तश्च प्रार्थनामास्माकीना सफलयद्भिर्बेळगांवपत्तननिवासिभिःसुविश्रुतनामधेयैः सुग्रथितटिप्पनीनिर्माणपाटवैश्च बी. ए. एल एल. बी. इत्युपाधिपरिमण्डितैर्लोकूरोपनामधेयैः श्रीनारायणरायमहोदयैर्विरचितां न्यवेशयाम हृदयहारिणीं टिप्पनीमप्यत्रान्ते । यत्तस्य विनियन्त्रिताः स्म उपकारेण लोकूरश्रीनारायणरायैः । कृतज्ञाः किल सर्वथा स्म एतेषु ।

अथ किलोपाख्यानद्वितये सदृश्यन्ते निषधादिदेशानां नामानि । तानि चावेक्षमाणाना जायते जिज्ञासा कुत्र वाऽमी देशा भारते वर्षे इति । तस्याश्च परिपूर्तये योजितमत्र प्राचीनस्य भारतवर्षस्यालेख्यम् । अस्य च विनिर्माण आरचित सहाय्यममस्मदुपादिष्टा सरणिमनुसरताऽऽलेखकेन च्छात्रेण नः श्रीमता नीलकण्ठेनेति यच्छामः प्रणयगर्भितानाशीर्वादानेतस्मै ।

आलेख्येऽस्मिन् भूयानेवावलोक्येत विशेष आलेख्यान्तरत' प्रशैः । अत्र हि पृथगेव सिंहलतो विनिर्दिष्टा लङ्काऽस्माभिः । अत्रैव चालम्बिता भुवो मध्यरेखा नाम । अन्येऽपि चैव देशाः केऽपि विनिवेशिता अस्माभिर्नैवालेख्यान्तरेषु तथोपलभ्येरन् । अस्माभि. पुनरत्र प्रमाणीकृता ज्यौतिषसिद्धान्तग्रन्थाः पुराणप्रबन्धाश्च । निषधादिदेशनिर्देश. पुनर्महाभारतानुसारेणैव कृत' । देशाना सीमानिर्देशः पुनरैकान्तत एव दुष्करः प्रमाणानुपलम्भादिति नाशतोऽप्यत्र प्रावर्तिष्महि । सामान्यत एव तु विनिर्दिष्ट स्थानमेतेषामिति

तदेव प्रयतित प्रबन्धस्यास्य यावच्छक्य सर्वाङ्गमनोरमतया प्रकाशनेऽस्माभिः । तथापि यदि लक्ष्येतात्र कोपि दोषो धीमद्भि' क्षम्यता तदैव इति प्रार्थयामहे । आशास्महे च समनुवाचयन्तो व्याख्या चानुवाद च टिप्पनीं च समासादितावबोधाः सफलीक्रियासुः प्रयासमास्माकीन छात्रा इतीति शिवम्

व्याख्याता

श्रीअप्पाशर्मा विद्यावाचस्पतिः

श्रीशिवः शरणम्।

श्रीमति महाभारते वनपर्वणि

# नलोपाख्यानपर्व ।

## द्विपञ्चाशोऽध्यायः ।

जनमेजय उवाच—

अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
युधिष्ठिरप्रभृतयः किमकुर्वत पांडवाः ? ॥ १

## बालबोधिनी ।



आम्नायशीर्षनिवहैः परिगीयमान-
मानन्दसारसुमया कलितार्धकायम् ।
सृष्टिस्थितिप्रलयहेतुममेयमीशं
चन्द्रार्धचूडमनिशं हृदि भावयामः ॥
श्रीबादरायणमुनीन्द्रमुखोद्गतानां
केषांचिदद्य वचसाममृतोत्तमानाम् ।
व्याख्यानमल्पमतिमात्रविबोधहेतो
संतन्यते सुविशदार्थवचोविलासम् ॥
नीलकण्ठादिरचिता सन्ति व्याख्यास्तु काश्चन ।
तथापि बालबोधाय स्यादियं बालबोधिनी ॥
अस्यां च संशयोच्छित्यै कोशव्याकरणादिकम् ।
यथास्थानमविस्तीर्णं सप्रमाणं निवेश्यते ॥

अथ तत्रभवान्महर्षिप्रवरो बादरायणः श्रीमति महाभारत आदिपर्वणि प्रसङ्गप्राप्तं पुण्यश्लोकप्रवीरस्य महीपतेर्नलस्य चरितमुपवर्णयितुकामस्तदुपक्रममुपनिबध्नाति जनमेजय उवाचेत्यादिनाऽध्यायेन । तत्र तावद्धार्तराष्ट्रेण दुर्योधनेन द्यूते च्छलेन पराजित्य निर्वासितेषु पाण्डवेषु श्रीमानर्जुनो दिव्यास्त्रप्राप्तये ऐन्द्रं लोकं प्रातिष्ठतेत्येतावदन्तो वृत्तान्तो वैशम्पायनमुखाज्जनमेजयेन विज्ञातः। ततः परमिदानीं जिज्ञासमानो जनमेजय उवाच । जनं प्रजा एजयति भ्राजयति स्वीयेन चरितेनेति जनमेजयः; परिक्षितः पुत्रो राजा । एजृ दीप्तौ इत्यस्तो ण्यन्तात् 'एजेः खश्' इति खश् । अरुर्द्विषदित्यादिना मुम् ।

(१) युधिष्ठिरप्रभृतयो धर्मादयः 'गवियुधिभ्यां स्थिरः' इत्यलुक् षत्वं च ।

वैशम्पायन उवाच—

अस्त्रहेतोर्गते पार्थे शक्रलोकं महात्मनि ।
न्यवसन् कृष्णया सार्धं काम्यके भरतर्षभाः ॥ २
ततः कदाचिदेकान्ते विविक्त इव शाद्वले ।
दुःखार्ता भरतश्रेष्ठा निषेदुः सह कृष्णया ॥ ३
धनञ्जयं शोचमाना. साश्रुकण्ठाः सुदुःखिताः ।

---

(२) अस्त्रहेतोरिति । महात्मनि महान् उदार आत्मा मनो यस्य तथा भूते । पार्थे पृथायाः कुन्त्याः पुत्रेऽर्जुने । अस्त्रहेतोः अस्त्राणां कृते शक्रलोकं इन्द्रलोके गते सति । भरतर्षभाः भरतशब्दोऽत्र भरतकुलोत्पन्नेषु लाक्षणिकः तेषु ऋषभाः श्रेष्ठाः ' स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इत्यमरः । ते पाण्डवाः । कृष्णया द्रौपद्या सार्धं सह । ' सहयुक्त ' इत्यादिना तृतीया । ' पाञ्चाली पार्षती कृष्णा ' इति त्रिकाण्डशेषः । द्रौपद्याश्च कृष्णवर्णत्वादेव कृष्णेत्याख्या । तदुक्तं महाभारते ' कृष्णेत्येवाब्रुवन्कृष्णां कृष्णाऽभूत्सा हि सर्वतः । ' इति । काम्यके एतदाख्ये वने । न्यवसन्वासं कृतवन्तः । काम्यकं च नामैतद्वनं पश्चाम्बुषु सरस्वत्यास्तीरे विनिविष्टम् । एतच्च हस्तिनापुरतः पश्चिमस्यां दिशि विद्यते । एवं हि प्रयाणमुवर्णितं पाण्डवानां महाभारते—आदितस्तावदेते हस्तिनापुराद्विनिर्गता उदङ्मुखाः प्रस्थाय भागीरथ्यास्तीरे कस्यापि न्यग्रोधपादपस्याधस्ताद्रात्रिमतिवाहयामासुः । ततः परं च शौनकादिभिः सान्त्विताः समासादितसूर्यप्रसादाः काम्यकं प्रययुः । तथा ह्युक्तम् ' पाण्डवास्तु वने वासमुद्दिश्य भरतर्षभाः । प्रययुर्जाह्नवीतीरात्कुरुक्षेत्रं सहानुगाः ॥ सरस्वतीदृषद्वत्यौ यमुनां च निषेव्य ते । ययुर्वनेनैव वनं सततं पश्चिमां दिशम् ॥ ततः सरस्वतीतीरे समेषु मरुधन्वसु । काम्यकं नाम ददृशुर्वनं मुनिजनप्रियम् ॥ तत्र ते न्यवसन्वीरा वने बहुमृगद्विजे ॥ ' इति । ( वनपर्वणि अ० २ ) भारते नदीनां क्रमो न विवक्षितः । असम्भवात् । आदितो हि यमुना परस्तात्सरस्वती भवतीति ।

( ३ ) ततः इति । विविक्ते पवित्रे इव वर्तमाने शाद्वले शादहरिते ( हरिततृणवति प्रदेशे ) । नडशादाड्ड्वलच् इति ड्वलच् । ' शादो जम्बालशष्पयोः ' इति ' शाद्वलः शादहरिते ' इति चामरः । निषेदुः उपवेशनं चक्रुः । निपूर्वात्सदेरुपवेशनार्थाल्लिट् । अत्र इवेत्यत्र मृद्वितिकपुस्तकपाठः । स चायं रमणीयः । तत्र पुनः समस्तं पदमेतत् विविक्तमृदुशाद्वल इति ।

( ४ ) धनंजयमिति । धनञ्जयं अर्जुनम् । तस्य च तत्संज्ञाया प्रवृत्तिनिमित्तं प्रदर्शितं महाभारते ' सर्वाञ् जनपदाञ् जित्वा वित्तमाश्रित्य केवलम् । मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ॥ ' इति । शोचमानाः शोकविषयी-

---

१ मृदु ( क )

तद्वियोगार्दितान् सर्वान् शोकः समभिपुप्लुवे ॥४
धनञ्जयवियोगाच्च राज्यभ्रंशाच्च दुःखिताः ।
अथ भीमो महाबाहुर्युधिष्ठिरमभाषत ॥ ५
निदेशात्ते महाभाग ! गतोऽसौ भरतर्षभः ।
अर्जुनः पाण्डुपुत्राणां यस्मिन्प्राणाः प्रतिष्ठिताः ॥ ६
यस्मिन्विनष्टे पाञ्चालाः सह पुत्रैस्तथा वयम् ।
सात्यकिर्वासुदेवश्च विनश्येयुर्न संशयः ॥ ७
योऽसौ गच्छति धर्मात्मा बहून्क्लेशान्विचिन्तयन् ।
भवन्नियोगाद्बीभत्सुस्ततो दुःखतरं नु किम् ॥ ८
यस्य बाहू समाश्रित्य वयं सर्वे महात्मनः ।
मन्यामहे जितानाजौ परान्प्राप्तां च मेदिनीम् ॥ ९

---

कुर्वाणाः अस्मिन्नर्थे शुचेः सकर्मकत्वाद्धनञ्जयस्य कर्मत्वम् । न चाय शानच् किन्तु चानश् । अनात्मनेपदित्वाच्छोचतेरिति बोध्यम् । साश्रुकण्ठाः अश्रुभिः सह वर्तमानाः कण्ठा येषा तथाभूताः । अश्रुनिरुद्धकण्ठा इत्यर्थः ' प्रयुञ्जते चैव कवयः । यथा शाकुन्तले ' कण्ठः स्तम्भितबाष्पवृत्तिकलुषः । इति । अत्र हेतुः सुदुःखिता इति । अभिपुप्लुवे उपससर्प ' पुप्लुङ् च सर्पणे ' ( क. क. ) इत्यतो लिट् । व्याप्तवानिति यावत् ।

( ६ ) निदेशादिति । महाभाग महान् भागो भाग्य यस्य तथाभूत इति सोत्प्रासोक्तिः । ते तव निदेशात् आज्ञया । असौ स. । प्रयुज्यते हि तच्छब्दार्थेऽपि क्वचिददःशब्दः । 'योऽसौ सुभ्रु समागत ' इत्यादौ ( सा. द. ७ प. ) यस्मिन् अर्जुने पाण्डुपुत्राणामस्माक प्राणा प्रतिष्ठिताः प्रतिष्ठा स्थैर्यं प्राप्ताः । यमेवालम्ब्य स्थिरत्व प्राप्ता य एवास्मदीयप्राणाना स्थैर्यस्य हेतुरित्यर्थः ।

( ७ ) यस्मिन्निति । पाञ्चालाः पञ्चालदेशाधिपतयो द्रुपदादयः । पञ्चालश्च देशः पञ्चाभिः प्रधानाभिर्नदीभि. अलति शोभत इति व्युत्पत्त्या सम्प्रति पञ्जाब इति प्रसिद्ध एव । प्राचीना त्वस्य सीमा शक्तिसंगमतन्त्रे प्रदर्शिता यथा—'कुरुक्षेत्रात्पश्चिमाया, तथा चोत्तरभागतः । इन्द्रप्रस्थान्महेशानि दशयोजनकद्वये ॥ पञ्चालदेशो देवेशि ' इति । सात्यकिः सत्यकस्य नाम यादवस्य पुत्रः पाण्डवपक्ष्यो वीरः । वासुदेवः श्रीकृष्णः ।

( ८ ) य इति । भवन्नियोगात् भवत आज्ञया । धर्मात्मा धर्मे आत्मा मनो यस्य तथाभूतः । बीभत्सुः बीभत्सतेऽन्याय्यात्पथो जुगुप्सत इति बीभत्सुः अर्जुनः । बधेः स्वार्थे सन्नन्तात्सनन्ताभिश्च इत्युः । उक्त हि महाभारते 'न कुर्यां कर्म बीभत्स युध्यमानः कथचन । तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः ॥ ' इति । दुःखतर अतिशयेन दुःखहेतुः । किं ? न किमप्यन्यदित्यर्थः ।

( ९ ) यस्येति । यस्य अर्जुनस्य बाहू कर्मभूतौ । आजौ युद्धे । परान् शत्रून् ' अभिघातिपरारातो ' त्यमरः । मेदिनीं पृथिवीम् ।

यैस्य प्रभावान्न मया सभामध्ये धनुष्मतः ।
नीता लोकममुं सर्वे धार्तराष्ट्राः ससौबलाः ॥ १०
ते वयं बाहुबलिनः क्रोधमुत्थितमात्मनः ।
सहामहे भवन्मूलं वासुदेवेन पालिताः ॥ ११
वैयं हि सह कृष्णेन, हत्वा कर्णमुखान्परान् ।
स्वबाहुविजितां कृत्स्नां प्रशासेमे वसुन्धराम् ॥ १२
भवतो द्यूतदोषेण सर्वे वयमुपप्लुताः ।
अहीनपौरुषा बाला ! बलिभिर्बलवत्तराः ॥ १३
क्षात्रं धर्मं महाराज ! त्वमवेक्षितुमर्हसि ।
नहि धर्मो महाराज ! क्षत्रियस्य वनाश्रयः ॥ १४
राज्यमेव परं धर्मं क्षत्रियस्य विदुर्बुधाः ।

( १० ) यस्येति । धनुष्मतः प्रशस्तधनुर्धरस्य प्रभावात् प्रभावे विश्वस्य । ल्यब्लोपे कर्मण्यधिकरणे चेति पञ्चमी । सभामध्ये द्यूतमध्ये । ' सभा द्यूतसमूहयोः ' इति हैमः । धार्तराष्ट्रा धृतराष्ट्रपुत्रा दुर्योधनादयः। ससौबलाः सौबलेन सुबलापुत्रेण शकुनिना सह वर्तमानाः । अमु लोक पर लोक न नीताः । न हता इत्यर्थः ।

( ११ ) त इति । उत्थित प्रादुर्भूतमात्मन' क्रोध, भवन्मूल भवान् मूल कारण यस्मिन्कर्मणि तद्यथा तथा सहामहे । त्वदपेक्षयैव सहामह इत्यर्थः । ननु भोः क्रोधस्यानियमने विनाश इति चेत्तत्राह वासुदेवेन पालिता इति । को हि साक्षाद्भगवता पालितान् विनाशे समर्थ इति भाव.।

( १२ ) न चेत्क्रोध' सह्यते, किं वा तदा विधीयत इत्यत्राह वयमिति । कृष्णेन सह वर्तमाना वयम् । परान् । शत्रून् । कृत्स्नां सकलां वसुन्धरां पृथिवीं प्रशासेम आत्मन' शासनगतां कुर्याम । प्रशासेमेत्यार्षम् ।

(१३) भवत इति । बलवत्तराः अहीनपौरुषाः हीनं क्षीणं परेभ्यो न्यूनं वा न भवति तथाभूतं पौरुषं पराक्रमो येषां तथाभूता अपि सर्वे वयं केवलं भवतो द्यूतदोषेण द्यूतरूपेण दोषेण हेतुभूतेन बाला बालसदृशीभूताः । अत एव च बलिभिः बलवत्तरेभ्योऽस्मत् हीनैरिति भावः । उपप्लुताः पीडिताः । अत्र बाला इत्यत्र राजन्निति कपुस्तकपाठः । तत्र राजन्निति सम्बुद्ध्यन्तोक्तिः ।

(१४) क्षात्रमिति । क्षात्रं क्षत्राणां क्षत्रियाणां धर्मम् । तस्येदमित्यण् । अवेक्षितुं आलोचयितुमिति यावत् । वनाश्रयः वनस्याश्रय आश्रयणमित्येतद्रूपः ।

(१५) राज्यमिति । राज्यं राज्ञः कर्म प्रजापालनादिरूपम् । कर्माणि ष्यञ् । परं श्रेष्ठम् । विदुः जानन्ति मन्यन्त इति यावत् । ' विदो लटो वा ' इति लटो

१ इतः प्राक् ' यस्य प्रभावाद्धि वयं सभामध्ये धनुष्मतः । जितान्मन्यामहे सर्वान्धार्तराष्ट्रान् ससौबलान् ' इत्यधिकं कपुस्तके । २ महाबला ( च ) ३ मया ( क ) ४ प्रशाधीमो ( क ) ५ राजन् ( ध. न. ध ) ६ क्षात्रधर्मं ( च )

स क्षत्रधर्मविद्राजा मा धर्म्यान्नीनशः पथः ॥ १५
प्राग् द्वादश समा राजन्! धार्तराष्ट्रान्निहन्महि ॥ १६
निवर्त्य च वनात्पार्थमानाय्य च जनार्दनम् ।
व्यूढानीकान्महाभाग ! जवेनैव महामते ! ॥ १७
धार्तराष्ट्रानमुं लोकं गमयामि विशांपते ! ।
सर्वानहं हनिष्यामि धार्तराष्ट्रान्ससौबलान् ॥ १८
दुर्योधनं च कर्णं च यो वान्यः प्रतियोत्स्यति ।
मया प्रशमिते तस्मिंस्त्वमेष्यसि वनं पुनः ॥ १९

णलादित्वाज्झेरुस् । बुधा मन्वादयो ज्ञानिनः कर्तारः । ते हि प्राहुः 'क्षत्रियाणां परो धर्मः प्रजानामेव पालनम् ॥' इति । स क्षत्रियभूत इत्यर्थः । क्षत्रधर्मावित् क्षत्रियधर्मज्ञः राजा सन् त्वं धर्म्याद् धर्मादनपेतात् न्याय्यादित्यर्थः । पथो मार्गात् मा नीनशः मा भ्रष्टो भव। चौरादिकस्यापरिसमाप्तत्वान्नशेः स्वार्थेणिजन्ताल्लुङ् ।

( १६ ) ननु भोः प्रतिज्ञातं किल द्यूते विजितैरस्माभिर्द्वादश वर्षाणि वने वत्स्याम इति, तत्कथमिदानीमेव प्रतिज्ञाभङ्गः स्वीकरणीय इति चेत्तत्राह प्रागिति । हे राजन् द्वादश समाः वर्षाणि प्राक् पूर्वं गतानीति शेषः । शास्त्रानुरोधेन वत्सरशब्दस्यैकदिनमात्रपरत्वाद्गतान्यस्माकं वने द्वादश वर्षाणीति प्रतिज्ञाभङ्गोपि नास्त्येवेति भावः। यथा चैतत्तथाऽग्रे त्रयोविंशे पद्ये स्फुटीकरिष्यामः । तस्मात् धार्तराष्ट्रान् निहन्महीत्यार्षमात्मनेपदम् । निहन्म इत्यर्थः ।

( १७–१८ ) निवर्त्येति । पार्थमर्जुनं,योगरूढः किलायं शब्दस्तस्मिन्नन्यत्र पुनर्यौगिक एवेति बोद्धव्यम् । निवर्त्य परावर्त्य प्रत्यानीयेत्यर्थः । आनाय्य दूतादिद्वारेति भावः । आनयतेर्ण्यन्तात् क्त्वो ल्यप् । व्यूढानीकान् व्यूढं कृतव्यूहं अनीकं सेना येषां तथाभूतान् । व्यूहश्च योद्धुकामानां सेनायाश्चक्राद्याकारेण सन्निवेशः । सज्जसैन्यानिति भावः । एतेनात्मनः शौर्यातिशयो व्यज्यते । धार्तराष्ट्रान् दुर्योधनादीन् । अत्र महाहवे इति महामत इत्यत्र कपुस्तके पाठः। तत्र महति आहवे सङ्ग्रामे । तत्र हि युद्धार्थं रिपुराहूयत इति । विशां नराणां पते राजन् । एतेन प्रजापालनं हि नाम धर्म एवायं भवत इति गम्यते । 'विट् पुंसि मनुजे वैश्ये' इति मेदिनी ।

( १९ ) दुर्योधनमिति । प्रतियोत्स्यति प्रतिरथो भूत्वा युद्धं करिष्यति । परस्मैपदमार्षम् । चपुस्तके पुनः प्रतियोत्स्य इत्येव पाठः । स तु रमणीयः । युधेरात्मनेपदित्वात् । प्रशमिते हते सति । तस्मिन्दुर्योधने । एष्यसि सत्यामिच्छाया गच्छेति भावः । दृश्यते हि क्वचिल्लोडर्थेपि प्रयुज्यमानो लृट् । यथा तिष्ठ तावन्मुहूर्तं स्थित्वा ततो गमिष्यसीत्यादौ ।

१ द्राजन्मा धर्म्यात् ( क च, न, ) २ हत. । पर 'त्वदेव विचिन्त्यताम् । तदुत्तिष्ठ महाराज' इत्यधिकं कपुस्तके । ३ महाहवे ( क ) ४ योत्स्यते ( च ) ५ वनात्पुन ( च )

एवं कृते न दोषाश्च भविष्यन्ति विशांपते ! ।
यज्ञैश्च विविधैस्तात कृतं पापमरिन्दम ! ॥
अवधूय महाराज ! गच्छेम स्वर्गमुत्तमम् ॥ २०
एवमेतद्भवेद्राजन् ! यदि राजा न बालिशः ।
अस्माकं दीर्घसूत्रः स्याद्भवान्धर्मपरायणः ॥ २१
निकृत्या निकृतिप्रज्ञा हन्तव्या इति निश्चयः ।
नहि नैकृतिकं हत्वा निकृत्या पापमुच्यते ॥ २२
तथा भारत धर्मेषु धर्मज्ञैरिह दृश्यते ।

( २० ) एवमिति । दोषा न भविष्यन्ति, अस्माकमिति शेषः । अथ यदि भविष्यन्ति तदा कथमिति चेत्तत्राह यज्ञैरिति । तात हे अरिन्दम शत्रु-निबर्हण। सज्ञायां भृतृवृजीत्यादिना खच् । अन्तर्भावितण्यर्थोऽत्र दमिः। असज्ञा-यां प्रयोगस्तु लाक्षणिकः। विविधैर्यज्ञैः करणभूतैःअवधूय निरस्य दूरीकृत्येत्यर्थः।

( २१ ) उपालभते एवमिति । हे राजन् बालिशो मूर्खः । ' मूर्खवैधेयबा-लिशा ' इत्यमरः । धर्मपरायणः धर्मो न्याय एव परं अयनं आश्रयो यस्य तथाभूतः न्यायमात्रावलम्बीत्यर्थः । दीर्घसूत्रः दीर्घेण बहुकालेन सूत्रं कार्यार-म्भोऽस्य दीर्घसूत्रः । चिरकारी अलस इत्यर्थः । भवान्यद्यस्माकं राजा न स्यात्तदा एवमेतद्भवेत् । त्वमेव केवलमग्रगेलायसे धर्मभीरुश्चिरकारी चेति भावः ।

( २२ ) ननु भो अनर्हं शाठ्यावलम्बनमिति चेन्नानैतदेवमित्याह निकृत्येति। निकृत्या शाठ्येन । ' निकृतिःशाठ्य ' मित्यमरः । निकृतिप्रज्ञा, निकृतौ शाठ्ये प्रज्ञा बुद्धिर्येषां ते शाठ्यमात्रावलम्बिन इत्यर्थः । निकृतौ प्रज्ञा. पण्डिता इति या । निश्चयः सिद्धान्तः । नैकृतिकं निकृत्या जयति नैकृतिकः । तेन दीव्यति खनतिजयतीजितं ' मिति ठक् । हत्वा वर्तमानानामिति शेषः । अन्यथा हि समानकर्तृकत्व व्याहन्येत । उच्यते विद्वद्भिरिति शेषः ।

( २३ ) अथ यदि राजनीतिमपि शाठ्यमेव मन्यमानस्य नास्त्येव तत्र विश्वासस्तर्हि धर्म एव तावत्प्रमाणीक्रियतामित्याह । तथेति । हे भारत भरत कुलोत्तम । तथा यथा राजनीतिराह एव इहलोके धर्मज्ञैः मीमांसाविद्भिरि-त्यर्थः धर्मेषु धर्मग्रन्थेष्वित्यर्थं दृश्यते । किं तदित्याह हे महाराज अहोरात्र अहश्च रात्रिश्चानयोः समाहारः ' अहः सर्वैकदेशे ' त्यादिना अच् समासान्तः । ' रात्राह्नाहाः पुंसि ' इति पुंस्त्वाभावः पुनरार्षः । संवत्सरेण तुल्य इ निश्च येन इति । एकोऽप्यहोरात्रःसंवत्सरसमान इति । श्रूयते किल ' विश्वसृजाम यनं सहस्रसंवत्सरमिति । विश्वसृजामयनं नाम सत्र सहस्रेण संवत्सरैर्निष्पा-द्यमित्यर्थः । अत्र किमु संवत्सरशब्दो वर्षपरः प्रसिद्धत्वात् ? किं वा मासपरः? यो मासः स संवत्सर इति श्रवणात् , किं वा द्वादशाहपरः ' संवत्सरप्रतिमा

१ न दोषा नो भविष्यन्ति ( च ) न नैं दोषा भविष्यति ( क न ) न न दोषा भविष्यन्ति ( म. ) २ पापं ( ख ) स्वात्मा ( न ) ३ वर्षेषु ( च )

अहोरात्रं महाराज तुल्यं संवत्सरेण ह ॥ २३
तथैव वेदवचनं श्रूयते नित्यदा विभो।
संवत्सरो महाराज! पूर्णो भवति कृच्छ्रतः॥ २४
यदि वेदाः प्रमाणास्ते दिवसादूर्ध्वमच्युत!।
त्रयोदश समाः कालो ज्ञायतां परिनिष्ठित. ॥ २५
कालो दुर्योधनं हन्तुं सानुबन्धमरिन्दम [1]।

त्रै द्वादश रात्रय ' इति श्रवणात्। किं वा गौणो दिवसपर इत्याशङ्कायां ' त्रिवृदादिपदैः स्तोमाविशिष्टमहरुच्यते। नाहःसवस्ततोऽहःसु गौणीं सवत्स राभिधा॥ ' इति दिनपरत्वमेव सवत्सरशब्दस्य व्यवस्थापित मीमासाया षष्ठाध्यायस्य षष्ठे पादे ' सहस्रसंवत्सर तदायुषामसभवान्मनुष्येषु ' इति सूत्रे। एतच माधवमते सप्तमपादे। अस्या च ' विश्वसृजमयम सहस्रसवत्सरम् ' इत्यत्र श्रुतावादितः पञ्चपञ्चाशतास्त्रिवृत इत्यादौ त्रिवृत्पदोपानिबन्धनात्तेन च त्रिवृत्सज्ञकस्तोमयुक्तैकादिनाभिधानात्सवत्सरशब्दोऽत्राह पर एवेति भावः। स्तोमश्च यागविशेषः।

(२४) तथैवेति। हे विभो तथैव तादृशमेव सवत्सरशब्दो दिनपर एवेत्येतत्प्रतिपादकमेवेत्यर्थः। वेदवचन ' विश्वसृजायन सहस्रसवत्सरम् ' इत्येतद्रूपमित्यर्थः। नित्यदा सदा। आर्षोऽय दाप्रत्यय। श्रूयते। हे महाराज! कृच्छ्रतः आपदि। आपदर्थकात्कृच्छ्रशब्दात्सार्वविभक्तिकस्तसि' आद्यादित्वात्। सवत्सर' पूर्णो भवति। एकेन अह्नेति शेष। नीलकण्ठस्तु कृच्छ्रपद सवत्सरपद च प्रायश्चित्तविशेषपरमित्याशयान ' द्वादशवार्षिकं प्रायश्चित्त प्रतिशात तत्कृच्छ्रतः कृच्छ्रैरपि सद्यो भवति। तथाहि। त्रिंशता प्राजापत्यकृच्छ्रैरेकोऽब्दो भवति। एव मित्रविन्देष्टिपावित्रेष्टिमृगारेष्टिप्रभृतिभिर्दशदशप्राजापत्यस्थाने धर्मशास्त्रे विहिताभिर्द्वादशवार्षिकं व्रत समापयितु शक्यमित्यर्थः' इत्याह

(२५) यदीति। हे अच्युत च्युतो धर्मतो भ्रष्टो न भवति तथाभूत युधिष्ठिर! यदि ते तव वेदाः प्रमाणा. प्रामाणभूता। प्रमाणमितिपाठस्तु साधुः। दिवसात् एकस्माद्दिवसात् ऊर्ध्वं उत्तरस्मिन् काले। इतः परमेकदिवसव्ययगम इत्यर्थ'। त्रयोदश समाः त्रयोदश वर्षाणि तत्परिमित इत्यर्थ.। कालः परिनिष्ठितः समाप्तः। परिनिष्ठा हि समाप्ति सा सजाताऽस्य परिनिष्ठितः। तारकादित्वादितच्' इति शायता त्वयेति शेष। तथैव वेदे प्रतिपादनादिति भाव।

(२६) ततः किमित्याह। काल इति। हे अरिन्दम शत्रुनाशन। सानुबन्ध अनुबन्धैः सम्बन्धिभि. परिवारैरित्यर्थ' सह वर्तमान दुर्योधन हन्तु अयमिति शेषः कालः। कालसमयवेलास्त्विति हन्तेस्तुमुन्। अयमेव दुर्योधननाशोचितः समय इति भावः। कुत एतदित्याह। एकाग्रामिति। यतः हे राजन् स दुर्योधनः सर्वां पृथिवीं एकाग्रा एको दुर्योधन एवाग्रे यस्यास्तया-

१ प्रमाण (च. क.)

अज्ञातचर्यामुत्तीर्णान् दृष्ट्वा च पुनराह्वयेत् ॥ ३०
द्यूतेन ते महाराज पुनर्द्यूतमवर्तत।
भवांश्च पुनराहूतो द्यूते नैवापनेष्यति ॥ ३१
स तथाऽक्षेषु कुशलो निश्चितो गतचेतनः ।
चारिष्यासि महाराज ! वनेषु वसतीः पुनः ॥ ३२
यद्यस्मान्न महाराज ! कृपणान्कर्तुमर्हसि ।
यावज्जीवमवेक्षस्व वेदधर्मांश्च कृत्स्नशः ॥ ३३
निकृत्या निकृतिप्रज्ञाो हन्तव्या इति निश्चयः ।
अनुज्ञातस्त्वया गत्वा यावच्छक्ति सुयोधनम् ॥ ३४

---

उत्तीर्णान् समापितवतः अस्मान् । पाप इति नास्मिन्किञ्चिन्न सम्भवतीति व्यज्यते । अधिगच्छेत जानीयात् । आत्मनेपदमार्षम् । तदा दृष्ट्वा च दृष्ट्वैवेत्यर्थः । अनुदिष्टो ह्यवधारणार्थोऽपि चकारः । तथाहि मेदिनी चार्थेषु 'पक्षान्तरे तथा पादपूरणेऽप्यवधारणे ।' इति । आह्वयेत् द्यूतार्थमिति भावः । अत्र 'स्पर्धायामाङ' इत्यात्मनेपद न, आर्षत्वात् ।

( ३१ ) आहूता अपि वय न गमिष्याम इति चेन्नैतत्सम्भवतीत्याह द्यूतेनेति । हे महाराज ते द्यूतेन कारणभूतेन पुनर्द्वितीयवार द्यूतमवर्तत इतः पूर्वमेव वृत्तम् । आदितो हि विजितोऽपि द्यूते दुर्योधनेन युधिष्ठिरो विमोचितो धृतराष्ट्रेण पुनश्च शकुनिप्रोत्साहितेन तेनाहूतो विनिवृत्य द्यूत चकार वनवास च पणीचकारेति सभापर्वणि ७०—७६ अध्यायेषु द्रष्टव्यम् । ततः किमित्याह । च किंच भवान् पुन द्यूते आहूत सन् तदाह्वान द्यूत वा नैव अपनेष्यति दूरीकरिष्यति । अवश्य स्वीकरिष्यतीति भाव ।

(३२) स इति । स तेनाहूत इति । अक्षेषु पाशकेषु तथा तेन दृष्टपूर्वेण प्रकारेण कुशल । अत्यन्तकुशल इति भाव । निश्चितो जातनिश्चयः । गतचेतनः अपेतज्ञान । वसती अनेकदिनकर्तव्य वासम् । पार्थक्येन प्रतिदिन सघटमान वासमादाय बहुवचनम् । चरिष्यासि आचरिष्यसि करिष्यसीत्यर्थ ।

( ३३ ) पालितमाह । हे महाराज यदि अस्मान् कृपणान् दीनान् कर्तु नार्हसि न योग्यो भवसि तदा यावज्जीव यावज्जीवसि तावदित्यर्थ । 'यवति विन्दजीवोः' इति णमुल् । वेदधर्मान् वेदाना सम्बन्धिनो वेदप्रतिपादितान् धर्मान् कृत्स्नशः साकल्येन अवेक्षस्व विचारयेत्यर्थ ।

( ३४ ) न चात्र शाठ्य दोषायेत्याह । निकृत्येति । निकृतिप्रज्ञाः निकृतौ शाठ्ये प्रज्ञाः पाण्डिता शाठ्यचतुरा इत्यर्थः । निकृत्य हन्तव्या इति निश्चयः । धर्मशास्त्रस्येति भावः । अनुज्ञात इत्येतदर्थमुत्तरत्र सम्बध्यते ।

---

१ युद्ध प्रवर्तते (क) २ खु ( न )३ सर्वथा ( च )४ सु-( न ञ, क, म ) ५ वेदान्धर्मांश्च( क च, न )६ शाश्वतान ( च ) ७ प्रज्ञः (क म ) प्राज्ञे ( च ) ८ हन्तव्य ( क म ) ९ यावद्धन्मि ( च )

यथैव कक्षमुत्सृष्टो दहेदनिलसारथिः ।
हनिष्यामि तथा मन्दमनुजानातु मे भवान् ॥ ३५

वैशम्पायन उवाच—

एवं ब्रुवाणं भीमं तु धर्मराजो युधिष्ठिरः ।
उवाच सान्त्वयन् राजा मूर्ध्न्युपाघ्राय पाण्डवम् ॥ ३६
असंशयं महाबाहो ! हनिष्यसि सुयोधनम् ।
वर्षात्त्रयोदशादूर्ध्वं सह गाण्डीवधन्वना ॥ ३७
यत्त्वं मां भाषसे पार्थ प्राप्तः काल इति प्रभो ।
अनृतं नोत्सहे वक्तुं न ह्येतन्मयि विद्यते ॥ ३८

---

( ३५ ) यथेति । पूर्वपद्यतोऽर्धमनुषञ्जनीयम् । त्वया अनुज्ञातोऽनुमोदितः अहं ( भीमः ) यावच्छाक्ति यावती शक्तिस्तावदित्यर्थः । 'यावदवधारणे' इति समासः । गत्वा, यथा उत्सृष्टः क्षिप्तः अनिलसारथि' अनिलो वायुः सारथिः प्रेरयिता यस्य तथाभूतोऽग्निः कर्ता कक्षं तृणं दहेत् तथा मन्दं मूर्खं सुयोधनं हनिष्यामि । भवान् मे इति शेषे षष्ठी मामित्यर्थः । अनुजानातु । अत्र यावच्छक्तीत्यत्र यावद्धन्मीति चतुर्भुजादृतः पाठः । तत्र च यावद्धन्मि हनिष्यामीत्यर्थः । अयमेव च साधुः । अन्यथा हि दूरान्वयश्च नातिसामञ्जस्यं च पदानां भवतीति ।

( ३६ ) एवमिति । सान्त्वयन् शान्तिं प्रापयन् । मूर्ध्न्युपाघ्रायेति शिरसि आघ्राय । आघ्राणक्रियाया आधारत्वान्मूर्ध्नः सप्तमी । एष किल प्राचामाचारो यत्कनीयांसं मूर्ध्न्युपाजिघ्रन्ति स्मेति ।

( ३७ ) असंशयमिति । महाबाहो इति सामर्थ्यमभिद्योतयति । त्रयोदशाद्वर्षादूर्ध्वं गाण्डीवधन्वना गाण्डीवमेतन्नामकं धनुर्यस्य तेन अर्जुनेन सह वर्तमानः त्वं कर्ता । सुयोधनं हनिष्यसि । इत्येतदसंशयम् । नास्त्यत्र मे संशय इत्यर्थः ।

( ३८ ) षड्विंशपद्यार्थं उत्तरयति । यत्त्वमिति प्रभो सामार्थ्यशालिन् पार्थ पृथापुत्र भीम यत्त्वं मां कालः प्राप्त इति भाषसे । तत्रोच्यत इति शेषः । वचनमाह अनृतमिति । अनृतं असत्यं वचः इत्यर्थः । अनृतं यथातथेति वा । वक्तुं नोत्सहे । कुत इत्याह नेति । एतत् अनृतं तद्वचनोत्साहो वा मयि न विद्यते ।

( ३९ ) यत्तूक्तं निकृत्या निकृतिप्रज्ञा इति तत्राह अन्तरेणेति । कौन्तेय कुन्तीपुत्र दुर्धर्षं दुःखेन धर्षितुं पराजेतुं शक्यं अशक्यपराजयमित्यावत् भीम । पापनिश्चया पापः पापहेतुर्निश्चयो विधानविषयको यस्यास्तथाभूताम् । निश्चयमानेनापि पापोत्पादिकामित्यर्थः । निकृतिं शठतां अन्तरेण विनापि 'अन्तरान्तरेणयुक्त' इति द्वितीया । सानुबन्धं सपरिवारं सुयोधनं

---

१ पाण्डव ( च ) २ यश्च ( न ) यत्त्वमाभाषसे ( क ) ३ त्व ( च ) ४ कर्तं
( ग ) ५ मम ( च ) ६ निश्चयम् ( क. च. न. म. )

अन्तरेणापि कौन्तेय निकृतिं पापनिश्चयाम्।
हन्ता त्वमसि दुर्धर्ष ! सानुबन्धं सुयोधनम् ॥ ३९
एवं ब्रुवति भीमं तु धर्मराजे युधिष्ठिरे।
आजगाम महाभागो बृहदश्वो महानृषिः ॥ ४०
तमभिप्रेक्ष्य धर्मात्मा संप्राप्तं धर्मचारिणम्।
शास्त्रवन्मधुपर्केण पूजयामास धर्मराट् ॥ ४१
आश्वस्तं चैनमासीनमुपासीनो युधिष्ठिरः।
अभिप्रेक्ष्य महाबाहुः कृपणं बह्वभाषत ॥ ४२
अक्षद्यूते च भगवन् ! धनं राज्यं च मे हृतम्।
आहूय निकृतिप्रज्ञैः कितवैरक्षकोविदैः ॥ ४३
अनक्षज्ञस्य हि सतो निकृत्या पापनिश्चयैः।

मारयिता असि भविष्यसीत्यर्थः। त्रयोदशापि वर्षाणि सत्वर गमिष्यन्तीति द्योतयितु वर्तमानसामीप्यद्योतको लट्।

(४०) एवमिति एव ब्रुवति सति बृहदश्व एतन्नामा महानृषि महर्षिः।

(४१) तमिति। धर्मात्मा धर्म आत्मा मनो यस्य तथाभूत धर्म एवात्मा जीवो यस्येति वा। धर्मराट् धर्मेण राजत इति तथाभूतो युधिष्ठिरः। राजेः क्विप्। धर्मचारिण धर्मं चरितु शील यस्य तथाभूतम्। ताच्छीलिको णिनिः। तमभिप्रेक्ष्य दृष्ट्वा मधुपर्केण करणभूतेन। मधुना पर्क सपर्को दध्यादीना यत्र स मधुपर्कः। तल्लक्षण यथा कालिकापुराणे 'दधि सर्पिर्जल क्षौद्र (मधु) सितैताभिस्तु पञ्चभिः। प्रोच्यते मधुपर्कस्तु सर्वदेवौघतुष्टये ॥ जल तु सर्वतः स्वल्प सिता दधि घृत समम्। सर्वेषामधिक क्षौद्र मधुपर्के प्रयोजयेत् ॥' इति। शास्त्रवत् यथाशास्त्र पूजयामास।

(४२) आश्वस्तमिति। आश्वस्त अपेतखेदतया सुखितमित्यर्थः। 'स्यादाश्वासस्तु निर्वृतिः (सुखम्)' इति हैम. । आसीन उपविशन्त उपविष्टमिति यावत्। 'ईदास' इति ईत्। उपासीन. सेवमानः समीपोपविष्टो वा। महाबाहुर्युधिष्ठिरः। कृपण दीन यथातथा बहु अभाषत उक्तवान्।

(४३) भाषणमेवाह अक्षेति। हे भगवन् अक्षकोविदैः अक्षशब्दोऽत्र तत्क्रीडाया लाक्षणिक अक्षेषु अक्षक्रीडाया कोविदैः पण्डितैः। 'सन् सुधीः कोविदो बुध' इत्यमरः। निकृतिप्रज्ञैः शाठ्ये पण्डितैः कितवैः द्यूतकारैर्दुर्योधनादिभिः। 'धूर्तोऽक्षदेवी कितव' इत्यमरः। आहूय द्यूतार्थमाह्वान कृत्वा अक्षद्यूते अक्षक्रीडाया मे धन राज्य च हृतम्।

(४४) अनक्षज्ञस्येति। मे अनक्षज्ञस्य हि सतः अक्षज्ञानशून्यस्यैव सतः पापनिश्चयैः पापो दुष्टो निश्चयः कर्तव्यविषयको येषा तैः कर्तृभिः प्राणेभ्योऽपि गरीयसी गुरुतमा मे भार्या च भार्याऽपि सभा नीता। नयतेर्द्विकर्मक-

१ दुर्धर्ष (च, क.) दुर्धर्षः (न)

भार्या च मे सभां नीता प्राणेभ्योऽपि गरीयसी ॥ ४४
पुनर्द्यूतेन मां जित्वा वनवासं सुदारुणम् ।
प्राव्राजयन्महारण्यमजिनैः परिवारितम् ॥ ४५
अहं वने दुर्वसतीर्वसन् परमदुःखितः ।
अक्षद्यूताधिकारे च गिरः शृण्वन् सुदारुणाः ॥ ४६
आर्तानां सुहृदां वाचो द्यूतप्रभृति शंसताम् ।
अहं हृदि श्रिताः स्मृत्वा सर्वरात्रीर्विचिन्तयन् ॥ ४७
यस्मिंश्चैव समस्तानां प्राणा गाण्डीवधन्वनि ।
विना महात्मना तेन गतसत्त्व इवाभवम् ॥ ४८
कदा द्रक्ष्यामि बीभत्सुं कृतास्त्रं पुनरागतम् ।

---

स्वाद्भार्यायाश्च सभायाश्च कर्मत्वम् ।

( ४५ ) पुनरिति । पुनः द्वितीयवारमपि द्यूतेन करणभूतेन मां जित्वा अजिनैः मृगचर्मभिः परिवारितं परिवेष्टितम् । परिपूर्वाद्वृणोतेर्णिजन्तान्निष्ठा । अजिनैः परिवृतं कृत्वेत्यर्थः । वनवासं वने वासो यस्मिन्कर्मणि तद्यथा तथा । सुदारुणं अतिशयेन भयङ्करं महारण्यं प्राव्राजयन् प्रकर्षेण अगमयन् ।

( ४६ ) अहमिति । वने दुर्वसतीः दुष्टं निवासं वसन् आश्रयन्नित्यर्थः । च किंच अक्षद्यूताधिकारे अक्षद्यूतस्य विषये मदीयमक्षद्यूतमधिकृत्येत्यर्थः । सुदारुणाः गिरो भीमप्रभृतीनां वचनानि शृण्वन् परमदुःखितः अस्मीति शेषः ।

( ४७ ) आर्तानामिति । आर्तानां मदीयेन कर्मणा व्याकुलीभूतानां तत एव च द्यूतप्रभृति द्यूतोपक्रमादारभ्य शंसतां 'नैतद्भद्रम्' इति कथयतां सुहृदां हितानां वाचो हृदि श्रिता मदीये मनसि सलग्ना इव वर्तमानाः स्मृत्वा सर्वरात्रीः सर्वा रात्रीः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । विचिन्तयन् अस्मीति शेषः । चिन्ताकुल एव सर्वा रात्रीरतिवाहयामीति भावः ।

( ४८ ) दुःखान्तरमाह यस्मिन्निति । यस्मिन् गाण्डीवधन्वनि समस्तानां सकलानां अस्माकमित्यर्थात् । प्राणा । य एवास्मत्प्राणानामाधार इत्यर्थः । तेन महात्मना विना गतसत्त्वः गतप्राण इव अभवम् । 'द्रव्यासुव्यवसायेषु सत्त्वम्' इत्यमरः । अत्र पूर्वार्धात्परं 'स चेन्द्रलोकं गतवानस्त्रहेतोर्महाबलः ।' इत्यधिकं कपुस्तके । आवश्यकं चैतदत्र प्रतिभाति । कुत्र हि गतो धनंजय इति न विदितं बृहदश्वेन । नापि चैतदेतेनोत्तरत्र संपृष्टमिति । अन्यथा ह्यसौ जिज्ञासमानः पृच्छेदेवेति ।

( ४९ ) कदेति । कृतास्त्रं कृतानि अभ्यस्तानि अस्त्राणि येन तथाभूतम् । अनुदं महान्तं उदारमनसमित्यर्थः । अतन्द्रितं तन्द्रा आलस्यं संजातमस्मिन्स्त-

---

१ अक्षद्यूताभिपद्गता (क) २ यस्मिंश्च वयमायत्ता. सदा (क) ३ धन्वना (ख) ४ अत्र पूर्वं 'स चेन्द्रलोकं गतवानस्त्रहेतोर्महाबलः ।' इत्यधिकं कपुस्तके ५ सत्ता इवाभवं (क)

प्रियवादिनमक्षुद्रं दयायुक्तमतन्द्रितम् ॥ ४९
अस्ति राजा मया कश्चिदल्पभाग्यतरो भुवि ।
भवता दृष्टपूर्वो वा श्रुतपूर्वोऽपि वा क्वचित् ? ॥ ५०
न मत्तो दुःखिततरः पुमानस्तीति मे मतिः ॥ ५१

बृहदश्व उवाच—
यद्ब्रवीषि महाराज ! न मत्तो विद्यते क्वचित् ।
अल्पभाग्यतरः कश्चित्पुमानस्तीति पाण्डव ॥ ५२

---

थाभूता न भवति सः । अनलस इत्यर्थः तम् । बीभत्सुं अर्जुनम् ( अष्टमपद्यव्याख्यायां द्रष्टव्यम् ) इतः परं पद्यचतुष्टयमधिक कपुस्तके प्रक्षिप्तमेतन्नावश्यकमिति न व्याख्यायते ।

*( ५० ) अस्तीति । अस्तीति प्रश्ने काकुः । मया सदृश इति शेषः । यद्वा मयेति पञ्चम्यर्थे तृतीया । आर्षत्वात्तु साधुः । अत एवोत्तरत्र ५२ तमे पद्ये मत्त इति पञ्चम्येवोपात्तेति । अल्पभाग्यतरः अतिशयेन अल्पभाग्यः । अतिशायने तरप् । भवति ह्येषोऽद्व्यर्थोपपदेऽपि । 'नैर्देशिकाना वार्त्ततरका' इति भाष्यप्रयोगात् । राजा भवता दृष्टपूर्वः पूर्वं दृष्टः । श्रुतपूर्वः पूर्वं श्रुतः । 'भूतपूर्वे चरट्' इतिनिर्देशात्पूर्वपदस्य परनिपातः ।

( ५१ ) नेति । मत्त इति पञ्चम्यर्थे तसिः । दुःखिततरः अतिशयेन दुःखितः पुमान् नास्तीति मे मतिः अहं मन्य इत्यर्थः । इतः परं पद्यमेकमधिकं कपुस्तके प्रक्षिप्तत्वान्न व्याख्यायते ।

+ बृहदश्व उवाचेति । इतः परं पद्यमेकमधिकं कपुस्तके सदृश्यते आवश्यकं चैतत् । विना हि गाण्डीविना विचेतना इवास्महे इत्यभिहितं धर्मराजेन । अवश्यं चात्र किमपि सान्त्वनाय वक्तव्यं मुनिना । विना च पद्यमेतन्नैतद्घटत इति । अतश्चैतदत्रानुषञ्जनीयम् । तदर्थश्च—हे बुद्धिमतां वर त्वया विषादे खेदे मनो न कार्यं न व्यापारणीयम् । मनसि खेदो न कर्तव्य इत्यर्थः । तत्र हेतुमाह आगमिष्यतीति । बीभत्सुः अर्जुनः आगमिष्यति च अमित्रान् शत्रून् विजेष्यते पराजेष्यते । 'विपराभ्यां जेः' रित्यात्मनेपदम्

(५२) यदिति । हे महाराज ! पाण्डव 'मत्तः मत् अल्पभाग्यतरः कश्चित् पुमान् क्वचिदपि अस्तीति न विद्यते न ज्ञायते 'वेत्तेः कर्मणि लट्' इति । यद्ब्रवीषि ।

---

१ इतः परं 'इति सर्वे महेष्वास चिन्तयाना धनञ्जयम् । असन् तु विषण्णोऽहं कारणेन सहानुजः ॥ वनवासान्निवृत्तं मां पुनस्ते पापबुद्धयः । द्यूतेनैवाह्वयिष्यन्ति बलाद्दक्षेषु तद्विदः ॥ आहूतश्च पुनर्द्यूते नास्मि शक्तो निवर्तितुम् । पणे च मम नास्यर्थं धनं किंचन विद्यते । एतत्सर्वमनुध्यायंश्चिन्तयानो दिवानिशम् । न मत्तो दुःखिततरः पुमानस्तीह कश्चन ।' इत्यधिकं कपुस्तके । २ नास्ति ( क ) ३ इतः परं 'एवं ब्रुवन्तं दुःखार्तमुवाच भगवानृषिः । शोकं व्यपनुदन् राज्ञो धर्मराजस्य धीमतः ।' इत्यधिकं कपुस्तके । ४ इतः परं 'न विषादे मनः कार्यं त्वया बुद्धिमतां वर । आगमिष्यति बीभत्सुरमित्रांश्च विजेष्यते ।' इत्यधिकं कपुस्तके

अत्र ते वर्णयिष्यामि यदि शुश्रूषसेऽनघ !
यस्त्वत्तो दुःखिततरो राजाऽऽसीत्पृथिवीपते ! ॥ ५३

वैशम्पायन उवाच—
अथैनमब्रवीद्राजा ब्रवीतु भगवानिति ।
इमामवस्थां संप्राप्तं श्रोतुमिच्छामि पार्थिवम् ॥ ५४

बृहदश्व उवाच—
शृणु राजन्नवहितः सह भ्रातृभिरच्युत ! ।
यस्त्वत्तो दुःखिततरो राजासीत्पृथिवीपते ! ॥ ५५
निषधेषु महीपालो वीरसेन इति श्रुतः ।
तस्य पुत्रोऽभवन्नाम्ना नलो धर्मार्थकोविदः ॥ ५६
स निकृत्या जितो राजा पुष्करेणेति नः श्रुतम् ।

---

( ५३ ) अत्रेति । हे अनघ निष्पाप पृथिवीपते राजन् अत्रविषये यदि शुश्रूषसे श्रोतुमिच्छसि । शृणोतेः सनि 'ज्ञाश्रुस्मृदृशां सनः' इत्यात्मनेपदम् । तदा यः राजा त्वत्तो दुःखिततर आसीत् तं ते वर्णयिष्यामि कथयिष्यामीत्यर्थः ।

( ५४ ) अथेति । एनं बृहदश्वं अब्रवीत् उक्तवान् ब्रुवो लङ् । 'ब्रुव ईट्' इतीट् । इति अब्रवीदित्यनेन सबन्धः । कुतो वक्तव्यमित्याह इमामिति इमां मयानुभूयमानां अवस्थां प्राप्तं पार्थिवं पृथिव्या ईश्वरं ( राजानं ) श्रोतुमिच्छामि ।

( ५५ ) शृण्विति । अच्युत धर्मादपरिभ्रष्ट पृथिपते सार्वभौम ! एष च भाविनोऽर्थस्य निर्देशः । राजन् अवहितः सन् एकाग्रमनाः सन् भ्रातृभिः सह शृणु । यः राजा त्वत्तो दुःखितः आसीत् तमित्यर्थः ।

( ५६ ) निषधेष्विति । निषधेषु निषधनाम्नि देशे । देशसंज्ञावाचिभ्यो देशाद्युत्तरपदरहितेभ्यो बहुवचनं प्रयुज्यते । निषधदेशश्चोत्तरेण विन्ध्य विद्यते । उक्तानि ह्यतो दक्षिणतो विद्यमानानि स्थानानि दमयन्तीम्प्रति पन्थानं निर्दिशता निषधेषु वर्तमानेन नलेनैव 'एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् । अवन्तीमृष्यवन्त च समतिक्रम्य पर्वतम् । एष विन्ध्यो महाभागः पयोष्णी च समुद्रगा । ×× एष पन्था विदर्भाणामेष यास्यति कोसलान् । अतः परं च देशोऽयं दक्षिणो दक्षिणापथः ॥' इति । अवन्ती चोज्जयिनी, ऋक्षवान् दक्षिणेन ऋष्यवान्नाम पर्वतः ( अक्षांशाः २२ ° इत्यर्वाचीनाः । ) तं चातिक्रम्य विन्ध्य इत्यादिः क्रमः । ततश्चावगम्यते यद्विन्ध्यादुत्तरतोऽवन्त्याः सन्निहितस्तस्या अप्युदीचीनो निषधदेश इति । नाम्ना नलः 'नलनामेत्यर्थः । प्रकृत्यादिभ्य उपसंख्यान'मिति तृतीया । धर्मार्थकोविदः धर्मशास्त्रे अर्थशास्त्रे च पण्डितः । धर्मार्थशब्दौ तच्छास्त्रयोर्लाक्षणिकौ ।

( ५७ ) स इति । पुष्करेण नाम भ्रात्रा निकृत्या शाठ्येन विजितः स राजा सुदुःखार्तः सुतरां दुःखपीडितः सन् भार्यया सह वनवासं वने वासो

वनवासं सुदुःखार्तो भार्यया न्यवसत्सह ॥ ५७
न तस्य दासा न रथो न भ्राता न च बान्धवाः ।
वने निवसतो राजञ् शिष्यन्ते स्म कदाचन ॥ ५८
भवान् हि संवृतो वीरैर्भ्रातृभिर्देवसंनिभैः ।
ब्रह्मकल्पैर्द्विजाग्र्यैश्च तस्मान्नार्हसि शोचितुम् ॥ ५९

युधिष्ठिर उवाच—
विस्तरेणाहमिच्छामि नलस्य सुमहात्मनः ।
चरितं वदतां श्रेष्ठ ! तन्ममाख्यातुमर्हसि ॥ ६०

इत्यारण्यके पर्वणि नलोपाख्यानपर्वणि बृहदश्वयुधिष्ठिरसंवादे द्विपञ्चाशोऽध्यायः ।

## अध्यायत्रिपञ्चाशः ।



बृहदश्व उवाच—
आसीद्राजा नलो नाम वीरसेनसुतो बली ।
उपपन्नो गुणैरिष्टैरूपवानश्वकोविदः ॥ १

---

यस्मिन्कर्मणि तत्त्वया तथा । न्यवसत् । वने न्यवसदित्यर्थः । इति नः अस्माकम् । शेषे षष्ठी । अस्माभिरित्यर्थः । श्रुतम् ।

( ५८ ) त्वत्तोऽप्यसौ हीनां दशामापन्न इति प्रदर्शयितुमाह । नेति । वने निवसतः तस्य नलस्य न शिष्यन्ते स्म नावशिष्टाः । 'लट् स्मे' इति लट् ।

( ५९ ) भवानिति । हि निश्चयेन भवान् देवसंनिभैर्वीरैर्भ्रातृभिः ब्रह्मकल्पैः ब्रह्मदेवसदृशैः । ईषदसमाप्तौ कल्पप् । एष पुनः सादृश्यार्थ एव मन्यते कविभिः । अत एव च दण्डिना 'कल्पदेशीयदेश्याश्चे'त्युपमावाचकेषु प्रोक्तम् । द्विजाग्र्यैः ब्राह्मणश्रेष्ठैः । द्विजेषु ब्राह्मणादिषु त्रिषु अग्र्यैः श्रेष्ठैः ब्राह्मणैरिति वा । संवृतः परिवृतः । तस्मात् त्वमिति शेषः शोचितुं शोकं कर्तुम् नार्हसि ।

( ६० ) विस्तरेणेति । हे वदतां मध्ये वर श्रेष्ठ सुमहात्मनः अत्यन्तमुदारमनसः नलस्य ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्या द्विपञ्चाशोऽध्यायः ।

( १ ) आसीदिति । वीरसेनसुतः वीरसेनस्य नाम राज्ञः सुतः पुत्रः । नामेति प्रसिद्धौ । नल इति प्रसिद्ध इत्यर्थः । इष्टैः पूज्यैः ( अभ्यर्हणीयैः ) गुणैः । 'इष्टमीप्सिते क्रतुकर्मणि । पूज्ये प्रेयसि सत्कार' इति हैमः । उपपन्नः युक्तः रूपवान् प्रशस्तरूपः । प्राशस्त्ये मतुप् । अश्वकोविदः अश्वे अश्वशास्त्रे

---

१ शिष्यन्ति ( च ) अश्रयन्त ( क ) २ सम्मितैः ( क ) ३ अतः परं 'यज्वा दानपतिर्दक्षः सदा शीलपुरस्कृतः ।' इत्यधिकं कपुस्तके ।

अतिष्ठन्मनुजेन्द्राणां मूर्ध्नि देवपतिर्यथा ।
उपर्युपरि सर्वेषामादित्य इव तेजसा ॥ २
ब्रह्मण्यो वेदविच्छूरो निषधेषु महीपतिः ।
अक्षप्रियः सत्यवादी महानक्षौहिणीपतिः ॥ ३
ईप्सितो नरनारीणामुदारः संयतेन्द्रियः ।
रक्षिता धन्विनां श्रेष्ठः साक्षादिव मनुः स्वयम् ॥ ४
तथैवासीद्विदर्भेषु भीमो भीमपराक्रमः ।

कोविदः पण्डितः । अश्वशब्दोऽत्राश्वशास्त्रे लाक्षणिकः । अश्वविद्यावेदित्वं च नलस्य मूल एवाग्रतः स्फुटीभविष्यति । अस्ति च नलप्रणीतमश्वशास्त्रमपि।

( २ ) अतिष्ठदिति । यथा देवपतिरिन्द्रः तथा मनुजेन्द्राणां राज्ञां मूर्ध्नि अतिष्ठत् तेषां शिरसा समाननीयोऽभूत् वन्दनीय आसीदित्यर्थः । आदित्यः सूर्य इव तेजसा सर्वेषां उपर्युपरि ऊर्ध्वमूर्ध्वं अतिष्ठत् । सर्वोत्कृष्ट आसीदित्यर्थः अत्र च ' उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।द्वितीयाऽऽम्रेडितान्तेषु' इति द्वितीया न भवति । तत्र ' उपर्यध्यधसः सामीप्ये ' इति सामीप्यार्थे एव कृतद्विर्वचनस्योपरिशब्दस्य ग्रहणात् । अत्र पुनर्नास्ति सामीप्यसबन्ध इति।

( ३ ) ब्रह्मण्य इति । ब्रह्मणे ब्राह्मणाय हितः । ' राजन्यवमापतिसवृषब्रह्मणश्च ' इति यत् । ' ये चाभावकर्मणो: ' इति प्रकृतिभावान्न टिलोपः । महान् अक्षौहिणीपतिः । अक्षौहिणीपतिषु महानित्यर्थः । अक्षौहिणी च सेनाविशेषः तस्याः पतिः पाता । अक्षौहिण्या सैन्यप्रमाणं तु ' अक्षौहिण्याः प्रमाणं तु खाङ्गाष्टैकद्विकैः ( २१८७० ) गजैः, । रथैरेतैः ( २१८७० ), हयैस्त्रिघ्नैः ( ६५६१० ), पञ्चघ्नैश्च ( १०९३५० ) पदातिभिः ॥ ' इति । सर्वमेकीकृतं २१८७०० मितं भवति । यथा महाकाव्यस्य प्रणेता महाकविरेव महत्या अक्षौहिण्याः पतिर्महानक्षौहिणीपतिरिति स्वीकारे तु ' राद्वय निधिवेदाक्षिचन्द्राश्वाभिद्विपाद्रिभिः । महाक्षौहिणिका प्रोक्ता सङ्ख्यागणितकोविदैः।' इति सैन्यप्रमाणं बोध्यम् । तच्च १३२१२४९०० मितं संपद्यते । ऊढः समूहोऽस्त्यस्यामूहिनी अक्षाणां रथचक्राणां लक्षणया रथानामूहिनी रथसमूहवतीत्यर्थः । सेनायामयं रूढः शब्दः ।

( ४ ) ईप्सित इति । नरनारीणां, लघ्वक्षरं पूर्वमिति नरशब्दस्य पूर्वं प्रयोगः । ईप्सितः आप्तुमिष्टः । आप्नोतेः ' सनन्ताभिष्ठा । ' आप्ज्ञप्यृधामीत् ' इति ईत्वम् ' अत्र लोपोऽभ्यासस्य ' त्यभ्यासलोपश्च । संयतेन्द्रियः । निगृहीतेन्द्रियः धन्विनां प्रशस्तधनुष्मतां मध्ये । अत्रात्वादन्यशब्दान्मत्वर्थे इनिः । निर्धारणे षष्ठी । साक्षात् स्वयं मनुरिव वर्तमानः । मनुश्च यथोक्तगुणानां मानयिता स राजा ।

( ५ ) तथैवेति । विदर्भेषु विदर्भनाम्नि देशे । एष च प्रदेशः संप्रति

१ रर ( क. म. न. थ. )

शूरः सर्वगुणैर्युक्तः प्रजाकामः स चाप्रजः ॥ ५
स प्रजार्थे परं यत्नमकरोत्सुसमाहितः ।
तमभ्यगच्छद्ब्रह्मर्षिर्दमनो नाम भारत ! ॥ ६
तं स भीमः प्रजाकामस्तोषयामास धर्मवित् ।
महिष्या सह राजेन्द्र ! सत्कारेण सुवर्चसम् ॥ ७
तस्मै प्रसन्नो दमनः सभार्याय वरं ददौ ।
कन्यारत्नं कुमारांश्च त्रीनुदारान्महायशाः ॥ ८
दमयन्तीं दमं दान्तं दमनं च सुवर्चसम् ।
उपपन्नान् गुणैः सर्वैर्भीमान् भीमपराक्रमान् ॥ ९
दमयन्ती तु रूपेण तेजसा यशसा श्रिया ।
सौभाग्येषु च लोकेषु यशः प्राप सुमध्यमा ॥ १०

---

वऱ्हाड ( Berar ) इत्याख्यायत इत्याहुः । अस्य च मर्यादा शक्तिसगमतन्त्रे यथा ' भद्रकालीमहापूर्वे रामदुर्गाच पश्चिमे । वैदर्भदेशो देवेशि' इति । भीम एतन्नामा राजा । प्रजाकामः प्रजाना मूर्तो मनोरथ इव वर्तमानः । यद्वा प्रजाकामः सततीच्छुः । अप्रजः सतानशून्यः आसीत् । अत्र ' नित्यमसिच् प्रजामेधयो ' रित्यसिचोऽभाव आर्ष. ।

( ६ ) स इति । प्रजार्थे सन्तत्यर्थम् । सुसमाहित· अत्यन्त समाधानयुक्तः। दमनो नाम दमन इति प्रसिद्धः । त राजान भीमम् ।

( ७ ) तमिति । त दमन धर्मवित् धर्मज्ञ. एतेन सतोषणे धर्मातिक्रमाभावो द्योत्यते । महिष्या पट्टराज्ञ्या सह । ' कृताभिषेका महिषी ' त्यमरः । सत्कारेण साधनभूतेन । सुवर्चस अत्यन्ततेजस्विनम् ।

( ८ ) तस्मा इति । प्रसन्नो महायशाः स दमनः सभार्याय तस्मै राज्ञे कन्यारत्न श्रेष्ठा कन्या उदारान् उत्कृष्टान् त्रीन् कुमारान्पुत्रांश्च वर ददौ। एतच्चतुष्टयप्राप्तिरूपमेक वर ददावित्यर्थः ।

( ९ ) अपत्याना नामान्याह दमयन्तीमिति । उपपन्नानित्यादिपुत्रविषये दमयन्तीविषये त्वागामिनि पद्ये वक्ष्यते । भीमान् शत्रुभयङ्करान् ।

( १० ) दमयन्तीति । सुमध्यमा शोभनो मध्यमो मध्य यस्याः सा दमयन्ती रूपेण स्वरूपेण तेजसा कान्त्या यशसा कीर्त्या । अत्र वपुषेति कपुस्तकधृत. पाठः । स चैतदपेक्षया रमणीयः प्रतिभाति । यशः प्रापेत्युत्तरश्लोकेः । श्रिया लक्ष्म्या । सर्वत्रापि करणे तृतीया । सौभाग्येषु शोभनदैवविषये च सौभाग्येनेति कपुस्तकपाठः साधीयान् । पूर्वं न तृतीययैवोपक्रमात् । भाग्यशब्दश्च बहुवचनान्तोऽपि प्रयुज्यते कविभिः ' सा निन्दन्ती स्वानि भाग्यानि बाले' त्यादौ ( शाकुन्तले ) । लोकेषु भुरादिषु भुवनेषु, जनेषु वा यशः प्राप ।

---

१ वपुषा ( क ) २ सौभाग्येन ( क. न. च. म. )

अथ तां वयसि प्राप्ते दासीनां समलङ्कृतम् ।[1]
शतं शतं सखीनां च पर्युपासच्छचीमिव ॥ ११
तत्र स्म राजते भैमी सर्वाभरणभूषिता ।
सखीमध्येऽनवद्याङ्गी विद्युत्सौदामिनी यथा ॥ १२
अतीव रूपसम्पन्ना श्रीरिवायतलोचना ।
न देवेषु न यक्षेषु तादृग् रूपवती क्वचित् ॥ १३
मानुषेष्वपि चान्येषु दृष्टरूपाथ वा श्रुता ।
चित्तप्रसादनी बाला देवानामपि सुन्दरी ॥ १४
नलश्च नरशार्दूलो लोकेष्वप्रतिमो भुवि ।

---

( ११ ) अथेति । वयसि तारुण्ये प्राप्ते सति । समलङ्कृतं सम्यगलङ्कृतं मनोरहैरलङ्कारैर्युक्तम् । दासीनां शतं सखीनां च शतं कर्तृ शचीमिन्द्राणीमिव । एतेन चारुतातिशयो व्यज्यते। पर्युपासत् उपास्ते स्म । तस्याः सेवा चक्र इत्यर्थः । दैवादिकादस्यतेः पर्युपपूर्वाल्लुङि 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङ् । धातूनामनेकार्थत्वात्सेवायां वृत्तिः । 'पर्युपास्ते' इति कपुस्तकपाठस्तु साधीयान् । लट्पुनस्तत्रापि कथंचिदेवोपपादयितुं शक्यः ।

( १२ ) तत्रेति । अनवद्याङ्गी न अवद्यानि गर्हणीयानि अङ्गानि यस्यास्तथाभूता शुभाङ्गी । सर्वाभरणभूषिता सर्वैराभरणैर्भूषिता भैमी भीमस्य राज्ञः पुत्री दमयन्ती तत्र सखीमध्ये विद्युत् विशेषेण द्योतमाना सौदामिनी तडिदिव । राजते स्म अशोभत । विद्युदिति विपूर्वात् द्योततेः कर्तरि क्विप् । नीलकण्ठस्तु 'सुष्ठु जगतो जीवनं ददति ते सुदामानो मेघास्तेषां समूहः सौदामनः प्रावृट्कालस्तत्सबन्धिनी' ति प्राह । चतुर्भुजोक्तोऽयमस्मदादृत एवार्थः क्लिष्टत्वाभावाज्ज्यायान् ।

( १३ ) अतीवेति । श्रीः लक्ष्मीरिव आयतलोचना आयते दीर्घे लोचने नेत्रे यस्यास्तथाभूता । तादृक् सेव दृश्यते तथाभूता । तादृशीत्यर्थः । दृशेः क्विन् । तादृगिति रूपविशेषणं वा । रूपवतीत्यस्य दृष्टरूपेत्युत्तरेण संबन्धः ।

( १४ ) मानुषेष्विति । अन्येषु गन्धर्वोरगादिषु । दृष्टरूपा दृष्टं रूपं यस्यास्तथाभूता । दृष्टपूर्वेति कपुस्तकपाठस्तु साधीयान् । पूर्वं दृष्टेत्यर्थः । चित्तप्रसादनी चित्तस्य प्रसादे प्रसन्नतायां साधनभूता । प्रपूर्वात्सदेः करणे ल्युट् । टित्वान् ङीप् । देवानामपि देवानां मध्येऽपि । निर्धारणे षष्ठी । सुन्दरी सौन्दर्यशालिनी । बाला षोडशवर्षा स्त्रीति कल्पद्रुमः ।

( १५ ) नल इति । नरशार्दूलो नरश्रेष्ठः । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः ।' इत्यमरः । नलो-

---

१ दासीं सखीनां च तथा पर्युपासे ( क ) २ पूर्वा ( क, ख, ग, न. ) ३ प्रसादिनी ( क ) ४ स्वर्गे-( क ) पुंसि-( ख )

कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ १५
तस्याः समीपे तु नलं प्रशशंसुः कुतूहलात् ।
नैषधस्य समीपे च दमयन्तीं पुनः पुनः ॥ १६
तयोरदृष्टः कामोऽभूच्छृण्वतोः सततं गुणान् ।
अन्योऽन्यं प्रति कौन्तेय ! स व्यवर्धत हृच्छयः ॥ १७
अशक्नुवन्नलः कामं तदा धारयितुं हृदा ।
अन्तःपुरसमीपस्थे वन आस्ते रहोगतः ॥ १८
स ददर्श ततो हंसान् जातरूपपरिष्कृतान् ।
वने निवसतां तेषामेकं जग्राह पक्षिणम् ॥ १९
ततोऽन्तरिक्षगो वाचं व्याजहार नलं तदा ।

पि भुवि लोकेषु जनेषु अप्रतिमः नास्ति प्रतिमोपमा यस्य तथाभूतः । रूपेण मूर्तिमान् स्वय कन्दर्पो मदन इव अभवत् ।

( १६ ) तस्या इति । तस्या दमयन्त्याः समीपे । तुः पादपूणार्थः । निश्चयार्थो वा । निपातानामनेकार्थत्वात् । नल प्रशशसुः प्रशसितवन्तः । वार्ताहरा इति कर्तृपदमत्र शिष्यते ।

( १७ ) तयोरिति । सतत गुणान् अन्योन्ययोरित्यर्थात् शृण्वतोः तयोः दमयन्तीनलयोः । अधिकरणे सप्तमी । अन्योन्य प्रति परस्परस्य विषये अदृष्टः अप्रकटरूपः कामो मदनः अभूत् उत्पन्न. । निरुपसर्गस्यापि भवतेः सोपसर्गवदर्थप्रतीतिः यागात्स्वर्गो भवतीत्यादिवत् । कामः अभिलाषो वा । अत्रार्थे च तयोरिति षष्ठी । न पुनरसावर्थो मनोरमः । हृच्छय इत्युत्तरत्रोक्तेः । स हृच्छयो मदनः व्यवर्धत विशेषेण अवर्धत । 'विषमायुधो दर्पककामहृच्छयाः ।' इति मदनपर्यायेषु हैमः ।

( १८ ) अशक्नुवन्निति । नल. कर्ता हृदा मनसा करणभूतेन । कामं धारयितु नियन्तु अशक्नुवन् अन्त' पुरसमीपस्थे अन्तःपुर नृपस्य स्त्रीमन्दिर तस्य समीपवर्तिनि । ' सुपि स्थ ' इति क' । वने उपवने । रहोगतः रहसि निर्जनप्रदेशे विद्यमानः । आस्ते उपाविशत् इत्यर्थः ।

( १९ ) स इति । ततः स नलः जातरूपपरिष्कृतान् जातरूपेण सुवर्णेन परिष्कृतान् विभूषितान् हेममयानित्यर्थः । ' चामीकर जातरूपम् ' इतिसुवर्णपर्यायेष्वमरः । ( जात प्रशस्त रूप यस्य ) वने उद्याने निवसतां तेषा मध्ये एक पक्षिण जग्राह गृहीतवान् ।

( २१ ) तत इति । ततोऽनन्तर अन्तरिक्षगः खगो हंसः वाच व्याजहार उक्तवान् । व्याङ्पूर्वो हरतिर्वचने । द्विकर्मकश्चायम् । वचनमाह

१ निषधस्य (च) २ परिच्छदान् (क) ३ अत पर ' अन्यं तदा भयोद्विग्ना वृक्षमारुह्य पक्षिणः । समूचुर्नैषध वाक्य भो भो राजन् शृणु प्रभो ॥ न हन्तव्यो न हन्तव्यस्त्वयाय खग उत्तमः । अस्माक सोदरो भ्राता कनीयांश्चापि पार्थिव ॥ ' इत्यधिक नपुस्तके ।

हन्तव्योऽस्मि न ते राजन् ! करिष्यामि तव प्रियम् ॥ २०
दमयन्तीसकाशे त्वां कथयिष्यामि नैषध ! ।
यथा त्वदन्यं पुरुषं न सा मंस्यति कर्हिचित् ॥ २१
एवमुक्तस्ततो हंसमुत्ससर्ज महीपतिः ।
ते तु हंसाः समुत्पत्य विदर्भानगमंस्ततः ॥ २२
विदर्भनगरीं गत्वा दमयन्त्यास्तदान्तिके ।
निपेतुस्ते गुरुत्मन्तः सा ददर्श च तान् गणान् ॥ २३
सा तानद्भुतरूपान्वै दृष्ट्वा सखिगणावृता ।

हन्तव्य इति । हे राजन् ते त्वया । अयं च ते शब्दो निपातः । 'तेमेशब्दौ निपातौ त्वयामयेत्यर्थे' इतिवामनवचनात् हन्तव्यः हन्तुं योग्यः न अस्मि । यद्वा अस्मीत्यहमर्थे तिङन्तप्रतिरूपकमव्ययम् । अस्मि अहमित्यर्थः । कुत इत्याह करिष्यामीति । अहं तव प्रियं करिष्यामि तस्मान्न त्वया हन्तव्य इत्यर्थः ।

( २१ ) किं तत्प्रियमित्याह दमयन्तीति । नैषध निषधदेशाधिपते नल ! तथेति शेषः । त्वां दमयन्त्याः सकाशे तथा कथयिष्यामि वर्णयिष्यामि यथा सा त्वदन्यं त्वत्तो भिन्नं पुरुषं कर्हिचित् कदाचिदपि न मंस्यति न मंस्यते न बहुमानविषयं करिष्यतीत्यर्थः । अनुदात्तेत्वलक्षणस्यात्मनेपदस्या नित्यत्वान्नात्मनेपदम् ।

( २२ ) एवमिति । एवमुक्तप्रकारेण उक्तो महीपतिः राजा नलः हंसं उत्ससर्ज । मुक्तवान् ततः ते, बहूनामेव हंसानां तत्रोपस्थानाद्बहुवचनम् । समुत्पत्य उड्डीय । अगमन् गतवन्तः गमेर्लुङ् ऌदित्वान्च्लेरङ् ।

(२३) विदर्भेति । विदर्भनगरीं विदर्भाणां नगरीं राजधानीं कुण्डिनसंज्ञां गत्वा तदा ते गरुत्मन्तः गरुतः पक्षाः सन्त्येषां ते पक्षिणो हंसाः । गरुच्छब्दान्मतुप् । 'प्रत्यये भाषायां नित्यं' मित्यनुनासिकस्तु न भवति यवादिगणे 'गरुत्' इति तकारनिपातनात् । अत एव चानुनासिकाभावे न जश्त्वमपि । यवादित्वादेव च न 'झय' इति मतोर्वः । अयवादेरिति पर्युदासात् । दमयन्त्या अन्तिके समीपप्रदेशे निपेतुः अवतीर्णाः । सा दमयन्ती च तान् गणान् पक्षिसंघान् ददर्श । अत्र खगानिति पाठस्तु साधुतरः ।

( २४ ) सेति । सखिगणावृता सखीनां गणेन समुदायेन आवृता परिवृता । 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति च्छान्दसं सखीशब्दस्य ह्रस्वत्वम् । अद्भुतरूपान् अद्भुतं आश्चर्यजनकं रूपं येषां तथाभूतान् । अद्भुतानिति हेतुहेतुमतोरभेदोपचारात् । खगमान् खेन आकाशेन गमो गमनं येषां तान्

१ न च सा कामयिष्यति (ग) २ अतः परं 'तव चैव यथा भार्या भविष्यति तथाऽनघ । विधास्यामि नरव्याघ्र सोऽनुजानातु मां भवान् ॥' इत्यधिकं कपुस्तके। चपुस्तके तु 'तवैव च यथा भार्या भविष्यति तथा वयम् । विधास्यामो नरव्याघ्र ! स मामुत्स्रष्टुमर्हसि । ' इति । ३ तदन्तिके ( च ) ४ ददर्शाथ (क) ददर्शाथ च ( च ) ५ खगान् ( म. क. च. )

दृष्ट्वा महीं तु खगमांस्त्वरमाणोपचक्रमे ॥ २४
अथ हंसा विससृपुः सर्वतः प्रमदावने।
एकैकशस्तदा कन्यास्तान् हंसानभ्युपाद्रवन् ॥ २५
दमयन्ती तु यं हंसं समुपाधावदन्तिके।
स मानुषीं गिरं कृत्वा दमयन्तीमथाब्रवीत् ॥ २६
दमयन्ति! नलो नाम निषधेषु महीपतिः।
अश्विनोः सदृशो रूपे न समास्तस्य मानुषाः।
कन्दर्प इव रूपेण मूर्तिमानभवत्स्वयम् ॥ २७
तस्य वै यदि भार्या त्वं भवेथा वरवर्णिनि!।
सफलं ते भवेज्जन्म रूपं चेदं सुमध्यमे! २८
वयं हि देवगन्धर्वमनुष्योरगराक्षसान्।
दृष्टवन्तो न चास्माभिर्दृष्टपूर्वस्तथाविधः ॥ २९
त्वं चापि रत्नं नारीणां नरेषु च नलो वरः।

---

पक्षिणो हंसान्। त्वरमाणा त्वरां कुर्वती। उपचक्रमे आरम्भं कृतवती। उप-पूर्वात्क्रमेरारम्भार्थाल्लिट्। 'प्रोपाभ्यां समर्थाभ्यां' मित्यात्मनेपदम्।

(२५) अथेति। प्रमदावने प्रमदानां तरुणीनां वने उद्याने। सर्वतः सर्वत्र। आद्यादित्वात्सप्तम्यर्थे तसिः। विससृपुः प्रासर्पन्। सृपेर्विपूर्वाल्लिट्। कन्या दमयन्तीप्रभृतयः एकैकशः एकैकान् हंसान्। 'संख्यैकवचनाच्च वीप्सायामि' ति शस्। समुपाद्रवन् सत्वरमुपजग्मुः।

(२६) दमयन्तीति। अन्तिके समीपे वर्तमानं यं हंसं उपाधावत् सत्वरमुपजगाम। स मानुषीं मनुष्यसंबन्धिनीं गिरं वाणीं कृत्वा। मानुष्या वाचाऽब्रवीदित्यर्थः।

(२७) हंसस्य वाचमाह दमयन्तीति। रूपे स्वरूपविषये अश्विनोः अश्विनीकुमारयोर्नाम देवानां वैद्ययोः सदृशस्तुल्यः। तौ हि रूपवत्तमावाख्यायेते। मानुषास्तस्य नलस्य समा न पुनः प्रशंसति कन्दर्प इति। रूपेण सौन्दर्येणोपलक्षितः सौंदर्यविशिष्ट इत्यर्थः। उपलक्षणे तृतीया। 'रूपं स्वभावे सौंदर्ये' इति मेदिनी। स्वयं कन्दर्पो मदनः मूर्तिमान् शरीरवान् शरीरधारी सन् अभवत् अवतीर्ण इव।

(२८) तस्येति। हे वरवर्णिनि! वरः श्रेष्ठो वर्णोऽस्यस्यास्तथाभूते दमयन्ति। त्वमिति कर्तृपदशेषः। तस्य नलस्य भार्या त्वं पत्नीत्वं यदि भवेथाः प्राप्नुयाः। भूप्राप्तावात्मनेपदी। तथा ह्युक्तं दैवे 'सत्तायां भवति, प्राप्तौ णिचि भावयते तङि। भवते शपि तत्रैव' इति। तदेति शेषः हे सुमध्यमे ते तव इदं जन्म रूपं च सफलं भवेत्।

(२९) पुनरपि नलं प्रशंसितुमाह वयमिति। हि निश्चयेन तथाविधो नलसदृशः न दृष्टपूर्वः पूर्वं न दृष्ट इत्यर्थः।

(३०) नलपरिणयनस्यानुरूपत्वमाह त्वमिति। चापीति चार्थे त्वं नारीणां मध्ये रत्नं श्रेष्ठा। नरेषु मध्ये च नलो वरः श्रेष्ठः। ततः एव त्वया

विशिष्टाया विशिष्टेन संगमो गुणवान् भवेत् ॥ ३०
एवमुक्ता तु हंसेन दमयन्ती विशांपते !
अब्रवीत्तत्र तं हंसं त्वमप्येवं नलं वद ॥ ३१
तथेत्युक्त्वाण्डजः कन्यां विदर्भस्य विशांपते ! ।
पुनरागम्य निषधान्नले सर्वं न्यवेदयत् ॥ ३२
इति श्रीमति महाभारते वनपर्वणि नलोपाख्यानपर्वणि
हंसवाक्ये त्रिपञ्चाशोऽध्यायः ।

---

## चतुष्पञ्चाशोऽध्यायः ।

बृहदश्व उवाच—
दमयन्ती तु तच्छ्रुत्वा वचो हंसस्य भारत ! ।
ततःप्रभृति न स्वस्था नलं प्रति बभूव सा ॥ १
ततश्चिन्तापरा दीना विवर्णवदना कृशा ।
बभूव दमयन्ती तु निःश्वासपरमा तदा ॥ २

---

नियतामिति भावः । यतः विशिष्टायाः सर्वाभ्योऽपि विशेषवत्याः सर्वोत्कृष्टाया इत्यर्थः विशिष्टेन सर्वोत्तरेण सह संगमो योगः गुणवान् शोभनः भवेत् ।

( ३१ ) एवमिति । बृहदश्वोक्तिरियम् । विशां नराणां पते पालक राजन् युधिष्ठिर ! तत्रोद्याने तं हंसं अब्रवीत् । वचनमाह त्वमिति । त्वं नलमपीति योजना । एवं यथा मामुक्तवानसि तथेत्यर्थः ।

( ३२ ) तथेति । अण्डजः पक्षी हंसः कर्ता । विदर्भस्य विदर्भदेशाधिपतेः । आर्षस्तद्धितलुक् । कन्यां दमयन्तीम् । तथेत्युक्त्वा पुनः निषधान् आगम्य सर्वं वृत्तं नले नलायेत्यर्थः न्यवेदयत् निवेदितवान् ।

इति नलोपाख्यानव्याख्यायां बालबोधिन्यां त्रिपञ्चाशोऽध्यायः ।

( १ ) दमयन्तीति । हे भारत भरतकुलोत्पन्न युधिष्ठिर ! हंसस्य तद्वचः श्रुत्वा वर्तमानेति शेषः सा दमयन्ती ततः प्रभृति तस्मात्कालादारभ्य नलं प्रति नलविषये स्वस्था स्वास्थ्यवती न बभूव । नलेच्छया कामविकारेण व्याकुलान्तरङ्गासीदित्यर्थः ।

( २ ) एतदेव विस्पष्टयति तत इति । ततः अस्वास्थ्यात् हेतोः तदा दमयन्ती चिन्तापरा चिन्ता स्वाभीष्टवस्तुध्यानमेव परा प्रधाना यस्यास्तथाभूता । प्राधान्यतश्चिन्तामेव कुर्वतीत्यर्थः । चिन्तालक्षणं तु 'ध्यानं चिन्ता हितानाप्तेः शून्यताश्वासतापकृत् ।' इति दर्पणे । दीना दैन्यवती । दैन्यं च निस्तेजस्त्वम् । तदाहुः 'दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ।' इति दर्पणकाराः । विवर्णवदना विवर्णं विभिन्नवर्णं कान्तिशून्यं वा वदनं यस्यास्तथाभूता । निःश्वासपरमा निःश्वास एव परमः प्रधानो यस्यास्तथाभूता मुहुर्मुहुर्निःश्वसतीत्यर्थः । बभूव ।

---

१ सं हृत्तं ( ष ) २ वैदर्भ्यु ( घ ) ३ तदा ( क ) ४ निःश्वासा ( न )

ऊर्ध्वदृष्टिर्ध्यानपरा बभूवोन्मत्तदर्शना ।
पाण्डुवर्णा क्षणेनाथ हृच्छयाविष्टचेतना ॥ ३
न शय्यासनभोगेषु रतिं विन्दति कर्हिचित् ।
न नक्तं न दिवा शेते हाहेति रुदती पुनः ॥ ४
तामस्वस्थां तदाकारां सख्यस्ता जज्ञुरिङ्गितैः ।
ततो विदर्भपतये दमयन्त्याः सखीजनः ॥
न्यवेदयत्तामस्वस्थां दमयन्तीं नरेश्वर ! ।
तच्छ्रुत्वा नृपतिर्भीमो दमयन्तीसखीगणात् ॥ ६
चिन्तयामास तत्कार्यं सुमहत्त्वां सुतां प्रति ।
किमियं दुहिता मेऽद्य नातिस्वस्थेव लक्ष्यते ॥ ७
स समीक्ष्य महीपालः स्वां सुतां प्राप्तयौवनाम् ।

( ३ ) ऊर्ध्वेति । अथ क्षणेन दमयन्तीत्सनुवर्तते । ऊर्ध्वदृष्टिः ऊर्ध्वा ऊर्ध्वभागासगिनी दृष्टिर्यस्यास्तथाभुता । तत्र हेतुः ध्यानपरेति । उन्मत्तदर्शना उन्मत्ताया इव दर्शन साक्षात्कारो यस्यास्तथाभुता । उन्मत्तवद्दृश्यमानेत्यर्थः। हृच्छयाविष्टचेतना हृच्छयेन मदनेन आविष्टा आसमन्तात् कृतप्रवेशा चेतना बुद्धिर्मन इति यावत् यस्यास्तथाभूता । ' प्रतिपज्शप्तिचेतनाः ' इति बुद्धिपर्यायेष्वमरः ।

( ४ ) नेति । शय्यासनभोगेषु शय्या चासन च भोगा उपभोग्यवस्तुस्वीकाराश्च । तेषु रतिं प्रीतिं न विन्दति न प्राप्नोति । स्मेत्यध्याहार्यम् । एतेनारतिर्नाम सात्विको भाव उक्तः । निद्रानाशमाह नेति । नक्त रात्रौ दिवा दिवसे । शेते निद्राति स्म । हाहेति कृत्वेतिशेषः । पुनः वारवारमित्यर्थः । मुहुरितिपाठस्तु साधुः ।

( ५ ) तामिति । ता. सख्यः कन्यः अस्वस्था तत एव च तदाकारा स आकारः स्वरूप यस्यास्तथाभूता ता इङ्गितैः हृद्गतभावानुरूपाभिस्तदुन्नयनक्षमाभिश्चेष्टाभिः साधनभूताभिः । जज्ञु ः ज्ञानवत्यः । तस्याश्चेष्टाभिराशय ज्ञातवत्य इत्यर्थः ।

( ६ ) न्यवेदयदिति । नरेश्वर हे युधिष्ठिर दमयन्त्याः सखीगणात् तच्छ्रुत्वेत्यस्य चिन्तयामासेत्युत्तरेण सबन्धः ।

( ७ ) चिन्तायमासेति । स्वा स्वीयां सुतां प्रति सुताविषये तत् सखीभिर्निवेदितं सुमहत्कार्यं अस्वास्थ्यरूप अवस्थान्तर चिन्तयामास । तद्विषयिणीं चिन्ता कृतवानित्यर्थः । चिन्तामाह किमिति । अद्य इयं बुद्धिस्था मे दुहिता पुत्री किं किमर्थम् नातिस्वस्थेव लक्ष्यते दृश्यते ।

( ८ ) स इति । सः चिन्तयमानः स्वा सुतां प्राप्तयौवनां तारुण्यमा-

१ मुहुः ( क म ) २ किमर्थं ( च. न. क. म. )

देवराजस्य भवनं विविशाते सुपूजितौ ॥ १४
तावर्चयित्वा मघवा ततः कुशलमव्ययम् ।
पप्रच्छानामयं चापि तयोः सर्वगतं विभुः ॥ १५

नारद उवाच—
आवयोः कुशलं देव ! सर्वत्रगतमीश्वर ! ।
लोके च मघवन्कृत्स्ने नृपाः कुशलिनो विभो ! ॥ १६

बृहदश्व उवाच—
नारदस्य वचः श्रुत्वा पप्रच्छ बलवृत्रहा ।
धर्मज्ञाः पृथिवीपालास्त्यक्तजीवितयोधिनः ॥ १७
शस्त्रेण निधनं काले ये गच्छन्त्यपराङ्मुखाः ।
अयं लोकोऽक्षयस्तेषां यथैव मम कामधुक् ॥ १८
क नु ते क्षत्रियाः शूरा न हि पश्यामि तानहम् ।
आगच्छतो महीपालान्दयितानतिथीन्मम ॥

नारद उवाच—
एवमुक्तस्तु शक्रेण नारदः प्रत्यभाषत ॥ १९

---

र्षिः । तदाहुः ' नारं पानीयमित्युक्तं तत्पितृभ्यः सदा भवान् । ददाति तेन ते नाम नारदेति भविष्यति । ' इति । पर्वतः एतत्संज्ञो देवर्षिः । महाप्राज्ञौ महाविद्वांसौ । प्रज्ञ एव प्राज्ञः । प्रज्ञादित्वात्स्वार्थेऽण् । देवराजस्य देवानां राज्ञ इन्द्रस्य । राजाहःसखिभ्य इति टच् । विविशाते प्रविष्टवन्तौ । आर्षमात्मनेपदम् ।

( १५ ) ताविति । मघवा इन्द्रः कर्ता तौ नारदपर्वतौ । अव्ययं नास्ति व्ययो नाशो यस्य तथाभूतं अविच्छिन्नमित्यर्थः । कुशलं क्षेमम् । कुशलस्याक्षीणतां पप्रच्छेत्यर्थः । विभुः प्रभुः त्रैलोक्याधिपतिरित्यर्थः । एतेन सर्वगतानामयप्रश्नस्यौचित्यं द्योत्यते । सर्वगतं सर्वत्र लोकेषु विद्यमानं अनामयं आमयानां रोगाणामभावम् । तयोरिति शेषे षष्ठी तावित्यर्थः । पप्रच्छ ।

( १६ ) आवयोरिति । सर्वत्रगतं सर्वविषयसम्बन्धि । प्रयुज्यते च गतशब्दः सम्बन्धेपि यथा ' भवत्योः सङ्गीतं ' ' इतोगतं वृत्तं ' मित्यादौ ( शाकुन्तले ) । कृत्स्ने सकले लोके ।

( १७–१९ ) नारदस्येति । बलवृत्रहा बलं वृत्रं च नाम दैत्यं हन्ति तथाभूत इन्द्रः । हन्तेः क्विप् । पप्रच्छ । प्रश्नमाह धर्मज्ञा इति । धर्मज्ञाः ' युद्धे चाप्यपलायनं ' मित्येवंलक्षणमात्मनो धर्मं जानानाः । त्यक्तं जीवितं स्वीयं यस्मिन् कर्मणि तद्यथा तथा योद्धुं शीलं येषां ते । युधेस्ताच्छीलिको णिनिः । स्वजीवितनिरपेक्षं युध्यमाना इत्यर्थः । ये अपराङ्मुखा युद्धादित्यर्थात् । काले सति प्रसङ्गे शस्त्रेण निधनं मरणं गच्छन्ति तेषां यथैव मम तथा, कामधुक् कामान् दोग्धि पूरयति तथाभूतः । इष्टप्रद इत्यर्थः । दुहेः क्विप् ।

१ मूलपुस्तके नास्ति.

शृणु मे मघवन्येन न दृश्यन्ते महीक्षितः ॥
विदर्भराज्ञो दुहिता दमयन्तीति विश्रुता ।
रूपेण समतिक्रान्ता पृथिव्यां सर्वयोषितः ॥ २०
तस्याः स्वयंवरः शक्र ! भविता नचिरादिव ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २१
तां रत्नभूतां लोकस्य प्रार्थयन्तो महीक्षितः ।
काङ्क्षन्ति स्म विशेषेण बलवृत्रनिषूदन ॥ २२
एतस्मिन् कथ्यमाने तु लोकपालाश्च साग्निकाः ।
आजग्मुर्देवराजस्य समीपममरोत्तमाः ॥ २३
ततस्ते शुश्रुवुः सर्वे नारदस्य वचो महत् ।
श्रुत्वैव चाब्रुवन्हृष्टा गच्छामो वयमप्युत ॥ २४
ततः सर्वे महाराज ! सगणाः सहवाहनाः ।

---

अयं लोक इन्द्रलोकः अक्षयः शाश्वतिक इत्यर्थः। दयितान् प्रियान् अतिथीन् प्राघुणिकान् । क्वनु सन्तीति प्रश्नः । इन्द्रेण उक्तः पृष्टः । प्रत्यभाषत उत्तरं दत्तवान् ।

( २० )शृण्विति । हे मघवन् येन महीक्षितः मह्यां क्षयन्ति ईशते महीक्षितः पृथ्वीश्वरा राजानः । 'क्षि क्षयैश्वर्ययोः' इत्यतः क्विप् । 'ह्रस्वस्य पिति कृती'ति तुक् च । येन कारणेन न दृश्यन्ते तादिति शेषः । मे मत्त इत्यर्थः, निपातानामनेकार्थत्वात् । विदर्भराज्ञः विदर्भदेशाधिपतेः । समासान्तविधेर नित्यत्वान्न टच् । रूपेण सौन्दर्येण कारणभूतेन सर्वयोषितः सर्वाः स्त्रियः अतिगता अतिक्रान्ता । सर्वा अपि अतिशय्य वर्तमानेत्यर्थः । अस्तीति शेषः ।

( २१ )तस्या इति । स्वयंवरः स्वयं व्रियते पतिरस्मिन्कन्यया तथाभूतो विवाहविधिः । नचिरादितः प्रायेणाल्पेनैव कालेन । सर्वशः सर्वे ।

( २२ ) तामिति । हे बलवृत्रनिषूदन । बलं वृत्रं च दानवं निषूदयति नाशयति तथाभूत इन्द्र । महीक्षितो राजानो लोकस्य रत्नभूतां रत्नसदृशीम् । रत्नवल्लोकमलङ्कुर्वतीमित्यर्थः । प्रार्थयन्तः याचमानाः सन्तीति शेषः । अर्थ यतेरागर्वीयत्वेनात्मनेपदित्वेऽपि निवृत्तप्रेषणाण्णिजन्तुमाश्रित्य परस्मैपदम् । तत एव च शता साधुः । स्मेति पादपूरणे । तेन न काङ्क्षन्तीति लिडर्थे लट् । 'चहितुस्महवैपादपूरणे' इत्यमरः । काङ्क्षन्ति इच्छन्ति ।

( २३ ) एतस्मिन्दमयन्तीस्वयंवरवृत्तान्ते कथ्यमाने सति । अमरोत्तमाः देवश्रेष्ठाः साग्निकाः अग्निना सह वर्तमाना लोकपाला दिक्पाला यमादयः । अत्र च दिशामेव पतयो लोकपालत्वेन विवक्ष्यन्ते नैव तु विदिशामपि । अत एव चाग्नेः पार्थक्येन निर्देशः ।

(२४) तत इति । महत् महत्त्वयुक्तम् । हृष्टाः सन्तः अब्रुवन् । वचनमाह गच्छाम इति । उतेति किंचेत्यर्थे । अपरे त्वाहुः किंच वयमपि गच्छाम इत्यर्थः ।

विदर्भानभिजग्मुस्ते यतः सर्वे महीक्षितः ॥ २५
नलोपि राजा कौन्तेय ! श्रुत्वा राज्ञां समागमम् ।
अभ्यगच्छददीनात्मा दमयन्तीमनुव्रतः ॥ २६
अथ देवाः पथि नलं ददृशुर्भूतले स्थितम् ।
साक्षादिव स्थितं मूर्त्या मन्मथं रूपसंपदा ॥ २७
तं दृष्ट्वा लोकपालास्ते भ्राजमानं यथा रविम् ।
तस्थुर्विगतसंकल्पा विस्मिता रूपसंपदा ॥ २८
ततोऽन्तरिक्षे विष्टभ्य विमानानि दिवौकसः ।
अब्रुवन्नैषधं राजन्नवतीर्य नभस्तलात् ॥ २९
भो भो निषधराजेन्द्र ! नल ! सत्यव्रतो भवान् ।
अस्माकं कुरु साह्याय्यं दूतो भव नरोत्तम ॥ ३०

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
चतुष्पञ्चाशोऽध्यायः ।

---

(२५) तत इति । सगणाः गणेन सेनाविशेषेण सह वर्तमानाः । वोपसर्जनस्येति वैकल्पिकः सहस्य सभावः । तत एव च सहवादना इति साधु । गणप्रमाण तु २७ गजाः २७ रथाः ८१ अश्वाः १३५ पदावय इति । यतः येषु विदर्भेषु । आद्यादित्वात्तसिः ।

(२६) नल इति । कौन्तेय कुन्तीपुत्र युधिष्ठिर । राज्ञां समागमं स्वयंवरार्थं समुपस्थानम् । दमयन्तीमनुव्रत· दमयन्त्यामनुरक्त इति यावत् । अदीनात्मा अदीन· तेजस्वी आत्मा शरीरं मनो वा यस्य तथाभूतः ।

(२७) अथेति । रूपसंपदा सौन्दर्यस्य समृध्या हेतुभूतया मूर्त्या शरीरेण विशिष्टं साक्षात् मन्मथ मदनमिव स्थितं नल ददृशुः दृष्टवन्तः ।

(२८) तमिति । भ्राजमानं प्रकाशमानम् भ्राजृ दीप्तावित्यतो लटः शानच । यथा रवि रविमिव । रूपसंपदा नलस्य सौन्दर्यातिशयेन विस्मिता आश्चर्यं प्राप्ताः सन्तः विगतसंकल्पा विगतो नष्ट संकल्पो दमयन्तीविषयकोऽभिलाषो येषां तथाभूता· ।

(२९) तत इति । दिवौकस दिव स्वर्ग ओको निवासस्थानं येषां ते देवाः । अन्तरिक्षे आकाशे विमानानि विष्टभ्य स्थिरीकृत्य नभस्तलादवतीर्य नैषध नल अब्रुवन् ।

(३०) भो भो इति । सत्यव्रत· सत्यमेव व्रतं यस्य तथाभूतः सत्यैकनिष्ठेत्यर्थः । अस्तीति पूर्वार्धे योज्यम् । हे नरोत्तम त्वमिति शेषः अस्माकं । साहाय्य कुरु । किंतदित्याह । दूतो भवेति । अस्माकमिति सम्बध्यते ।

इति श्री नलोपाख्यानव्याख्याया बालबोधिन्या चतुष्पञ्चाशोऽध्यायः ।

## पञ्चपञ्चाशोऽध्यायः ।



बृहदश्व उवाच—

तेभ्यः प्रतिज्ञाय नल करिष्य इति भारत ! ।
अथैतान्परिपप्रच्छ कृताञ्जलिरुपस्थित. ॥ १
के वै भवन्त. कश्चासौ यस्याहं दूत ईप्सितः ।
किं च तत्र मया कार्यं कथयध्वं यथातथम् ॥ २
एवमुक्ते नैपधेन मघवानभ्यभाषत ।
अमरान्वै निबोधास्मान्दमयन्त्यर्थमागतान् ॥ ३
अहमिन्द्रोऽयमग्निश्च तथैवायमपांपतिः ।
शरीरान्तकरो नृणां यमोऽयमपि पार्थिव ॥ ४
त्वं वै समागतानस्मान्दमयन्त्यै निवेदय ।
लोकपाला महेन्द्राद्याः सभां यान्ति दिदृक्षवः ॥ ५
प्राप्तुमिच्छन्ति देवास्त्वां शक्रोऽग्निर्वरुणो यम. ।

( १ ) तेभ्य इति । तेभ्यः तान्परितोषयितुम् । क्रियार्थोपपदस्य च कर्मणि स्थानिन इति चतुर्थी । करिष्ये भवता साहाय्यमिति शेषः । तत्कार्यस्य स्वीयकार्यत्वाभिप्रायेण फलस्यात्मगामित्वविवक्षणादात्मनेपदम् । इति प्रतिज्ञाय प्रतिज्ञा कृत्वा । कृताञ्जलि' बद्धाञ्जलिः उपस्थित' समीप गतः सन् ।

( २ ) प्रश्नमाह क इति । ईप्सित इष्ट च किंच तत्र साहाय्यविषये । मया किं कार्यं इति यथातथ तथा स्वरूपमनतिक्रम्य यथास्यात्तथा, सत्यमित्यर्थ' ।

(३) एवमिति । मघवानिन्द्र कर्ता । मघ सुखमस्यास्तीति मघवानिति स्वामी । मघया बहुलमिति नादेशो वा साधु । तथा च महते पूज्यत इति मघवा । श्वन्नुक्षन्नित्यादिनिपातनात्साधु । तस्य नादेश । ' वज्री बिडौजा मघवान् पुरन्दर ' इति हैम । निबोध जानीहि । बुधेर्भौवादिकाल्लोट् । वै पादपूरणे ।

( ४ ) अहमिति । अपा जलाना पति. पाता वरुणः ।

( ५ ) कार्यमाह त्वमिति । वे इति त्वर्थे त्व तु इत्यर्थ' । समागतान् प्राप्तान् निवेदय कथय अस्मद्वार्ता तस्यै निवेदयेत्यर्थः । निवेदनीयमर्थमाह लोकपाला इति सार्धेन पद्येन । दिदृक्षव. द्रष्टुमिच्छवः महेन्द्राद्या इन्द्रादय' । अत्र च महच्छब्दो निरर्थकः । तदाह केशवमिश्र. ' भूतेन्द्रभारतेशास्त्राद् महच्छब्दो निरर्थक' । ' इति । सभा यान्ति आयान्तीत्यर्थ. । अनुपसृष्टस्याप्युपसृष्टवदर्थः । द्योतकत्वादुपसर्गाणाम् । समायान्तीति पाठस्तु साधु । महेन्द्राद्या इत्यत्र सहेन्द्रास्त्वेति चतुर्भुजमिश्रः पठति तदपि साधुतरम् ।

(६) प्राप्तुमिति । इच्छन्तीति चतुर्णां सम्भूयकर्तृत्वाद्बहुवचनम् । शक्र' अग्नि. वरुणो यमश्चेत्येत इत्यर्थः । तेषा मध्ये अन्यतम एकम् । पतित्वे

१ लोकपाला, सहेन्द्रास्त्वा समायान्ति (च) २ समायान्ति ( क. म. न. )

तेषामन्यतमं देवं पतित्वे वरयस्व ह ॥ ६
एवमुक्तः स शक्रेण नलः प्राञ्जलिरब्रवीत् ।
एकार्थसमुपेतं मां न प्रेषयितुमर्हथ ॥ ७
कथं तु जातसंकल्पः स्त्रियमुत्सहते पुमान् ।
परार्थमीदृशं वक्तुं तत्क्षमन्तु महेश्वराः ॥ ८

देवा ऊचुः—
करिष्य इति संश्रुत्य पूर्वमस्मासु नैषध ।
न करिष्यसि कस्मात्त्वं व्रज नैषध माचिरम् ॥ ९

बृहदश्व उवाच—
एवमुक्तः स देवैस्तैर्नैषधः पुनरब्रवीत् ।
सुरक्षितानि वेश्मानि प्रवेष्टुं कथमुत्सहे ॥ १०

पतिकर्मविषये । कर्मणि त्वः । भावे वा । वरयस्व स्वीकुरुष्व । फलस्य कर्तृगामित्वादात्मनेपदम् । एतेन ते श्रेयः रूपस्यत इति द्योत्यते । हेति अवधारणे ।

( ७ ) एवमिति । प्राञ्जलिः प्रकृष्टोऽञ्जलिर्यस्य तथाभूतः । बद्धाञ्जलिः सन्नित्यर्थः । वचनमाह एकेति भवद्भिः समानेन अर्थेन कार्येण समुपेतं समागतम् । यद्भवता दमयन्तीवरणरूपं कार्यं तद्देवोद्दिश्य प्राप्तमित्यर्थः । समवेतमिति पाठे सबद्धमित्यर्थः । प्रेषयितुं नार्हथ ।

( ८ ) अनर्हत्वे हेत्वन्तराभिधानपूर्वकं क्षमामभिप्रार्थयते । तुकारोऽन्हेत्वर्थः । कथं नु इति पाठस्तु साधीयान् । जातसङ्कल्पः जातः सङ्कल्पः प्रार्थनीयस्त्रीविषयकोऽभिलाषो यस्य स पुमान् पुरुषः कर्ता । एतेन परार्थे प्रार्थनस्यात्यन्तासम्भवो द्योत्यते । स्त्रियं स्वाभीष्टां नारीं प्रति ईदृशं भवदुक्तसदृशं परार्थं परस्य स्वस्माद्भिन्नस्य अर्थमभिलापकार्यं वा वक्तुं उत्सहते उत्साहवान् स्यादित्यर्थः । अशक्यसघटनमेतदिति भावः । तत् तस्मात् ईश्वरा भवन्तः मम क्षमन्तु क्षमां कुर्वन्तु । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् ।

( ९ ) करिष्य इति । हे नैषध नल ! अस्मासु विषये । अस्मत्समक्षमिति यावत् । करिष्य इति संश्रुत्य प्रतिज्ञां कृत्वा । सपूर्वको हि शृणोतिः प्रतिज्ञार्थः । 'प्रतिज्ञान नियमाश्रवसंश्रवाः' इत्यमरः । कस्मात् हेतोः न करिष्यसि अवश्यं करिष्यसीति भावः । व्रज गच्छ । अत्र वदेत्यपि क्वचित्पाठः । चिरं विलम्बं मा कुर्विति शेषः । विलम्बो माऽस्तु इति वा ।

( १० ) एवमिति । सुरक्षितानि अत्यन्तं रक्षितानि वेश्मानि दमयन्त्याः सदनानि प्रवेष्टुं कथं उत्सहे उत्सहेयेत्यर्थः ( उत्साहवान् भवेयम् )

१ मन्वत ( घ ग. ) २ हि ( घ ) ३ उत्मजत ( क म. ) ४ तद्वै पद्यामरश्वर ( क ) ५ अत्र 'एवमुक्त नैषधन मघवा पुनरब्रवीत्' इति कपुस्तकपाठः । ६ अत्र 'स वै स्वमागतानस्मान् दमयन्त्यै निवेदय । त्वया योऽयम् हि स्म कुर्वन्नमरशासनम् ॥' इत्यधिक कपुस्तके ,

न चैनमभ्यभाषन्त मनोभिस्त्वभ्यपूजयन् ॥ १६
अहो रूपमहो कान्तिरहो धैर्यं महात्मनः।
कोऽयं देवोऽथवा यक्षो गन्धर्वो वा भविष्यति ? ॥ १७
न तास्तं शक्नुवन्ति स्म व्याहर्तुमपि किंचन।
तेजसा धर्षितास्तस्य लज्जावत्यो वराङ्गनाः ॥ १८
अथैनं स्मयमानं[1] तु स्मितपूर्वाभिभाषिणी।
दमयन्ती नलं वीरमभ्यभाषत विस्मिता ॥ १९
कस्त्वं ? सर्वानवद्याङ्ग ! मम हृच्छयवर्धन !
प्राप्तोस्यमरवद्वीर ! ज्ञातुमिच्छामि तेऽनघ ! ॥ २०
कथमागमनं चेह[2] कथं चासि न लक्षित.।

मुदीता अत्यन्त हृष्टाः सत्यः। 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः। नल महामुः प्रशंसितयत्यः। एन नल न अभ्यभाषन्त किमपि नोक्तवत्यः लज्जावत्त्वात्तस्य तेजसाभिभूतत्वाच्चेति भावः। तु किन्तु मनसा करणभूतेन अभ्यपूजयन् सत्कृतवत्यः।

( १७ ) प्रशंसामाह। अहो इति। अहो इत्याश्चर्ये। महात्मनो नलस्य। अय कः देवो यक्षो गन्धर्वो वा भविष्यति। इतरवैलक्षण्यस्य रूपस्यासम्भवादिति भावः।

( १८ ) नेति। ताः त किंचन किमपि व्याहर्तु वक्तुम्। व्याङ्पूर्वो हृञ् तिर्वचने। न शक्नुवन्ति स्म। 'लट् स्मे' इति लिङर्थे लट्। अवचने हेतुमाह। तेजसेति। वराङ्गनाः श्रेष्ठाः स्त्रियो दमयन्त्याः सख्यः।

( १९ ) अथेति। तु किंतु पश्चात् सख्यो नोक्तवत्यस्तथापीत्यर्थः। अथ स्मयमानं ईषद्धसन्तम् ष्मिङ् ईषद्धासे इत्यतो लटः शानच्। स्मितलक्षण तु 'ईषद्विकासिनयनं स्मितं स्यात्स्पन्दिताधरम्' इति दर्पणे। आत्मन. सदर्शनेन स्त्रीणा सभ्रान्ततरमालोकमानस्य स्मितोदयः। एन नलम्। स्मितपूर्वाभिभाषिणी स्मित पूर्वं प्राग्यस्मिंस्तद्यथा तथा भाषितं शील यस्याः सा दमयन्ती विस्मिता आश्चर्यं प्राप्ता सती।

( २० ) भाषणमाह क इति। सर्वानवद्याङ्ग सर्वाणि अनवद्यानि अगर्ह्याणि दोषशून्यानि मनोहराणीति यावत् अङ्गानि अवयवा यस्य तथाभूत मम हृच्छयवर्धन हृच्छयस्य मदनस्य वर्धन वृद्धिकारक। वर्धयतीति वर्धनः। वृधेर्ण्यन्ताल्ल्युः। अमरवत् देवतुल्य। प्राप्तः त्वं कः असि इति हे अनघ निष्पाप ते तव। शेषे षष्ठी। त्वेति इत्यर्थः। ज्ञातुमिच्छामि।

( २१ ) ज्ञातव्यान्तरमप्याह कथमिति। कथ केन प्रकारेण ? किमर्थं मित्यर्थस्तु निपातानामनेकार्थत्वाद्द्रष्टव्यः। न लक्षितो न दृष्टः। रक्षिभिरित्यर्थात्। कस्तावदागमने प्रतिबन्ध इति चेत्तत्राह। सुरक्षितमिति। मे वेश्म

1 स्मयमानेव ( क. च. ) 2 चेह ( क. म. न. च. )

सुरक्षितं हि मे वेश्म राजा चैवोग्रशासनः ॥ २१
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।

नल उवाच—
नलं मां विद्धि कल्याणि ! देवदूतमिहागतम् ॥ २२
देवास्त्वां प्राप्तुमिच्छन्ति शक्रोऽग्निर्वरुणो यमः ।
तेषामन्यतमं देवं पतिं वरय शोभने ! ॥ २२
तेषामेव प्रभावेण प्रविष्टोऽहमलक्षितः ।
प्रविशन्तं न मां कश्चिदपश्यन्नाप्यवारयत् ॥ २३
एतदर्थमहं भद्रे ! प्रेषितः सुरसत्तमैः ।
एतच्छ्रुत्वा शुभे बुद्धिं प्रकुरुष्व यथेच्छसि ॥ २४

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि पञ्चपञ्चाशोऽध्यायः ।

---

## षट्पञ्चाशोऽध्यायः ।

बृहदश्व उवाच—
सा नमस्कृत्य देवेभ्यः प्रहस्य नलमब्रवीत् ।

गृह सुरक्षित अतिशयेन रक्षित, तत एव चालक्षितस्य प्रवेशासम्भव इति भावः । चैवेति चार्थे । राजा भीमः उग्रशासन. उग्र भयकर शासन दण्डो यस्य ( यत्कर्तृकः ) तथाभूत. । शासनस्योग्रतामवेक्ष्यमाणस्य बलादपि प्रवेशासम्भव इति भावः ।

( २२ ) नलमिति । हे कल्याणि शोभने । इह आगत मा देवदूत नल विद्धि जानीहि । विदेरादादिकाल्लोट् ।

( २१ ) देवा इति । पतिं वरय पतित्वेन स्वीकुर्वित्यर्थ । हे शोभने दमयन्ति ।

( २२ ) अलक्षिततयाऽऽगमने कारणमाह तेषामिति । तेषां शक्रादीनां प्रभावेण सामर्थ्येन कारणभूतेन अलक्षितो रक्षिभिरदृष्ट एव प्रविष्टः त्वदीयगृहमित्यर्थात् उत्तरार्धे च तेषामेव प्रभावेणेत्येष एव हेतुः । न अवारयत् न निवारयामास ।

( २३ ) हे भद्रे ! अहं एतदर्थं एतस्मै सदेशहरणरूपाय कार्याय सुरसत्तमैः देवश्रेष्ठैः प्रेषितः त्वत्सकाशमित्यर्थात् । हे शुभे । एतत् मदुक्तं श्रुत्वा यथेच्छसि तथा बुद्धिं निश्चय कुरु ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां पञ्चपञ्चाशोऽध्यायः ।

( १ ) सेति । सा दमयन्ती देवेभ्य देवान् इन्द्रादीननुकूलयितुम् ।

१ इदं कपुस्तके नास्ति ।

प्रणयस्व यथाश्रद्धं राजन्किं करवाणि ते ॥ १
अहं चैव हि यच्चान्यन्ममास्ति वसु किञ्चन ।
तत्सर्वं तव विस्रब्धं कुरु प्रणयमीश्वर ! ॥ २
हंसानां वचनं यत्तु तन्मां दहति पार्थिव ! ।
त्वत्कृते हि मया वीर ! राजानः सन्निपातिताः ॥ ३
यदि त्वं भजमानां मां प्रत्याख्यास्यसि मानद ।
विषमग्निं जलं रज्जुमास्थास्ये तव कारणात् ॥ ४
एवमुक्तस्तु वैदर्भ्या नलस्तां प्रत्युवाच ह ।
तिष्ठत्सु लोकपालेषु कथं मानुषमिच्छसि ? ॥ ५
•येषामहं लोककृतामीश्वराणां महात्मनाम् ।

---

नमस्कृत्य तानिति शेषः । प्रहस्य हासितः । अशक्योन्मूलनेऽपि पतिव्रतानाम-नुरागे हस्तप्रक्षेप देवानामाकलयन्त्या हासोन्मेषः । वचनमाह प्रणयस्वेति । यथाश्रद्धं श्रद्धा मदीयं त्वद्गतं विश्वासमनतिक्रम्य । हे राजन्नल ! प्रणयस्व मय्यनुरागं कुरु । प्रपूर्वान्नयतेरनुरागार्थकाल्लोट् । ञित्त्वादात्मनेपदं वैकल्पिकम् । ते तव किं करवाणि कुर्याम् । प्रार्थनायां लोट् । अत्र यथाश्रद्धं देवानमस्कृत्य मा प्रणयस्वेति योजयन् शिरोवेष्टनेन प्राणायामे प्रवर्तमानो नीलकण्ठश्चिन्त्य एव ।

( २ ) त्वमेव ममेश्वरो नान्य इत्यात्मनोऽभिलापं विस्पष्टयति अहमिति । चैवहीति निपातसमुदायश्चार्थे । मम किञ्चन किमपि वसु द्रव्यम् अस्ति तत्सर्वं तव त्वदीयमेवेत्यर्थः । तत्र हेतुः हे ईश्वरेति । त्वं हि मम स्वामी-त्यर्थः । विस्रब्धं निर्विशङ्कं यथा तथा प्रणयं अनुरागं कुरु ।

( ३ ) नैतत्कपटत्कापाटिकत्वं किंतु परमार्थ एवेत्याह हंसानामिति । हंसानां वचनं त्रिपञ्चाशाध्यायान्ते समुपनिबद्धं 'दमयन्ति नलो नाम' इत्यादि । तत् मां दहति दाहसदृशीं दशामनुभावयति त्वय्यभिनिविष्टत्वान्म-नसस्तव चानधिगतत्वादिति भावः । त्वत्कृते तव कृते त्वदर्थम् । सुप् सुपेति समासः । हिकारोऽवधारणार्थः । सन्निपातिताः विनिमन्त्र्यानीताः ।

( ४ ) आत्मनः प्रत्याख्यानेऽनिष्टमाह यदीति । हे मानद समानदा-यिन् ! त्वं यदि भजमानां त्वां सेवमानां मां प्रत्याख्यास्यसि निराकरिष्यसि । त्यक्ष्यसीत्यर्थः । तदाहमिति शेषः । तव कारणात् त्वदर्थम् । ततश्चैतज्जन्य पातकं त्वय्येव निपतिष्यतीति भावः । रज्जुं उद्बन्धनार्थां आस्थास्ये आश्र-यिष्यामि प्राणत्यागार्थमित्यर्थः । आर्षमात्मनेपदम् ।

( ५ ) एवमिति । नलवचनमाह तिष्ठत्स्विति । लोकपालेषु इन्द्रादिषु तिष्ठत्सु सत्सु मानुषं मामित्यर्थात् । कथमिच्छसि ?

( ६ ) इतोऽपि नाहमनुरूप इत्याह येषामिति । अहं येषां लोककृतां लोकान् कुर्वतां जनयतां पालयतां वा । क्रियासामान्यार्थकत्वात्करोतेः पाल

न पादरजसा तुल्यो मनस्तेषु प्रवर्तताम् ॥ ६
विप्रियं ह्याचरन्मर्त्यो देवानां मृत्युमृच्छति ।
त्राहि मामनवद्याङ्गि ! वरयस्व सुरोत्तमान् ॥ ७
विरजांसि च वासांसि दिव्याश्चित्राः स्रजस्तथा ।
भूषणानि च मुख्यानि देवान्प्राप्य तु भुङ्क्ष्व वै ॥ ८
य इमां पृथिवीं कृत्स्नां संक्षिप्य ग्रसते पुनः ।
हुताशमीशं देवानां का तं न वरयेत्पतिम् ? ॥ ९
यस्य दण्डभयात्सर्वे भूतग्रामाः समागताः ।
धर्ममेवानुरुध्यन्ति का तं न वरयेत्पतिम् ? ॥ १०

---

नार्थकता । लोकपालानामित्यर्थः । पादरजसा तुल्यः न तेषु लोकपालेषु मनः तव हृदय प्रवर्तता प्रवृत्तिमद्भवतु ।

( ७ ) ननु भोः ' तत्तस्य किमपि द्रव्य यो हि यस्य प्रियो जनः ' इति त्वमेव मे श्रेयानितिचेत्तथापि न युक्तमित्याह विप्रियमिति । मर्त्यः देवाना विप्रिय अप्रिय आचरन् मृत्यु ऋच्छति प्राप्नोति । विप्रियश्चायम् यो देवाना यन्मया ते पाणिग्रहणमिति नैतच्छ्रेय इति भावः । ततः किमित्याह त्राहीति । हे अनवद्याङ्गि शोभनशरीरे ! मा त्राहि रक्ष मरणादित्यर्थः । त्राहीति त्रायतेः ' अन्येभ्योऽपि दृश्यत ' इति विचि सत आचारे क्विपि धातुत्वे लोटि रूपमिति दुर्घटवृत्तौ शरणदेवः प्राह ।

( ८ ) देवाना वरणे लाभोऽपि ते भविष्यतीत्याह विरजांसीति । विरजांसि विगत रजो येभ्यस्तथाभूतानि । देवाना रजः संपर्काभावादित्यर्थः । दिवि भवाः वासांसि वस्त्राणि । दिव्याः स्वर्गीयाः स्रजो मालाः । मुख्यानि प्रधानानि भूषणानि च भुङ्क्ष्व अनुभव । वै निश्चयेन ।

( ९ ) चतुर्णामपि पार्थक्येन प्रभावमाचष्टे य इत्यादिभिश्चतुर्भिः । योऽग्निः इमा कृत्स्ना संपूर्णा पृथिवीं पुनः संक्षिप्य संकोचमनुप्रापय्य ग्रसते कवलयति व्याप्नोतीत्यर्थः । प्रलये हि भगवान् वह्निर्भुवं भस्मसात्करोतीत्याहुः । त देवानामीश हुताशनमिम् । हुतमश्नाति हुताशः । धर्मण्यान् का पतिं न वरयेत् ? पतित्वेन न स्वीकुर्यात् ? सर्वा अपि स्वीकुर्युरित्यर्थः ।

( १० ) यममुपवर्णयति । यस्येति । समागताः जन्मानुप्राप्ताः सर्वे भूतग्रामाः प्राणिसमूहाः । ' ग्रामो विषयशब्दाद्यभूतेन्द्रियगुणादिषु व्रजे । ' इति हैमः । यस्य दण्डभयात् शासनभयात् हेतुभूतात् धर्ममेव अनुरुध्यन्ति इच्छन्ति । ' अनो रुध काम ' इति दैवादिकात्स्य । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । त यमम् ।

---

१ मे तेषु ( क ग. घ म. ) २ तु दिव्यानि ( क ) ३ मुख्यानि ( ग. म. )

धर्मात्मानं महात्मानं दैत्यदानवमर्दनम् ।
महेन्द्रं सर्वदेवानां का तं न वरयेत्पतिम् ? ॥ ११
क्रियतामविशङ्केन मनसा यदि मन्यसे ।
वरुणं लोकपालानां सुहृद्वाक्यमिदं शृणु ॥ १२
नैषधेनैवमुक्ता सा दमयन्ती वचोऽब्रवीत् ! ।
समाप्लुताभ्यां नेत्राभ्यां शोकजेनाथ वारिणा ॥ १३
देवेभ्योऽहं नमस्कृत्य सर्वेभ्यः पृथिवीपते ! ।
वृणे त्वामेव भर्तारं सत्यमेतद्ब्रवीमि ते ॥ १४
तामुवाच ततो राजा वेपमानां कृताञ्जलिम् ।
दौत्येनागत्य कल्याणि ! तथा भद्रे विधीयताम् ? १५
कथं ह्यहं प्रतिश्रुत्य देवतानां विशेषत[1] ।

---

(११) इन्द्रं प्रशंसति धर्मात्मानमिति । धर्मात्मानं धर्मे आत्मा मनो यस्य तथाभूतं, महात्मानं उदारमनसम् । सर्वदेवानां महेन्द्रं महान्तमधिपतिं इन्द्रम् ।

(१२) क्रियतामिति । यदि लोकपालानां मध्ये वरुणं मन्यसे बहुमन्यसे अनुमन्यसे वा । तदेति शेषः अविशङ्केन शङ्काशून्येन मनसा क्रियतां स्वामीष्टो वरुणवरणरूपोऽर्थं इत्यर्थात् । इदं सुहृद्वाक्यं सुहृदो मित्रस्य मे वाक्यं शृणु अनुतिष्ठेत्यर्थः ।

(१३) नैषधेनेति । अथ नैषधेन एवमुक्तप्रकारेण उक्ता सा दमयन्ती शोकजेन नलप्राप्तिरूपेष्टप्रतिबन्धकश्रवणजन्यतः शोकाज्जातेन वारिणा अश्रुजलेन समाप्लुताभ्यां पूर्णाभ्यामिति यावत् नेत्राभ्यां विशिष्टा सती वचः अब्रवीत् ।

(१४) वचनमाह देवेभ्य इति । नमस्कृत्य वन्दनमात्रार्हत्वेन पतित्वायोग्यत्वादिति भावः । नमस्कृत्य दूरतः परित्यज्येति वा । सदृश्यते हि दूरतःपरिहरणार्थकताऽपि नमःशब्दस्य 'नमस्ते अस्तु धन्वने' इत्यादौ (रुद्रभाष्ये द्रष्टव्यम्) । ते तुभ्यं, कर्मत्वाविवक्षणाच्चतुर्थी । त्वामिति वार्थः तेशब्दस्य निपातत्वेनानेकार्थत्वात् ।

(१५) तामिति । वेपमानां शोकवशात्कम्पमानाम् वचनमाह दौत्येनेति । अत्र मयेत्यध्याहार्यम् । हे कल्याणि ! दौत्येन दूतत्वेन हेतुभूतेन आगत्य मया तथा त्वदुक्तप्रकारेण विधीयतां क्रियतां ? प्रश्ने काकुः । नैतदुक्तरूपमिति भावः ।

(१६) अयुक्ततां विवृणोति । कथमिति । हि यस्मात् अयं च दमयन्तीवचनस्यानुष्ठातुमशक्यत्वे हेतुः । प्रतिश्रुत्य परस्य कार्यं स्वीकृत्य । विशेषतश्च देवानां, कार्यमिति शेषः । प्रतिश्रुत्य । देवानामिति शेषत्वविवक्षायां षष्ठी । देवेभ्यः प्रतिश्रुत्येत्यर्थः । षष्ठी च नामेव कल्पलति-

---

[1] नोत्सहे स्वार्थमीहितुम् (क) कथं स्वार्थमिहोत्सहे (ख)

परार्थे यत्नमारभ्य कथं स्वार्थमिहोत्सहे ॥ १६
एष धर्मो यदि स्वार्थो ममापि भविता ततः ।
एवं स्वार्थं करिष्यामि तथा भद्रे ! विधीयताम् ॥ १७
ततो बाष्पाकुलां वाचं दमयन्ती शुचिस्मिता ।
प्रत्याहरन्ती शनकैर्नलं राजानमब्रवीत् ॥ १८
उपायोऽयं मया दृष्टो निरपायो नरेश्वर ।
येन दोषो न भविता तव राजन्कथंचन ॥ १९
त्वं चैव हि नरश्रेष्ठ ! देवाश्चेन्द्रपुरोगमाः ।
आयान्तु सहिताः सर्वे मम यत्र स्वयंवरः ॥ २०
ततोऽहं लोकपालानां सन्निधौ त्वां नरेश्वर ।

---

कैव प्राचाम् । इह भवत्सकाशे स्वार्थे आत्मनः कृते इह भवत्सकाशे कथमुत्सहे उत्साहवान् भवेयम् । नैतच्छक्यं च युक्तरूपं चेति भावः । परार्थे इत्येव स्वस्यैव प्रपञ्चः । परे हि देवाः तेषामर्थे प्रयत्न आरभ्येति । परार्थे प्रयत्नमारभमाणस्य तेनैव स्वार्थसाधनमत्यन्तमेवान्याय्यमिति नैतच्छक्यम् घटनमिति भावः ।

( १७ ) ननु भोः स्वार्थोऽप्ययं धर्म एव परमनोरथपूरकत्वादित्य इतिचेदशोऽयमपि स्वार्थलक्षणो धर्मो ममान्यतोऽपि सुप्राप इत्याह एष इति । यदि एष भवत्योक्तः स्वार्थो धर्मः, तदाऽयं मम ततः देवकार्यसंपादनादपि भविता अवश्यं भावीत्यर्थः । देवकार्यमपि हि मया प्रार्थितं मे स्वार्थ एवेति । यथेति शेषः । हे भद्रे यथा एवं मदभिप्रेतप्रकारं स्वार्थं करिष्यामि साधयिष्यामि तथा विधीयतां त्वयेति शेषः। वरय शक्रादीन् येन मे कार्यं सपद्येतेति भावः।

( १८ ) तत इति । ततः शुचिस्मिता शुचि शुभं निर्दोषं वा स्मितं मन्दहासो यस्यास्तथाभूता दमयन्ती कर्त्री बाष्पाकुलां बाष्पैः आकुलां निरुद्धकण्ठत्वादविस्पष्टामित्यर्थः । वाचं व्याहरन्ती वदन्ती सती शनकैः शनैः । अव्ययसर्वनाम्नामकच् प्राक्टेरित्यकच् स्वार्थे । नलं राजानं अब्रवीत् ।

( १९ ) वचनमाह उपाय इति । हे नरेश्वर राजन् नल मया अयं वक्ष्यमाण उपायः मत्स्वीकारोपायः निरपायः अपायशून्यः निरवग्रः ( अपायः ) इति चतुर्भुजः । दृष्टः विचारितः विधारित इत्यर्थः । येनोपायेन कथंचन केनापि प्रकारेण ते दोषो न भविता । भवतेर्लुट् ।

( २० ) उपायं निर्दिशति त्वं चेति । त्वं च इन्द्रपुरोगमाः इन्द्रः पुरोगमः पुरःसरो येषां ते देवाश्चेत्येते सर्वे सहिता मिलिताः सन्तः यत्र मम स्वयंवरस्तत्रायान्तु ।

( २१ ) ततः किमित्याह तत इति । लोकपालानां इन्द्रादीनां सन्निधौ समीपे । हे नरव्याघ्र नरश्रेष्ठ । 'स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः ।XX

---

१ अपायः ( क. ख. )

वरयिष्ये नरव्याघ्र ! नैवं दोषो भविष्यति ॥ २१
एवमुक्तस्तु वैदर्भ्या नलो राजा विशांपते ।
आजगाम पुनस्तत्र यत्र देवाः समागताः ॥ २२
तमपश्यंस्तथाऽऽयान्तं लोकपाला महेश्वराः ।
दृष्ट्वा चैनं ततोऽपृच्छन्वृत्तान्तं सर्वमेव तम् ॥ २३
कच्चिद्दृष्टा त्वया राजन्दमयन्ती शुचिस्मिता ।
किमब्रवीच्च नः सर्वान्वद भूमिपतेऽनघ ! २४

नल उवाच—

भवद्भिरहमादिष्टो दमयन्त्या निवेशनम् ।
प्रविष्टः सुमहाकक्षं दण्डिभिः स्थविरैर्वृतम् ॥ २५
प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः ।

---

पुंसि श्रेष्ठार्थगोचराः ' इत्यमर एवं अनेन प्रकारेण ते दोषो न भविष्यति । मयैव ते परिणीतत्वेन त्वयि दोषारोपस्य कर्तुमशक्यत्वादिति भावः ।

( २२ ) एवमिति बृहदश्वोक्तिरियम् । वैदर्भ्या दमयन्त्या । विशांपते राजन् युधिष्ठिर ! समागता आत्मना सम मिलिताः ।

( २३ ) तमिति । महेश्वराः महासामर्थ्यशालिनः । त दमयन्तीविषयकम् ।

( २४ ) कच्चिदिति । कच्चिदित्यभीष्टप्रश्ने । हे अनघ निष्पाप भूमिपते राजन् नल सर्वान् नः आस्मान् किं अब्रवीत् उत्तरयामास तद्वद ।

( २५ ) भवद्भिरिति । भवद्भिः आदिष्ट. आज्ञप्त. अह दण्डिभिः दण्डवद्भिः कञ्चुकिभिरित्यर्थः । स्थविरैर्वृद्धै. पुरुषैः वृत व्याप्तमित्यर्थः । एतेन दुष्प्रवेशत्व गम्यते । सुमहाकक्ष सुतरा महत्यः कक्षाः प्रकोष्ठका यत्र तत् । दमयन्त्या निवेशन गृहम् । प्रविष्टः ।

( २६ ) प्रविशन्तमिति । तत्र गृहे प्रविशन्त मा ता पार्थिवसुतां राज्ञः पुत्रीं ऋते विना कश्चित्कोपि नरः पुरुषः कर्ता भवतामेव तेजसा प्रभावेण हेतुभूतेन न दृष्टवान् । नरशब्दस्य मनुष्यसामान्यवाचकत्वाङ्गीकारे तु ' सख्यश्चास्या मया दृष्टा ' इत्युत्तर पद्य विरुध्येत । नरो न दृष्टवान् नार्यस्तु काश्चिद् दृष्टवत्य एवेति भावः । अत्र दमयन्तीमृत इति ' ततोऽन्यत्रापि दृश्यत ' इति वार्तिकाद्द्वितीया । हरदत्तस्तु पदमञ्जर्यां " अन्याराादितरर्ते ' इतिसूत्रे ' कथ तर्हि यत्किचिद्राजसूयमृते सोम ' मिति ? छान्दसत्वात् । कथं ' न मामृते राम रमेति वाली । ' ' क कर्म प्रध्वस्त फलति पुरुषाराधनमृते । ' इति ? " निरङ्कुशाः कवयः " इत्याह । कौस्तुभे दीक्षितचरणास्तु ' एवमन्येऽपि ( प्रयोगाः ) दाशिग्रहणात्साधनीयाः । तद्यथा ' चैत्रं याबच्छीतामिति । ' फलति पुरुषाराधनमृते ' इति च । तथा च चान्द्रसूत्रं ' ऋते द्वितीया च ' इति । चकारात्पञ्चमी । ' इत्याहुः । संदृश्यते चैतच्चान्द्रसूत्र चान्द्रव्याकरणस्य द्वितीयाध्याये प्रथमे पादे पञ्चशीतितमम् । चान्द्र-

ऋते तां पार्थिवसुतां भवतामेव तेजसा ॥ २६
सख्यश्चास्या मया दृष्टास्ताभिश्चाप्युपलक्षितः ।
विस्मिताश्चाभवन्सर्वा दृष्ट्वा मां विबुधेश्वराः ॥ २७
वर्ण्यमानेषु च मया भवत्सु रुचिरानना ।
मामेव गतसंकल्पा वृणीते सा सुरोत्तमाः ॥ २८
अब्रवीच्चैव मां बाला आयान्तु सहिताः सुराः ।
त्वया सह नरव्याघ्र ! मम यत्र स्वयंवरः ॥ २९
तेषामहं सन्निधौ त्वां वरयिष्यामि नैषध ! ।
एवं तव महाबाहो दोषो न भवितेति ह ॥ ३०
एतावदेव विबुधा यथावृत्तमुदाहृतम् ।

---

वृत्तिकारश्च 'ऋतेशब्देन योगे द्वितीया भवति पञ्चमी च ।' इति व्याचख्यौ । शाकटायनोऽपि 'पञ्चमी चर्ते' ( १।३।१९१ ) इत्याह । जैनेन्द्रोपि 'का ( पञ्चमी ) र्ते' ( १।४।४६ ) इत्येव सूत्रयामास । बोपदेवस्तु 'धिक्समये' त्यादिना ऋतेयोगे द्वितीया प्रविधाय 'मुक्तिर्नर्तेऽच्युतोपास्तिं' इत्युदाहरति । तदेव व्याकरणान्तरसंवादादीक्षितमतमेव ज्याय इति द्रष्टव्यम् । दुर्घटवृत्तौ शरणदेवस्तु 'ऋते द्वितीये'ति कश्चित् । तन्न । 'अन्यारादितरर्ते' इतिप्रतिपदपञ्चमीबाधकहेतोरदर्शनात् । तस्मात् 'द्वितीयेति' योगविभाग. कर्तव्यः । ऋतेयोगे द्वितीयार्थम् । इत्याह ।

( २७ ) चास्ता नार्यं इत्याह सख्य इति । च किंच हे विबुधेश्वराः विबुधानां देवानामीश्वरा । मयाऽस्या दमयन्त्याः सख्यो दृष्टा. । अहं च ताभिः उपलक्षितो दृष्ट ।

( २८ ) वर्ण्यमानेष्विति । हे सुरोत्तमा देवश्रेष्ठा. । चकारोऽप्यर्थः मया भवत्सु वर्ण्यमानेषु सत्स्वपि गतसंकल्पा गतो निवृत्त. सङ्कल्पो भवद्भिरस्या उद्वाहो भवत्विति रूपो मदीयो मानसव्यापारो यया तथाभूता सती सा मामेव वृणीते वरयति । 'गत विगततयातयो.' इति मेदिनी । मामित्यस्य गतेन वा सम्बन्ध. । मा गत' सङ्कल्पो वाञ्छा मन इति यावद्यस्यास्तथाभूतेत्यर्थ ।

( २९ ) ततः किमित्याह अब्रवीदिति । चैवेत्यव्ययसमुदायश्चार्थे । बाला षोडशवर्षवयस्का दमयन्ती अब्रवीत् । वचनमाह आयान्त्विति । एतच्च विशेन पदेन व्याख्यातप्राय स्पष्टार्थम् ।

( ३० ) तेषामिति । तेषां देवानाम् । हे महाबाहो एवं एतेन प्रकारेण ते दोषो न भविता इति अब्रवीदित्यनेन सम्बन्ध. । हेत्यवधारणे ।

( ३१ ) एतावदिति । हे विबुधा । देवा ! तत्र यथावृत्तं वृत्तं जात अनतिक्रम्य वर्तते यथावृत्त तदनु गन् एताव । एतत्प्रमाण यस्य तथाभूतम् मामभाग्यमिन्द्रप्राधेर्न येरवर्ण । तथ मना उदाहृत उपन्यस्तं निवेदितमित्यर्थ. । शेषे प्रमाणं कार्ये अत्र पर यततां तनोऽर्थ । हे विबुधेश्वराः

मया शेषे प्रमाणं तु भवन्तस्त्रिदशेश्वराः ॥ ३१
इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
षट्पञ्चाशोऽध्यायः ।

## सप्तपञ्चाशोऽध्यायः ।



वृहदश्व उवाच—
अथ काले शुभे प्राप्ते तिथौ पुण्ये क्षणे तथा ।
आजुहाव महीपालान्भीमो राजा स्वयंवरे ॥ १
तच्छ्रुत्वा पृथिवीपालाः सर्वे हृच्छयपीडिताः ।
त्वरिताः समुपाजग्मुर्दमयन्तीमभीप्सवः ॥ २
कनकस्तम्भरुचिरं तोरणेन विराजितम् ।
विविशुस्ते नृपा रङ्गं महासिंहा इवाचलम् ॥ ३

देवानामाधिपतय । तृतीया यौवनरूपैव दशा येषां ते त्रिदशा । 'त्रिदशा विबुधा' सुरा ' इत्यमर' । भवन्त प्रमाण कर्त्तव्याकर्तव्यनिश्चये प्रमाणभूता इत्यर्थः । अत' परमपि यद्भवद्भिरादिश्येत तदवश्य प्रमाणीकरिष्यामीति भाव' ।
इति बालबोधिन्या षट्पञ्चाशोऽध्याय ।

( १ ) अथेति । अथ नलप्रतिगमनानन्तरं शुभे निर्दोष इत्यर्थः । काले । स च काल' कल्पसूत्रकारै प्रदर्शित । यथा गोभिल –उदगयने पूर्वपक्ष इत्यादि । दोषाश्च गुरुशुक्रास्तादय । पुण्ये शुद्धे तिथौ चान्द्रदिने । रिक्तास्वप्रभृतयश्च तिथिदोषा' । तद्विरहितत्व च तस्या शुद्धत्वम् । क्रान्तिवृत्तस्य द्वादशो भागो राशिः । तस्य च त्रिंशद्विभागा अंशाख्या । अमावास्याया सूर्याचन्द्रमसावेकस्मिन् राशावेकस्मिन्नेवांशे भवत । तत प्रत्यह चन्द्रमा द्वादशांशानुपभुङ्क्ते । सोऽयमस्योपभोगकालस्तिथिरित्याख्यायते । तदाह सूर्यः ' अर्काद्विनिःसृत. प्राची यद्यात्यहरह शशी । भागैर्द्वादशभिस्तत्स्यात्तिथिश्चन्द्रमस दिनम् ॥ ' इति । क्षणे मुहूर्त पुण्य इत्यनुवर्तते । आजुहाव आहूतवान् । आङ्पूर्वात् ह्वयतेर्लिट् । स्वयवरे स्वयवरार्थम् । निमित्ते सप्तमी ।
( २ ) तदिति । तदाह्वानम् । हृच्छयपीडिता मदनेन पीडिताः । त्वरिताः सजातत्वराः । अभीप्सव' अभ्याप्तु प्राप्तुमिच्छवः । ' आप्ज्ञप्यृधामीत् ' इत्याप्नोतेः सनीत्वाभ्यासलोपौ ।
( ३ ) कनकेति । कनकस्य सुवर्णस्य स्तम्भै रुचिर मनोहरम् । तोरणेन बहिर्द्वारेण वन्दनमालिकया वा विराजितम् । महासिंहा अचल पर्वत तद्वर्तिवनमिवेति यावत् । इव रङ्ग सभामण्डप विविशुः प्रविष्टवन्तः । उपमालङ्कार' ।

१ सिंह ( क ) २ इवाचरा: ( च )

तत्रासनेषु विविधेष्वासीना: पृथिवीक्षित: ।
सुरभिस्रग्धरा: सर्वे प्रमृष्टमणिकुण्डला: ॥ ४
तां राजसमितिं पुण्यां नागैर्भोगवतीमिव ।
संपूर्णां पुरुषव्याघ्रैर्व्याघ्रैर्गिरिगुहामिव ॥ ५
तत्र स्म पीना दृश्यन्ते बाहव: परिघोपमा: ।
आकारवर्णसुश्लक्ष्णा: पञ्चशीर्षा इवोरगा: ॥ ६
सुकेशान्तानि चारूणि सुनासाक्षिभ्रुवाणि च ।
मुखानि राज्ञां शोभन्ते नक्षत्राणि यथा दिवि ॥ ७
दमयन्ती ततो रङ्गं प्रविवेश शुभानना ।
मुष्णन्ती प्रभया राज्ञां चक्षूंषि च मनांसि च ॥ ८
तस्या गात्रेषु पतिता तेषां दृष्टिर्महात्मनाम् ।
तत्र तत्रैव सक्ताऽभून्न चचाल च पश्यताम् ॥ ९

---

( ४ ) तत्रेति । सुरभिस्रग्धरा: सुरभीणां सुगन्धानां स्रजां माल्यानां धरा धारका: । प्रमृष्टेति । प्रमृष्टानि प्रकर्षेण विशुद्धानि मणिकुण्डलानि येषां ते । सर्वे पृथिवीक्षित: राजान: आसीना उपविष्टा इत्यर्थ: ।

( ५ ) तामिति । नागै: सर्पविशेषै: भोगवतीं शेषस्य नगरीं इव, व्याघ्रै: गिरिगुहां पर्वतसंबन्धिनीं गुहामिव वा पुरुषव्याघ्रै: पुरुषश्रेष्ठै: संपूर्णाम् । तां पुण्यां पवित्रां राजसमितिं राज्ञां सभाम् । अत: परं 'प्रविवेश नलो देवै: पुण्यश्लोको नराधिप ।' इति कपुस्तकेऽधिकं पद्यार्धम् आवश्यकं चानैतत् । अन्यथा हि साकाङ्क्षमेव वाक्यं भवतीति । स्पष्टार्थं चैतत् ।

( ६ ) तत्रेति । तत्र रङ्गे परिघस्य अर्गलाया उपमा सादृश्यं येषां ते परिघवदायता: पुष्टाश्चेत्यर्थ: । पीना: स्थूला: बाहवो राज्ञां भुजा: । आकारवर्णसुश्लक्ष्णा: आकारेण वर्णेन च सुश्लक्ष्णा: सुतरां मनोहरा: । 'श्लक्ष्णं मनोहर' मित्युणादिकोष: । पञ्चशीर्षा पञ्च शीर्षाणि फणा येषां तथाभूता उरगा: सर्पा इव । उरसा हि ते गच्छन्तीति । उपमालङ्कार: ।

( ७ ) सुकेशान्तानीति । सुकेशान्तानि शोभन: केशानां शिरसिजानामन्त: प्रान्तो येषु तथाभूतानि । प्रसाधितत्वात्केशानाम् । चारूणि मनोहराणि । सुनासाक्षिभ्रुवाणि अक्षीणि च भ्रुवश्चाक्षिभ्रुवाणि । 'अचतुरविचतुर' इत्यादिनिपातनाद्भ्रुव उवङ् अच समासान्त: । शोभना नासा चाक्षिभ्रुवाणि च येषां तथाभूतानि । दिवि आकाशे ।

( ८ ) दमयन्तीति । प्रभया शरीरदीप्त्या करणभूतया राज्ञां चक्षूंषि च मनांसि च मुष्णन्ती अपहरन्ती आत्मैकतानानि कुर्वतीत्यर्थ: ।

( ९ ) तस्या इति । तस्या दमयन्त्या: गात्रेषु अवयवेषु । तेषां राज्ञाम् ।

---

१ पूर्णां ( क ) २ अत: परं 'प्रविवेश नलो देवै: पुण्यश्लोको नराधिप ।' इत्यधिकं कपुस्तके । ३ सुनासानि शुभानि च ( घ, क )

ततः संकीर्त्यमानेषु राज्ञां नामसु भारत ।
ददर्श भैमी पुरुषान्पञ्च तुल्याकृतीनथ ॥ १०
तान्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीन्स्थितान् ।
संदेहादथ वैदर्भी नाभ्यजानन्नलं नृपम् ॥ ११
यं यं हि ददृशे तेषां तं तं मेने नलं नृपम् ।
सा चिन्तयन्ती बुद्ध्याऽथ तर्कयामास भाविनी ॥ १२
कथं नु देवाञ्जानीयां कथं विद्यां नलं नृपम् ।
एवं संचिन्तयन्ती सा वैदर्भी भृशदुःखिता ॥ १३
श्रुतानि देवलिङ्गानि तर्कयामास भारत ! ।

---

( १० ) तत इति । हे भारत युधिष्ठिर । अथ प्रवेशोत्तर ततः तस्मिन् रङ्गे । सप्तम्यर्थे तसिः । राज्ञां नामसु सकीर्त्यमानेषु । उच्चार्यमाणेषु । कॄ संशब्दन इत्यतश्चोरादिकात्कर्मणि लटः शानच् । उपधायाश्चेतीत् । उपधायां चेति दीर्घः । तुल्याकृतीन् तुल्याः समाना आकृतयो येषां तथाभूतान् पञ्च पुरुषान् । चतुर्भिरिन्द्राद्यैर्देवैरपि नलरूपस्य धृतत्वादिति भावः ।

( ११ ) तानिति । ततः तान् सर्वान् निर्विशेषाकृतीन् । निर्गतो विशेषो भेदो याभ्यस्तथाभुता आकृतयो येषा तथाभूतान् स्थितान् विद्यमानानिति यावत् । सदेहात् सशयात् हेतोः । नल नृप न अभ्यजानन् सोऽयमिति न ज्ञातवती । अभिपूर्वो हि जानातिः पूर्व दृष्टस्य लक्षणादिना ज्ञाने । सर्वेषामपि समानरूपतयाऽय वा नलोऽयं वेति ज्ञातु न प्रबभूवेत्यर्थः ।

( १२ ) अभिज्ञानाभावे हेतु विस्पष्टयति य यमिति । तेषा समानाकाराणां पञ्चानां मध्ये य य ददृशे दृष्टवती । आर्षमात्मनेपदम् । त तं नलं नृपं मेने । समानत्वात्स्वरूपस्येति भाव । अत एव च सदेहमासयती । अथ भाविनी भावो लीलाऽस्त्यस्यां सा सुन्दरीत्यर्थः । दमयन्ती । 'क्रियालीलापदार्थेषु' इति भावशब्दार्थेषु मेदिनी । भामिनीति पाठे कोपनेत्यर्थः । भामो हि क्रोधः । न चायमत्रोचितः पाठः । प्रकृतानुपयोगात् । चिन्तयन्ती विचारयन्ती सती बुध्द्या करणभूतया तर्कयामास नलविषयक तर्कं कृतवतीत्यर्थः । अय नल एतल्लक्षण विशिष्टत्वादित्यादिकमनुमान कृतवतीत्यर्थः ।

( १३ ) तर्कितोऽप्यविज्ञाते नले दुःखमेव प्राप्नुयादत कथमिति । विद्यां जानीयां वेत्तेर्ज्ञानार्थाल्लिङ् । वैदर्भी दमयन्ती । भृशदुःखिता भृशं अत्यन्तं दुःखिता सतीत्युत्तरेण सबन्धः । विज्ञातुमशक्यत्वान्नलस्येति भावः ।

( १४ ) श्रुतानीति । हे भारत ! श्रुतानि वृद्धेभ्यः समाकर्णितानि देवलिङ्गानि देवानां चिन्हानि ( लक्षणानि ) तर्कयामास । ऊहितवती विचिन्त्य

---

१ निह ( क. म. न. ) निव (च) २ अत. पर 'निर्विशेषवयोवेषरूपाणा तत्र सा शुभा ।' इत्यधिक कपुस्तके 'तत्समीक्ष्य ततः सर्वान्निर्विशेषाकृतीनिव । सदेहादथ वैदर्भी नाभ्यजानान्नल पतिम् ।' इति तु चपुस्तके । भामिनी ( क )

यथा देवैः स मे भर्ता विहितो निपधाधिपः ॥ १९
तेन सत्येन मे देवास्तमेव प्रदिशन्तु मे ।
यथेदं व्रतमारब्धं नलस्याराधने मया ॥ २०
तेन सत्येन मे देवास्तमेव परिशन्तु मे ।
स्वं चैव रूपं कुर्वन्तु लोकपाला महेश्वराः ॥ २१
यथाऽहमभिजानीयां पुण्यश्लोकं नराधिपम् ।
निशम्य दमयन्त्यास्तत्करुणं परिदेवितम् ॥ २२
निश्चयं परमं तथ्यमनुरागं च नैपधे ।
मनोविशुद्धिं बुद्धिं च भक्तिं रागं च नैपधे ॥ २३
यथोक्तं चक्रिरे देवाः सामर्थ्यं लिङ्गधारणे ।
साऽपश्यद्विबुधान्सर्वानस्वेदान्स्तब्धलोचनान् ॥ २४
हृपितस्रग्रजोहीनान्स्थितानस्पृशतः क्षितिम् ।

तैः स निपधाधिपो नल एव मे भर्ता पतिर्विहितः । एतच्च नलरूपधारितयैव दमयन्तीमपहर्तुं प्रवृत्तिर्देवानामभिद्योतयति ।

( २० ) तेनेति । यथा यस्मात् मया नलस्य आराधने प्राप्तिनिमित्तम्। ' चर्मणि द्वीपिन हन्ती ' स्यादिवत्सप्तमी । ' आराधन पाकप्राप्त्योः साधने तोपणेऽपि च ' इति हैमः । इद स्वयवररूपमित्यर्थ । एतच्च ' त्व चैव हि नरश्रेष्ठ , इत्यादिना ( अ. ५३-प. २०-२१ ) दमयन्तीवचनेन प्रतीयते ।

( २१ ) तेनेति । लोकपाला. कर्तार स्व स्वीय, कुर्वन्तु प्रकटयन्तु—

( २२ ) यथेति । यथा येन स्वरूपप्रकटनप्रकारेण अह पुण्यश्लोक पवित्रकीर्तिं नराधिप राजान नल अभिजानीया अभिज्ञानविषय कुर्याम् । तत् दमयन्त्याः करुण हृदयद्रावक तत्पूर्वोक्त परिदेवित विलापम् । परिपूर्वाद्देवतेर्नपुंसके भावे क्त इति क्तः । निशम्य श्रुत्वा—

( २३ ) निश्चयमिति । परम उत्कृष्ट आत्यन्तिकमिति यावत् निश्चय, नैपधे निपधानामधिपतौ नले तथ्य पारमार्थिक अनुराग, मनसो विशुद्धि अत्यन्तशुद्धता, बुद्धिं, ज्ञान, भक्ति ( देवेषु ) प्रेम, नैपधे राग दमयन्तीविपयकमनुराग च दृष्ट्वेति शेषः । उभयोरपि परस्परागत प्रेम सवीक्ष्येत्यर्थः ।

( २४ ) यथोक्तमिति । देवा यथोक्त तस्या उक्त वचनमनातिक्रम्य तद्वचनानुसारेणेत्यर्थः । लिङ्गधारणे लिङ्गाना देवमानुपचिन्हाना धारणे अवधारणे सामर्थ्यं तस्या इति शेषः । चक्रिरे । ततश्च सा दमयन्ती कर्त्री सर्वान् विबुधान् अस्वेदान् स्वेदरहितान् स्तब्धलोचनान् स्तब्धानि अनिमिषत्वान्निमेषोन्मेषशून्यतया स्तब्धवद्भासमानानीत्यर्थः लोचनानि नेत्राणि येषां तथाभूतान् ।

( २५ ) हृपितेति । हृपितस्रग्रजोहीनान् हृपिता विकासिता अम्लाना इति यावत् स्रजो माल्यानि येषां ते च ते रजोभिर्हीनाश्च धूलिसंपर्कशून्याश्च तान् । क्षिति भूमिं अस्पृशतः । स्पृशतेः स्पर्शार्थकाल्लटः शता । एव भूतान्

१ पुष्यन्तु ( क ) २ अम्लान ( क ) अदूपितस्रजो हीनान् ( च )

आश्वासयद्वरारोहां प्रहृष्टेनान्तरात्मना ॥
यत्त्वं भजासि कल्याणि ! पुमांसं देवसन्निधौ । ३१
तस्मान्मां विद्धि भर्तारमेतं ते वचने रतम् ॥
यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते ! । ३२
तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ॥
दमयन्ती तथा वाग्भिरभिवन्द्य कृताञ्जलिः । ३३
तौ परस्परतः प्रीतौ दृष्ट्वा त्वग्निपुरोगमान् ।
तानेव शरणं देवाञ्जग्मतुर्मनसा तदा ॥ ३४
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
प्रहृष्टमनसः सर्वे नलायाष्टौ वरान्ददुः ॥ ३५
प्रत्यक्षदर्शनं यज्ञे गतिं चानुत्तमां शुभाम् ।

( ३१ ) आश्वासयदिति । वरारोहां वर उत्तम आरोहः श्रोणी यस्यास्तां सुन्दरीमित्यर्थः । 'श्रोण्यामप्यारोहो वरास्त्रियाः ' इत्यमर. । प्रहृष्टेन अन्तरात्मना अन्तरिन्द्रियेण मनसा उपलक्षितः । उपलक्षणे तृतीया । आश्वासयत् वाग्भिः सुखितां चकार । वाच आह यादिति । हे कल्याणि शोभने दमयन्ति त्व यद्यस्मात् देवसन्निधौ इत्यात्मनि दमयन्त्या प्रणयपक्षपातातिशयो द्योत्यते । पुमास मनुष्य माम् । ' स्यु' पुमास पञ्चजना ' इति मनुष्यपर्यायेष्वमरः । भजसि सेवसे स्वीकरोपीत्यर्थ ।

( ३२–३३ ) तस्मादिति । तस्मान् एत मा ते वचने रत त्वदाशायां रममाणमित्यर्थः । भर्तार पतिं विद्धि जानीहि । च किंच हे शुचिस्मिते मे देहे यावत्प्राणा धरिष्यति अवस्थास्यन्त इत्यर्थ । धृञ् धारण इत्यस्य प्रेपणाया निवृत्तौ रूपम् । तावत् त्वयि भविष्यामि प्रभविष्यामि । तव प्रभुर्भविष्यामि । ते पतिर्भविष्यामीत्यर्थः । त्वामालम्ब्य वर्तमानो भविष्यामीति वार्थः । ते तुभ्यम् । सम्प्रदानत्वेन विवक्षणाच्चतुर्थी , तथा यथा नलस्तामेव दमयन्ती ( नल ) वाग्भिः अभिवन्द्य सपूज्येति यावत् । अभिनन्द्येति पाठस्तु साधीयान् । अभिनन्दित कृत्वेत्यर्थः । कृताञ्जलिः आसीदिति शेषः ।

( ३४ ) ताविति । परस्परतः अन्योन्यस्मात् हेतुभूतात् प्रीतौ हृष्टौ । तौ दमयन्तीनलौ अग्निपुरोगमान् अग्निः पुरोगमः पुरःसरो येषु तान् देवान् दृष्ट्वा तानेव मनसा शरण जग्मतु' ।

( ३५ ) वृत इति । महौजसः महत् ओजः प्रभावो येषां ते सर्वे लोकपाला इन्द्राद्याश्चत्वारः। तेषामेव सन्निहितत्वात् । प्रहृष्टमनसः प्रहृष्ट प्रमुदित मनो येषा तथाभूताः सन्तो नलाय अष्टौ वरान् ददुः ।

( ३६ ) वरानाह प्रत्यक्षमिति । प्रीयमाणः प्रीतिं ('हर्षं ) प्राप्नुवन् शचीपतिः इन्द्रः यज्ञे प्रत्यक्षदर्शन आत्मनः साक्षाद्दर्शन, अनुत्तमां नास्त्युत्तमा

१ अभिनन्द्य ( ग. म. न. च. )

नैषधाय ददौ शक्रः प्रीयमाणः शचीपतिः ॥३६
अग्निरात्मभवं प्रादाद्यत्र वाञ्छति नैषधः ।
लोकानात्मप्रभांश्चैव ददौ तस्मै हुताशनः ॥ ३७
यमस्त्वन्नरसं प्रादाद्धर्मे च परमां स्थितिम् ।
अपांपतिरपां भावं यत्र वाञ्छति नैषध ॥ ३८
स्रजश्चोत्तमगन्धाढ्याः सर्वे च मिथुनं ददुः ।
वरानेवं प्रदायास्य देवास्ते त्रिदिवं गताः ॥ ३९
पार्थिवाश्चानुभूयास्य विवाहं विस्मयान्विताः ।

---

यस्यास्तथाभूता शुभा शोभना गतिं स्वर्गादिलोकप्राप्तिं च ददौ ।

( ३७ ) अग्निरिति । अग्निः कर्ता यत्र यस्मिन्प्रदेशे नैषधो वाञ्छति इच्छति तत्रेति शेषः आत्मभवं आत्मनो ( वह्नेः ) भवं प्रादुर्भावं प्रादात् । किंच हुताशनः हुतमशनं यस्य स वह्निः आत्मप्रभान् । आत्मनः स्वस्य प्रभेव प्रभा येषां तान् । अग्निवत्प्रकाशमानानित्यर्थः । लोकान् स्वर्गादीन् ।

( ३८-३९ ) यम इति । यमः अन्नरसं अन्ने रसं आस्वादविशेषं प्रादात् । यद्यदन्नं नलो निष्पादयिष्यति । तत्र तत्र रसविशेष उत्पत्स्यत इति वरं प्रायच्छदित्यर्थः । धर्मे परमां श्रेष्ठामात्यन्तिकीमिति यावत् स्थितिं अवस्थानम् । अपां जलानां पतिर्वरुणः यत्र नैषधो वाञ्छति तत्र अपां जलानां भावमुत्पत्तिं प्रादात् । यत्र जलं वाञ्छेत्तत्र जलमुत्पद्येतेति वरं प्रादादित्यर्थः । च किंच उत्तमगन्धाढ्याः स्रजो माल्यानि च प्रादात् । अत्र वरप्रदानस्यैव प्रस्तुतत्वात् 'नैषधाभीष्टानां स्रजां उत्तमगन्धाढ्यत्वं भविष्यती' ति वरं प्रादादित्यर्थः । स्रक्शब्द चात्र पुष्पसदृशपरं लक्षणया । अत एव प्रोक्तमुत्तरत्र ( ७५ तमेऽध्याये ) ' मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा । भूय एव सुगन्धीनि हृषितानि भवन्ति हि ॥ ' इति अत एव च प्रत्येकं द्वयोर्द्वयोर्वरयोः सम्पिण्डितानां चतुर्णां वराणां प्रदानमुपपद्यते । सर्वे चत्वारोऽपि देवाः प्रत्येकं मिथुनं द्वन्द्वं द्वौ द्वौ वरावित्यर्थः । ददुः । अस्येति शेषे षष्ठी अस्मै इत्यर्थः । त्रिदिवं तृतीयं लोकं स्वर्गम् । ' त्रिदिवत्रिदशालयाः ' इति स्वर्गपर्यायेष्वमरः । इतः परं च श्लोकचतुष्टयमधिकं कपुस्तके सदृष्टं, तच्च न व्याख्यायते प्रक्षिप्तत्वात् ।

( ४० ) पार्थिवा इति पार्थिवा अपरे राजानः अस्य नलस्य दमयन्त्याश्च विवाहं अनुभूय दृष्ट्वा विवाहमहोत्सवमनुभूयेत्यर्थः । विस्मयान्विताः आश्चर्ययुताः । आश्चर्यमनयोरपि विवाहमहोत्सवस्येति भावः । मुदिताः अनु-

दमयन्त्याश्च मुदिता प्रतिजग्मुर्यथागतम् ॥ ४०
गतेषु पार्थिवेन्द्रेषु भीमः प्रीतो महामनाः ।
विवाहं कारयामास दमयन्त्या नलस्य च ॥ ४१
उष्य तत्र यथाकामं नैषधो द्विपदांवरः ।
भीमेन समनुज्ञातो जगाम नगरं स्वकम् ॥ ४२
अवाप्य नारीरत्नं तु पुण्यश्लोकोपि पार्थिवः ।
रेमे सह तया राजञ्छच्येव बलवृत्रहा ॥ ४३
अतीव मुदितो राजा भ्राजमानोंशुमानिव ।
अरञ्जयत्प्रजा वीरो धर्मेण परिपालयन् ॥ ४४
इजे चाप्यश्वमेधेन ययातिरिव नाहुषः ।

---

रूपदाम्पत्यावलोकनादिति भावः । यथागत आगतमनतिक्रम्य यथा आगतास्तथैवेत्यर्थः । अत्र च विवाहपदेन वरणमात्र विवक्षित नैव तु संस्कारः । उत्तरत्र पुनः संस्कार एव विवक्षितः । यद्वा विवाह अनुभूय भाविन मनसा निश्चित्येर्थः । विस्मयान्विताः देवानपि परित्यज्य नलस्य वरणादिति भावः ।

(४१) गतेष्विति पार्थिवेन्द्रेषु नृपश्रेष्ठेषु प्रीतो हृष्टः । विवाह एतदाख्यं संस्कार कारयामास पुरोहितेनेति शेषः ।

(४२) उष्येति । द्विपदा मनुष्याणा मध्ये वरः श्रेष्ठः । पद्मित्यादिना पादस्य पदादेशः । नैषधः तत्र भीमस्य नगरे यथाकाम यथेच्छ उष्य वासं कृत्वा । क्त्वो ल्यप् । अत्र न्यास " वा च्छन्दसी " तिवाच्ये ' क्त्वापिच्छन्दसी ' ति वचनमसमासेऽपि ल्यबर्थ, तेन ' अर्च्य देवानागत " इति । ' छान्दसा ' अपि क्वचिद्भाषाया प्रयुज्यन्त ' इति भाषायामपि सिद्धमिति दुर्घटवृत्तौ शरणदेवः प्राह । एष च विधिः प्रामाणिकप्रयोगसिद्ध्यर्थो न तु प्रवृत्त्यर्थ इति द्रष्टव्यम् । समनुज्ञातः सम्यक् प्रदत्ताभ्यनुज्ञः । स्वक स्वीयम् ।

(४३) अवाप्येति । तुः पादपूरणार्थः । अपि किंच पुण्यश्लोकः पार्थिवो नलः । नारीरत्नं स्त्रीषु श्रेष्ठा दमयन्तीम् । ' रत्न स्वजातिश्रेष्ठेऽपी ' त्यमरः । अवाप्य प्राप्य । हे राजन् युधिष्ठिर ! बलवृत्रहा बलस्य वृत्रस्य च हन्ता इन्द्रः शच्या इव तया दमयन्त्या सह रेमे विहृतवान् ।

(४४) अतीवेति । अंशुमान् सूर्य इव भ्राजमानः प्रकाशमानः अतीव अत्यन्तं मुदितो हृष्टो वीरो राजा नलः धर्मेण न्यायेन । ' धर्माः पुण्ययमन्याये ' त्यमरः । परिपालयन् प्रजा अरञ्जयत् अनुरागयुक्ताः कृतवान् ।

(४५) ईजे इति । चापीति चार्थे किंचेत्यर्थः । नाहुषः नहुषस्य पुत्रः । शिवादेराकृतिगणत्वादण् । ' यतिययातिसयात्ययातिवियतिकृतिसंज्ञा नहुषस्य षट्पुत्रा महाबलपराक्रमा बभूवुः । ' इति विष्णुपुराणम् (४-१०) ययातिरिव अश्वमेधेन अश्वः मेध्यते हिंस्यतेऽस्मिन् अश्वमेधो यज्ञविशेषः तेन ' प्रकृत्यादिभ्य उपसंख्यान ' मिति तृतीया । ईजे यागं कृतवान् । यजेर्लिट् ।

अन्यैश्च बहुभिर्धीमान्क्रतुभिश्चाप्तदक्षिणैः ॥ ४५
पुनश्च रमणीयेषु वनेषूपवनेषु च ।
दमयन्त्या सह नलो विजहारामरोपमः ॥ ४६
जनयामास च ततो दमयन्त्यां महामनाः ।
इन्द्रसेनं सुतं चापि इन्द्रसेनां च कन्यकाम् ॥ ४७
एवं स यजमानश्च विहरंश्च नराधिपः ।
ररक्ष वसुसंपूर्णां वसुधां वसुधाधिपः ॥ ४८
इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
सप्तपञ्चाशोऽध्यायः ।

## अष्टपञ्चाशोऽध्यायः ।



बृहदश्व उवाच—
वृते तु नैषधे भैम्या लोकपाला महौजसः ।
यान्तो ददृशुरायान्तं द्वापरं कलिना सह ॥ १

---

*यजिरवपीति सम्प्रसारणम् । अश्वमेधश्च ' लक्षणविशेषाक्रान्तमश्वं सम्प्रोक्ष्य कपाले जयपत्रं बद्ध्वा त्यजेत् । तद्रक्षार्थं च पुरुषविशेषं नियोजयेत् । संवत्सरान्तेऽश्वे आगते सति, अथवा केनापि सन्नद्धे युद्धं कृत्वा तमानीय, यथाविधि वधं कृत्वा तद्वपया होमः कर्तव्यः । ' इत्याद्युक्तः ( श. क. ) एतस्य च विशेषतो विवरणं लघुशब्दार्थसर्वस्वे द्रष्टव्यम् । एतद्विधिश्च तैत्तिरीयब्राह्मणस्य तृतीयकाण्डेऽष्टमनवमप्रपाठकयोः । धीमान् ज्ञानवान् नलः अन्यैः अश्वमेधभिन्नैः आप्तदक्षिणैः आप्ता पर्याप्ता प्रभूतेति यावत् दक्षिणा येषु तथाभूतैः । विपुलदक्षिणायुक्तैरित्यर्थः । बहुभिः यज्ञैः ईजे इत्यनेन पूर्वेण सम्बन्धः ।

( ४६ ) पुनश्चेति । पुनश्च यज्ञानुष्ठानोत्तरमित्यर्थः । अमरोपमो देवतुल्यः । उपवनेषु । उद्यानेषु । विजहार विहारं कृतवान् । विपूर्वाद्धरतेर्लिट् ।

( ४७ ) जनयामासेति । इन्द्रसेनं एतन्नामानं, इन्द्रसेनां चैतन्नाम्नीम् । अत्र स्यमभाव आर्षः ।

(४८) एवमिति । यजमानः याग कुर्वाणः । विहरन् विहारं कुर्वंश्च नराधिप नराणां पाता । वसुधाधिपो राजा । वसुसंपूर्णां धनेन सम्यक् पूर्णां वसुधां पृथिवीं ररक्ष ।

इति नलोपाख्यानव्याख्यायां बालबोधिन्यां सप्तपञ्चाशोऽध्यायः ।

---

अथ श्रीमतो निषधेन्द्रस्य दशाविपर्यासं प्रदर्शयितुकामस्तत्र निदानभूतां कलेः प्रतिज्ञामुपनिबध्नात्यष्टपञ्चाशेन ।

( १ ) वृत इति । भैम्या दमयन्त्या नैषधे वृते सति यान्तो गच्छन्तः महौजसः प्रभावाः । लोकपाला इन्द्रादयः कलिना युगविशेषेण सह आयान्तं आगच्छन्तं द्वापरं युगविशेषं ददृशुः दृष्टवन्तः । अत्र कलिद्वापरशब्दौ तदधिष्ठातृदेवतावाचिनौ । नैषधः कलहमजितो । दर्शनात्पूर्वमात् ।

अथाब्रवीत्कलिं शक्रः संप्रेक्ष्य बलवृत्रहा ।
द्वापरेण सहायेन कले ब्रूहि क्व यास्यसि ? ॥ २
ततोऽब्रवीत्कलिः शक्रं दमयन्त्याः स्वयंवरम् ।
गत्वा हि वरयिष्ये तां मनो हि मम तां गतम् ॥ ३
तमब्रवीत्प्रहस्येन्द्रो निर्वृत्तः स स्वयंवरः।
वृतस्तया नलो राजा पतिरस्मत्समीपतः ॥ ४
एवमुक्तस्तु शक्रेण कलिः कोपसमन्वितः ।
देवानामन्त्र्य तान्सर्वानुवाचेदं वचस्तदा ॥ ५
देवानां मानुषं मध्ये यत्सा पतिमविन्दत ।
तत्र तस्या भवेन्न्याय्यं विपुलं दण्डधारणम् ॥ ६
एवमुक्ते तु कलिना प्रत्यूचुस्ते दिवौकसः ।

---

(२)अथेति । शक्र इन्द्रः कलिं संप्रेक्ष्य दृष्ट्वा । वचनमाह द्वापरेणेति। सहायेन सह गच्छता द्वापरेण सह । क्व यास्यसि गमिष्यसि । यद्यपि पूर्वदेशत्यागपूर्वकउत्तरदेशसंयोगानुकूलो व्यापारो गमनं, तथाप्यत्रोत्तरदेशसंयोगमात्रस्य गमनत्वेन विवक्षणात्तस्य च भावित्वाल्लट्। अन्यथा ह्यारब्धापरिसमाप्तत्वाद्गमनस्य लडेव स्यात् ।

( ३ ) तत इति । हि यतः मम मनः कर्तृ तां दमयन्तीं गतं तस्यां गतं तामेव सस्पृहं विषयीकृतवदित्यर्थः ।

( ४ ) तमिति । प्रहस्य अत्यंत हसित्वा । अतिक्रम्य कालं स्वयंवरगमने प्रवृत्तिमुपलक्षयतो हासः । निर्वृत्तः निष्पन्नः ( संजातः ) तया दमयन्त्या । अस्मत्समीपतः अस्माकं समीपे । आद्यादित्वात्तसिः ।

( ५ ) एवमिति । कोपसमन्वितः कोपेन युक्तः । आत्मनोऽनिष्टस्य दमयन्त्याः स्वयंवरस्य संवृत्तत्वादिति भावः । आमन्त्र्य आगच्छेति समीपं आहूयेत्यर्थः । आङ्पूर्वं आमन्त्रयतिराप्रश्नेऽपि विद्यते । अत्र पुरसौ नेष्टः । आप्रश्नो हि गमनानुज्ञापनम् । न हि ततः परं पुनर्द्राघीयान् संलापः संभवतीति ।

( ६ ) कलेर्वचनमाह देवानामिति । *यत् यस्मात्सा देवानां मध्ये मानुषं* पतिं अविन्दत अलभत । देवाननादृत्य मानुषं वृतवतीत्यर्थः । तस्मादिति शेषः । तत्र तत्कर्मविषये तस्याः विपुलं भूयिष्ठं दण्डधारणं दण्डस्यास्मत्कृतस्य शासनस्य धारणं स्वीकरणमनुभवनमिति यावत् । न्याय्यं न्यायादनपेतं योग्यमित्यर्थः । अनुभूयतामनयाऽस्मत्कृतो विपुलो दण्ड इति भावः । 'धर्मपथ्यर्थन्यायादनपेते' इति यत्। दण्डधारणशब्दो दण्डकारणार्थोऽपि क्वचित् कोशे सदृष्टः । तेन दण्डकारणमुचितमित्यर्थः । अयमेव चार्थोऽक्लिष्टत्वात्साधुतरः ।

( ७ ) एवमिति । कलिना एवमुक्ते सति दिवौकसः दिवं स्वर्गं ओकः स्थानं येषां ते देवाः । '*दिवमित्यकारान्तोऽपि कुलवत्*। प्रायेण वृत्तिविष-

---

१ ननु ( क )

अस्माभिः समनुज्ञाते दमयन्त्या नलो वृतः ॥ ७

का च सर्वगुणोपेतं नाश्रयेत नलं नृपम् ।
यो वेद धर्मानखिलान्यथावच्चरितव्रतः ॥ ८

योऽधीते चतुरो वेदान्सर्वानाख्यानपञ्चमान् ।
नित्यं तृप्ता गृहे यस्य देवा यज्ञेषु धर्मतः ॥ ९

अहिंसानिरतो यश्च सत्यवादी दृढव्रतः ।
यस्मिन्सत्यं धृतिर्ज्ञानं तपः शौचं दमः शमः ॥ १०

ध्रुवाणि पुरुषव्याघ्रे लोकपालसमे नृपे ।

---

येऽस्य प्रयोगः । ' इति हैमव्याख्या । प्रत्यूचुः उत्तरं दत्तवन्तः । उत्तरमाह अस्माभिरिति । समनुज्ञाते सति अनुमतौ दत्तायां सत्याम् ।

( ८ ) युक्त चैतादित्याह केति । सर्वगुणोपेतम् गुणशब्दोऽत्र सद्गुणमात्रपरः । सर्वैः सद्गुणैर्युक्तमित्यर्थः । आश्रयेतेति श्रिञो ञित्वादात्मनेपदम् । यथावत् यथायोग्यं चरितव्रतः चरितमाचरितं व्रतं ब्रह्मचर्यं येन तथाभूतः । ' नैकान्नादी भवेद्व्रती 'इत्यादिषु मन्वादिवचनेषु व्रतिपदस्य ब्रह्मचार्यर्थकत्वदर्शनाद् व्रतं ब्रह्मचर्यमित्यर्थः प्रतीयते । यः अखिलान् सर्वान् धर्मान् वेद जानाति । विदो लटो वेति णल् । यथावच्चरितव्रत इत्युत्तरत्रापि संबध्यते ।

( ९ ) य इति । यः आख्यानपञ्चमान् आख्यानं इतिहासः पञ्चमं येषु तान् चतुरः चतुःसंख्याकान् सर्वान् समग्रान् वेदान् अधीते । अर्थज्ञानपूर्वकं पठति । अधिपूर्वादिङोऽध्ययनार्थाल्लट् । अर्थज्ञानपूर्वकं पठनमेवाध्ययनशब्दार्थः । ' आख्यानामीतिहासांश्च ' इत्यादिषु मन्वादिवचनेषु आख्यानानामितिहासतः पार्थक्ये निर्देशात्सौपर्णमैत्रावरुणादीन्याख्यानानीति चेद्बाढं तथैव तन्मन्वादौ । पार्थक्येन निर्देशात् । अत्र पुनराख्यानानां वेदेषु पञ्चमत्वोक्तेः ' इतिहासपुराणं पञ्चमो वेदानां वेदः ' इतिश्रुतेरितिहास एवाख्यानपदार्थः । अयमपि व्याख्यायत एवेति । यस्य गृहे नित्यं धर्मतः धर्मेण ( प्रवृत्तेषु ) यज्ञेषु पञ्चमहायज्ञेषु देवास्तृप्ताः ।

( १०–११ ) अहिंसेति । नित्यं अहिंसायां रतः सक्तः । अहिंसा च कथमपि परद्रोहाभावः । तदाहुर्व्यासपादाः '' अहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः , इति ( योगभाष्ये २ ·३० ) । सत्यवादी सत्यं वदितुं शीलं यस्य तथाभूतः । सत्यमप्युक्त तैरेव तत्रैव यथा ' सत्यं यथार्थे वाङ्मनसे, यथा दृष्टं यथाऽनुमितं यथा श्रुतं तथा वाङ् मनश्चेति । परत्र स्वबोधसंक्रान्तये वागुक्ता, सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेदिति । एषा सर्वभूतोपकाराय प्रवृत्ता न भूतोपघाताय । यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यात्, न सत्यं भवेत् । ' इति । दृढं व्रतं नियमो यस्य । दृढत्वात्कस्मादपि नियमात्कथमप्यविचलितमित्यर्थः ।

---

१ का हि ( क ) कश्च (च.) २ दार्ढ्यं ( क, म. )

एवंरूपं नलं यो वै कामयेच्छपितुं कले !॥ ११
आत्मानं स शपेन्मूढो हन्यादात्मानमात्मना ।
एवंगुणं नलं यो वै कामयेच्छपितुं कले ! ॥ १२
कृच्छ्रे स नरके मज्जेदगाधे विपुले ह्रदे ।

लोकपालसमे इन्द्रादिदिक्पालतुल्ये यस्मिन् पुरुष्याघ्रे नरश्रेष्ठे पुरुषो व्याघ्र इव पुरुषव्याघ्रस्तस्मिन् । ' उपमितं व्याघ्रादिभिः सामान्याप्रयोगे ' इति समासः । सत्य, धृतिः चित्तवृत्तिविशेषः । तदाहुर्गीताभाष्ये भगवन्तो भगवत्पूज्यपादाचार्याः ' धृतिर्धारण, सर्वावस्थास्वनवसादो भवति यया धृत्योत्तम्भितस्ये ' ति ( १८–४३ ) ' महत्यामपि विपदि देहेन्द्रियोत्तम्भिनी चित्तवृत्तिर्धृतिः ' इत्यानन्दगिरिः । अस्याश्च भेदा गीतास्वष्टादशे त्रयस्त्रिंशादिषु पद्येषु द्रष्टव्याः । ज्ञान ' आत्मादिपदार्थानामवबोधः ( गीताभाष्यम् १०–४ ) ' तपः द्वन्द्वसहन, तदुक्त योगभाष्ये ' तपो द्वन्द्वसहन, द्वन्द्वश्च जिघत्सापिपासे, शीतोष्णे, स्थानासने, काष्ठमौनाकारमौने च व्रतानि चैव यथायोग कृच्छ्रचान्द्रायणसान्तपनादीनि । ' इति । ' काष्ठमौन इङ्गितेनापि स्वाभिप्रायाप्रकाशनम्, अवचनमात्रमाकारमौनम्, इति वाचस्पतिमिश्राः । ' शास्त्रोक्तरीत्या निर्द्वेष द्वन्द्वसेवन ( तप. : ) ' इति विज्ञानः । शौच शुचिभावः । ' इगन्ताच्च लघुपूर्वात् ' इत्यण् भावे । शौच च लक्षयति बृहस्पतिः ' अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः । स्वधर्मे च व्यवस्थान शौचमेतत्प्रकीर्तितम् ॥' इति । बाह्याना चाभ्यन्तराणा च मलाना क्षालन शौचमित्यर्थः। अत एवाह व्याघ्रभूतिः ' शौच तु द्विविध प्रोक्त बाह्यमाभ्यन्तर तथा । मृजलाभ्या स्मृत बाह्य, भावशुद्धिस्तथान्तरम् ॥ ' इति ॥ दमो बाह्येन्द्रियोपशमः शमश्चान्तः करणस्योपशमः । ( गीताभाष्ये १०–४ ) उपशमश्च विषयेभ्यो व्यावृतिरित्यानन्दगिरिः । इत्येतानि ध्रुवाणि निश्चलानि । एवरूप ईदृश नल शपितु शप्तु ( शापेन योजयितुम् ) आर्ष इट् । शपतीति शपः । पचाद्यच् । स इवाचरति शपति । आचारे क्विप् । ततस्तु तुमुनि स्याच्छपितुमिति । नलशब्दात्पुनरेव सप्तम्यपेक्ष्यते । कामयेत् । काम ( इच्छा ) कुर्यात् । तत्करोतीति णिच् ।

( १२ ) आत्मानमिति । स मूढः आत्मान शपेत् । नलाय तेन प्रदत्तः शाप आत्मन्येव फल प्रदर्शयेदित्यर्थः । आत्मना स्वयमेव आत्मान हन्यात् । तस्मै शापप्रदाने शप्तुरात्मविनाशः स्यादित्यर्थः ।

( १३ ) कृच्छ्र इति । कृच्छ्रे दुःखहेतौ, हेतुहेतुमतोरभेदोपचारात् । अगाधे गाधः सुखोत्तरणीयो न भवति तथाभूते तत एव च ह्रदे ह्रदतुल्ये ।

१ अतः परं ' अपि नो भागधेयं स्याद् इत्यादीन्येकादश पद्यान्यत्राधिकानि संलक्ष्यन्ते चपुस्तके । एतानि पुनः षष्टितमेऽध्याये सप्तमादीनि सप्तदशान्तानीति नात्र पुनः प्रकाश्यन्ते ।

कालया विदात्

अकृत्वा पादयोः शौचं तत्रैनं कलिराविशत् ॥ ३
स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ४
अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् ॥ ५
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात् ॥ ६
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ७
न चक्षमे ततो राजा समाह्वानं महामनाः ।

---

शश्वायमशतः । अन्यथा पार्थक्येन पुष्करसकाशे गमनासंभवात् । रूपान्तरेण गमनमिति तु नीलकण्ठाशयः ।

( ४ ) स इति । स कलिः । पुष्करस्य एतत्संज्ञस्य नलभ्रातुः । इद एहीत्यादि वक्ष्यमाणप्रकारम् । आह उवाचेत्यर्थः । वचनमाह एहीति । एहि आगच्छ । किमर्थमित्याह नलेनेति । नलेन सह दीव्य द्यूत कुरु । दीव्यतेर्लोट् ।

( ५ ) ननु तत्र मे पराजयः स्यादिति चेन्नेत्याह अक्षद्यूत इति । मया सहितः भवान् अक्षद्यूते अक्षक्रीडायाम् । नल जेता । जयतेर्लुट् । जेष्यतीत्यर्थः । हि निश्चयेन । ततोऽपि को लाभ इत्याह । राज्य प्रतिपद्यस्व प्राप्नुहि ।

( ६ ) एवमिति । अभ्ययात् उपगतवान् । चैवेति चार्थे किंच कलिः गवां वृषभाणां मध्ये वृषः श्रेष्ठो भूत्वा पुष्कर अभि पुष्करमभिलक्ष्य अगात् गतवान् । पुष्करेण साक गतवानित्यर्थः । अभिरभाग इति कर्मप्रवचनीयतायां द्वितीया । कलेश्च वृषभत्व पणसाधनद्रव्यार्थं पुष्करस्येति बोद्धव्यम् । गवां शारीणामिति व्याचक्षाणश्चतुर्भुजो गोशब्दस्य लक्षितलक्षणया पाशकार्थत्व प्रवदश्च नीलकण्ठः क्लिष्टत्वादुपेक्षणीयावेव । अत एवाह भारतमञ्जर्यां क्षेमेन्द्रः 'अह सहायस्ते द्यूते वृषो भूत्वा पुरःस्थितः । द्वापराधिष्कृतैरक्षैः पण मामेव कल्पयेः । ' इति । अन्वगादिति कपुस्तकपाठस्तु साधुतरः ।

( ७ ) आसाद्येति । आसाद्य प्राप्य । परवीरहा शत्रुवीराणां हन्ता भ्राता नलस्येत्यर्थात् । वृषेण पणीभूतेनेति भावः । दीव्याव द्यूत करवाव प्रार्थनायां लोट् ।

( ८ ) नेति । समाह्वान द्यूतार्थमाह्वान न चक्षमे न सोढवान् । प्रेक्षमाणायाः । 'षष्ठी चानादरे' इति षष्ठी । प्रेक्षमाणां ...

---

१ अतः परं 'अपि नो भागधेयं स्यात् इत्यादीन्येकादश पद्यान्यत्राधिकानि संलक्ष्यन्ते चपुस्तके । एतानि पुन. षष्टितमेऽध्याये सप्तमादीनि सप्तदशान्तानीहेति नात्र पुनः प्रकाश्यन्ते ।

अकृत्वा पादयोः शौचं तत्रन कीलरीवशत् ॥ ३
स समाविश्य च नलं समीपं पुष्करस्य च ।
गत्वा पुष्करमाहेदमेहि दीव्य नलेन वै ॥ ४
अक्षद्यूते नलं जेता भवान्हि सहितो मया ।
निषधान्प्रतिपद्यस्व जित्वा राज्यं नलं नृपम् ॥ ५
एवमुक्तस्तु कलिना पुष्करो नलमभ्ययात् ।
कलिश्चैव वृषो भूत्वा गवां पुष्करमभ्ययात् ॥ ६
आसाद्य तु नलं वीरं पुष्करः परवीरहा ।
दीव्यावेत्यब्रवीद्भ्राता वृषेणेति मुहुर्मुहुः ॥ ७
न चक्षमे ततो राजा समाह्वानं महामनाः ।

---

शश्चायमंशतः । अन्यथा पार्थक्येन पुष्करसकाशे गमनासंभवात् । रूपान्तरेंण गमनामिति तु नीलकण्ठाशयः ।

( ४ ) स इति । स कलिः । पुष्करस्य एतत्सशस्य नलभ्रातुः । इद एहीत्यादि वक्ष्यमाणप्रकारम् । आह उवाचेत्यर्थः । वचनमाह एहीति । एहि आगच्छ । किमर्थमित्याह नलेनेति । नलेन सह दीव्य द्यूत कुरु । दीव्यतेर्लोट् ।

( ५ ) ननु तत्र मे पराजयः स्यादिति चेन्नेत्याह अक्षद्यूत इति । मया सहितः भवान् अक्षद्यूते अक्षक्रीडायाम् । नल जेता । जयतेर्लुट् । जेष्यतीत्यर्थः । हि निश्चयेन । ततोऽपि को लाभ इत्याह । राज्य प्रतिपद्यस्व प्राप्नुहि ।

( ६ ) एवमिति । अभ्ययात् उपगतवान् । चैवेति चार्थे किंच कलिः गवां वृषभाणां मध्ये वृषः श्रेष्ठो भूत्वा पुष्कर अभि पुष्करमभिलक्ष्य अगात् गतवान् । पुष्करेण साकं गतवानित्यर्थः । अभिरभाग इति कर्मप्रवचनीयतायां द्वितीया । कलेश्च वृषभत्व पणसाधनद्रव्यार्थं पुष्करस्येति बोद्धव्यम् । गवां शारीणामिति व्याचक्षाणश्चतुर्भुजो गोशब्दस्य लक्षितलक्षणया पाशकार्थत्वं प्रवदश्च नीलकण्ठः क्लिष्टत्वादुपेक्षणीयावेव । अत एवाह भारतमञ्जर्यां क्षेमेन्द्रः 'अहं सहायस्ते द्यूते वृषो भूत्वा पुरःस्थितः । द्वापराविष्कृतैरक्षैः पण मामेव कल्पयेः । ' इति । अन्वगादिति कपुस्तकपाठस्तु साधुतरः ।

( ७ ) आसाद्येति । आसाद्य प्राप्य । परवीरहा शत्रुवीराणां हन्ता भ्राता नलस्येत्यर्थात् । वृषेण पणीभूतेनेति भावः । दीव्याव द्यूत करवाव प्रार्थनायां लोट् ।

( ८ ) नेति । समाह्वान द्यूतार्थमाह्वानं न चक्षमे न सोढवान् । प्रेक्षमाणायाः । 'षष्ठी चानादरे ' इति षष्ठी । प्रेक्षमाणां वैदर्भी ( दमयन्तीं ) अनादृत्येत्यर्थः । पणकालं द्यूतस्य 'काल द्यूतकरणोचितं कालमित्यर्थः ।

---

१ स ( च ) २ तं वै ( क. ) ३ अन्वयात् ( क )

वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ॥ ८
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥ ९
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमरिंदमम् ॥ १०
ततः पौरजनाः सर्वे मन्त्रिभिः सह भारत ! ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ ११
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनो देवि द्वारि तिष्ठति कार्यवान् ॥ १२
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।

---

' क्रय्यशाकाटिकाद्यूतव्यवहार ' इति पणशब्दार्थेषु मेदिनी ।

( ९ ) हिरण्यस्येति । हिरण्यस्य हेम्नः । शेषे षष्ठी । हिरण्यमित्यर्थः । एवमुत्तरत्रापि । सुवर्णस्य शोभनवर्णस्य यानयुग्यस्य युग स्कन्धकाष्ठ वहन्ति युग्याः । ' तद्वहति रथयुगप्रासङ्गम् ' इति यत् । यानानि रथादीनि वाहनानि युग्या अश्ववृषादयश्च यानयुग्यं तस्य । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । तदित्यर्थः । वाससाम् वस्त्राणीत्यर्थः । कलिना आविष्टो नलः । जीयते स्म अजीयत पुष्करेणेति शेषः । जयतेर्दुहादित्वेन द्विकर्मकत्वान्नलस्य च हिरण्यादीना च कर्मत्वम् । अभिभवपूर्वकं च ग्रहण जयतेरर्थः ।

( १० ) तमिति । अक्षमदसमत्त द्यूतजन्येन मदेनोन्मत्तीभूत सुहृदा मध्ये । निवारणे षष्ठी । कश्चन कोऽपि । अरिंदम शत्रुदमन दीप्यमान तेजसा प्रज्वलन्त तम् । षष्ठ्यर्थेऽसौ द्वितीया । निवारणशब्दस्य कृदन्ततया ' कर्तृकर्मणोः कृति ' ति षष्ठ्या अवश्यभावित्वात् आर्षत्वात्तु द्वितीयेत्येके । दीक्षितास्तु ' अनित्येयं षष्ठी, तदर्हमिति निर्देशात् । ' इति कौस्तुभे प्राहुः । ततश्च नात्र द्वितीयाया असाधुत्वम् । शरणदेवोप्येवम् ।

( ११ ) तत इति । पौरजनाः पुरवासिनो लोकाः । मन्त्रिभिः मन्त्रो राजकार्याणा रहस्यालोचनमस्ति कार्यत्वेन तेषा ते. । मत्वर्थ इनिः । आतुर अक्षद्यूतरूपेण रोगेणाभिभूतम् । ' विकृतो व्याधितोऽपटुः । आतुरः ' इत्यमरः राजानं निवारयितु द्रष्टुमागच्छन् ।

( १२ ) तत इति । सूतः सारथिः । 'सूतस्तु सारथौ तक्षिण ' इति मेदिनी । कार्यवान् कार्य किमपि कर्तव्यमस्त्यस्य तथाभूतः । कार्यार्थीत्यर्थः ।

( १३ ) सूतस्य वचनमाह निवेद्यतामिति । नैषधाय नलाय । निवेदनीयमाह सर्वा इति । प्रकृतयः पौरवर्गाः । ' प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । ×× पौरवर्गे ' इति मेदिनी । असूयमाणः असहमान' ।

---

१ प्राप्त (क) २ अत्र पर ' तत स राजा सहसा देवितुं सम्प्रचक्रमे । भ्राता वैराभिभूतेन देवाविष्टो जनाधिप । ' इत्यधिक कपुस्तके ।

अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ १३
ततः सा बाष्पकलया वाचा दुःखेन कर्षिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ १४
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः ॥ १५
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ।
तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधाम् ॥ १६
आविष्टः कलिना राजा नाभ्यभाषत किंचन ।
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ॥१७
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् ।
तथा तदभवद्द्यूतं पुष्करस्य नलस्य च ।

---

स्वरितेत्त्वादात्मनेपदम् । धर्मार्थदर्शिनः धर्मार्थौ द्रष्टु शील यस्य तथाभूतस्य धर्मशास्त्रज्ञस्यार्थशास्त्रज्ञस्य चेत्यर्थः । व्यसनं अक्षद्यूते ससाक्तिम् । 'व्यसन त्वशुभे सक्तौ' इति मेदिनी । द्यूत च कामज व्यसन राज्ञाम् । तदाह मनुः । ( ७–४७ ) 'मृगयाक्षा दिवास्वप्नः ++ कामजो दशको गणः' इति । एतेन चार्थधर्मयोर्नाशस्तेनैवोक्तः 'कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्याम' इति ।

( १४ ) तत इति । दुःखेन करणभूतेन कर्षिता कर्ष आकर्षण स संजातो यस्यास्तथाभूता । दुःखाकृष्टेत्यर्थः । शोकोपहतचेतना शोकेनोपहता ग्रस्ता चेतना बुद्धिर्यस्याः सा । बाष्पकलया बाष्पेण कण्ठानिरोधहेतुना दुःखजेनाश्रुणा कला अव्यक्तमधुरा तया वाचा ।

( १५ ) दमयन्त्या वचनमाह राजन्निति । त्वां दिदृक्षुः द्रष्टुमिच्छुः । द्वारि द्वारदेशे । 'स्त्री द्वार्द्वारम्'। इत्यमरः । राजभक्तिपुरस्कृतः राजविषयकेणानुरागेण पूजितः ( समाननीयता प्राप्तः ) पुरः अग्रे कृत इति वा राजभक्त्या पश्चादवस्थाय नोद्यमान इवेत्यर्थः । 'नमस्पुरसोर्गत्योः' इति सः । एतेनावश्यं द्रष्टव्यत्वं द्योत्यते । इतः पर पद्यमेक प्रक्षिप्तमिति न व्याख्यायते ।

( १६ ) तामिति । तामित्यस्य नाभ्यभाषतेत्युत्तरेण सबन्धः । एवमुत्तरत्रापि प्रतिश्लोकं यावदध्यायम् । रुचिरापाङ्गीं रुचिरौ मनोहरौ अपाङ्गौ नेत्रप्रान्तौ यस्यास्ताम् । विलपन्तीं रुदतीम् ।

( १७ ) आविष्ट इति । कलिना आविष्टः शरीरे कृतप्रवेशः । एष चाभाषणे हेतुः । मन्त्रिण इत्यस्य जग्मुरित्युत्तरेण सबन्धः ।

( १८ ) नेति । व्रीडिताः आत्मनोऽपमानेन लज्जिताः । अय राजा नास्ति । इवेति गम्यम् । असन्निधायमिदानीमिति मन्वाना इति शेषः ।

---

१ इतःपर 'वृद्धैर्ब्राह्मणमुख्यैश्च वणिग्भिश्च समन्वितः । आगत सहित राजन्स्वप्रसादावलम्बनम् ॥' इत्यधिक कपुस्तके ।

वैदर्भ्याः प्रेक्षमाणायाः पणकालममन्यत ॥ ८
हिरण्यस्य सुवर्णस्य यानयुग्यस्य वाससाम् ।
आविष्टः कलिना द्यूते जीयते स्म नलस्तदा ॥ ९
तमक्षमदसंमत्तं सुहृदां न तु कश्चन ।
निवारणेऽभवच्छक्तो दीव्यमानमरिंदमम् ॥ १०
ततः पौरजनाः सर्वे मन्त्रिभिः सह भारत ! ।
राजानं द्रष्टुमागच्छन्निवारयितुमातुरम् ॥ ११
ततः सूत उपागम्य दमयन्त्यै न्यवेदयत् ।
एष पौरजनो देवि द्वारि तिष्ठति कार्यवान् ॥ १२
निवेद्यतां नैषधाय सर्वाः प्रकृतयः स्थिताः ।

---

'क्रय्यशाकादिकाद्यूतव्यवहार' इति पणशब्दार्थेषु मेदिनी ।

( ९ ) हिरण्यस्येति । हिरण्यस्य हेम्नः । शेषे षष्ठी । हिरण्यमित्यर्थः । एवमुत्तरत्रापि । सुवर्णस्य शोभनवर्णस्य यानयुग्यस्य युग स्कन्धकाष्ठ वहन्ति युग्याः । 'तद्वहति रथयुगप्रासङ्गम्' इति यत् । यानानि रथादीनि वाहनानि युग्या अश्ववृषादयश्च यानयुग्य तस्य । सर्वो द्वन्द्वो विभाषयैकवद्भवतीत्येकवद्भावः । तदित्यर्थः । वाससाम् वस्त्राणीत्यर्थः । कलिना आविष्टो नलः । जीयते स्म अजीयत पुष्करेणेति शेष. । जयतेर्दुहादित्वेन द्विकर्मकत्वाच्चलस्य च हिरण्यादीना च कर्मत्वम् । अभिभवपूर्वक च ग्रहण जयतेरर्थ ।

( १० ) तमिति । अक्षमदसमत्त द्यूतजन्येन मदेनोन्मत्तीभूत सुहृदा मध्ये । निर्धारणे षष्ठी । कश्चन कोऽपि । अरिंदम शत्रुदमन दीप्यमान तेजसा प्रज्वलन्त तम् । षष्ठ्यर्थेऽसौ द्वितीया । निवारणशब्दस्य कृदन्ततया 'कर्तृकर्मणोः कृति' ति षष्ठ्या अवश्यभावित्वात् आर्षत्वात्तु द्वितीयेत्येके । दीक्षितास्तु 'अनित्येय षष्ठी, तदर्हामिति निर्देशात् । ' इति कौस्तुभे प्राहुः । ततश्च नात्र द्वितीयाया असाधुत्वम् । शरणदेशोप्येवम् ।

( ११ ) तत इति । पौरजना' पुरवासिनो लोकाः । मन्त्रिभिः मन्त्रो राजकार्याणा रहस्यालोचनमस्ति कार्यत्वेन तेषा तैः । मत्वर्थ इनिः । आतुर अक्षद्यूतरूपेण रोगेणाभिभूतम् । 'विकृतो व्याधितोऽपटुः । आतुरः' इत्यमरः राजान निवारयितु द्रष्टुमागच्छन् ।

( १२ ) तत इति । सूतः सारथिः । 'सूतस्तु सारथौ तक्षिण' इति मेदिनी । कार्यवान् कार्य किमपि कर्तव्यमस्त्यस्य तथाभूतः । कार्यार्थीत्यर्थः ।

( १३ ) सूतस्य वचनमाह निवेद्यतामिति । नैषधाय नलाय । निवेदनीयमाह सर्वा इति । प्रकृतय. पौरवर्गाः । 'प्रकृतिर्गुणसाम्ये स्यादमात्यादिस्वभावयोः । ×× पौरवर्गे' इति मेदिनी । अमृष्यमाणः असहमानः ।

---

१ प्राप्त ( क ) २ अत पर ' तत. स राज्ञा सहासा दवितुं संप्रचक्रमे । भ्राता देवाभिभूतेन देवाविष्टो जनाधिपः । ' इत्यधिकं कपुस्तके ।

अमृष्यमाणा व्यसनं राज्ञो धर्मार्थदर्शिनः ॥ १३
ततः सा बाष्पकलया वाचा दुःखेन कर्षिता ।
उवाच नैषधं भैमी शोकोपहतचेतना ॥ १४
राजन्पौरजनो द्वारि त्वां दिदृक्षुरवस्थितः ।
मन्त्रिभिः सहितः सर्वै राजभक्तिपुरस्कृतः ॥ १५
तं द्रष्टुमर्हसीत्येवं पुनः पुनरभाषत ।
तां तथा रुचिरापाङ्गीं विलपन्तीं तथाविधाम् ॥ १६
आविष्टः कलिना राजा नाभ्यभाषत किंचन ।
ततस्ते मन्त्रिणः सर्वे ते चैव पुरवासिनः ॥१७
नायमस्तीति दुःखार्ता व्रीडिता जग्मुरालयान् ।
तथा तदभवद्द्यूतं पुष्करस्य नलस्य च ।

---

स्मरितेत्त्वादात्मनेपदम् । धर्मार्थदर्शिनः धर्मार्थौ द्रष्टु शील यस्य तथाभूतस्य धर्मशास्त्रस्यार्थशास्त्रस्य चेत्यर्थः । व्यसन अक्षद्यूते सक्तिम् । 'व्यसन त्वशुभे सक्तौ' इति मेदिनी । द्यूत च कामज व्यसन राज्ञाम् । तदाह मनुः । (७-४७) 'मृगयाक्षा दिवास्वप्नः ++ कामजो दशको गणः' इति । एतेन चार्थधर्मयोर्नाशस्तेनैवोक्तः 'कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्याम' इति ।

(१४) तत इति । दुःखेन करणभूतेन कर्षिता कर्षं आकर्षण स संजातो यस्यास्तथाभूता । दुःखाकृष्टेत्यर्थः । शोकोपहतचेतना शोकेनोपहता ग्रस्ता चेतना बुद्धिर्यस्याः सा । बाष्पकलया बाष्पेण कण्ठनिरोधहेतुना दुःखजेनाश्रुणा कला अव्यक्तमधुरा तया वाचा ।

(१५) दमयन्त्या वचनमाह राजन्निति । त्वा दिदृक्षुः द्रष्टुमिच्छुः । द्वारि द्वारदेशे । 'स्त्री द्वार्द्वारम्'। इत्यमरः । राजभक्तिपुरस्कृतः राजविषयकेणानुरागेण पूजितः (समाननीयता प्राप्तः) पुरः अग्रे कृत इति वा राजभक्त्या पश्चादवस्थाय नोद्यमान इवेत्यर्थ. । 'नमस्पुरसोर्गत्योः' इति सः। एतेनावश्य द्रष्टव्यत्वं द्योत्यते । इतः पर पद्यमेक प्रक्षिप्तमिति न व्याख्यायते।

(१६) तामिति । तामित्यस्य नाभ्यभाषतेत्युत्तरेण सबन्धः । एवमुत्तरत्रापि प्रतिश्लोक यावदध्यायम् । रुचिरापाङ्गीं रुचिरौ मनोहरौ अपाङ्गौ नेत्रप्रान्तौ यस्यास्ताम् । विलपन्तीं रुदतीम् ।

(१७) आविष्ट इति । कालिना आविष्टः शरीरे कृतप्रवेशः । एव चाभाषणे हेतुः । मन्त्रिण इत्यस्य जग्मुरित्युत्तरेण सबन्धः ।

(१८) नेति । व्रीडिताः आत्मनोऽवमानेन लज्जिताः । अयं राजा नास्ति । इवेति गम्यम् । असन्निवायमिदानीमिति मन्वाना इति शेषः ।

---

१ इतःपर 'वृद्धैर्ब्राह्मणमुख्यैश्च वणिग्भिश्च समन्वितः । आगत सहित राजन्नप्रसादान्नलम्बनम् ॥' इत्यधिक कपुस्तके ।

युधिष्ठिर ! बहून्मासान्पुण्यश्लोकस्त्वजीयत ॥ १८

इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि ऊनषष्टितमोऽध्यायः ।

---

## षष्टितमोऽध्यायः ।



बृहदश्व उवाच—

दमयन्ती ततो दृष्ट्वा पुण्यश्लोकं नराधिपम् ।
उन्मत्तवदनुन्मत्ता देवने गतचेतसम् ॥ १
भयशोकसमाविष्टा राजन्भीमसुता ततः ।
चिन्तयामास तत्कार्यं सुमहत्पार्थिवं प्रति ॥ २
सा शङ्कमाना तत्पापं चिकीर्षन्ती च तत्प्रियम् ।
नलं च हृतसर्वस्वमुपलभ्येदमब्रवीत् ॥ ३

---

आलयान् गृहान् । 'गृहा' पुंसि च भूम्न्येव निकाय्यनिलयालयाः।' इत्यमर तथा तेन प्रकारेण । बहून् मासान् अनेकेषु मासेष्वविच्छिन्नमित्यर्थः । कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । तु किन्तु पुण्यश्लोकः पवित्रकीर्तिर्नल अजीयत जितः । पुष्करेणेत्यर्थात् । ' श्लोको यशसि पद्ये च ' इत्यमरः ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यामेकोनषष्टितमोऽध्यायः ।

---

( १ ) दमयन्तीति । देवने द्यूते उन्मत्तवत् उन्मत्तमिव गतचेतस नष्टविवेकम् । चेत शब्दोऽत्र विवेक लक्षयति । देवने गत प्रविष्ट अत्यन्त मासक्तमिति यावत् चेतो यस्य तथाभूत वा । दमयन्ती—

(२)भयेति। भयेन, विपदः समापतनसभावनया जातेन शोकेन च समाविष्टा अत्यन्तमाविष्टा। पार्थिव प्रति राज्ञो नलस्य विषये। तत् तस्मिन्काले समुपस्थित सुमहत् अत्यन्तमहत्त्वविशिष्टं कार्यं आत्मनः कर्तव्य इति चिन्तयामास । शैली भगवतो बादरायणस्य यत्तस्मिन्विषये तदानीं सुमहत्कार्यमित्याकल्यामासे त्यार्थे तं प्रति तत्सुमहत्कार्यमित्यादि प्रयुङ्क्ते । अत एव च प्रयुक्तं पूर्व मपि ' चिन्तयामास तत्कार्यं सुमहत्स्वा सुता प्रति ' इति ( ५१- ७ )

( ३ ) सेति । तत् द्यूत पाप अनिष्ट अनिष्टहेतुमित्यर्थः । पापशब्दोऽनि ष्टार्थः कल्पद्रुमे द्रष्टव्य' हेतुहेतुमतोरभेदोपचारः । शङ्कमाना सभावयन्ती तत्प्रिय तस्य राज्ञः प्रिय चिकीर्षन्ती कर्तुमिच्छन्ती नलमिति उपक्रमानुरो धात्सर्वनाम्नैव परामर्शनीये नलमिति प्रयोग आर्षत्वात् । हृतसर्वस्व हृत सर्व स्व धन यस्य तथाभूत उपलभ्य ज्ञात्वा । उपपूर्वो हि लभिर्ज्ञानार्थ' । अब्र वीदित्यस्य बृहत्सेनामित्यनेनोत्तरेण सबन्ध' ।

बृहत्सेनामतियशां तां धात्रीं परिचारिकाम्।
हितां सर्वार्थकुशलामनुरक्तां सुभाषिताम्॥ ४
बृहत्सेने! व्रजामात्यानानाय्य नलशासनात्।
आचक्ष्व यद्धृतं द्रव्यमवशिष्टं च यद्वसु॥ ५
ततस्ते मन्त्रिणः सर्वे विज्ञाय नलशासनम्।
अपि नो भागधेयं स्यादित्युक्त्वा नलमाव्रजन्॥ ६
तास्तु सर्वाः प्रकृतयो द्वितीयं समुपस्थिताः।
न्यवेदयद्भीमसुता न च स प्रत्यनन्दत॥ ७
वाक्यमप्रतिनन्दन्तं भर्तारमभिवीक्ष्य सा।
दमयन्ती पुनर्वेश्म व्रीडिता प्रविवेश ह॥ ८

(४) बृहत्सेनामिति। बृहत्सेनेति धात्र्याः संज्ञा। अतियशा अत्यन्तं यशो यस्यास्तथाभूताम्। यशसोऽदन्तत्वमार्षम्। धात्रीमुपमातरम्। परिचारिकां सेविकाम्। परिपूर्वो हि चरतिः सेवने। हितां हितकारिणीम्। सर्वार्थकुशलां सर्वेषु कार्येषु कुशलाम्। सुभाषिता शोभनं भाषितं भाषणं यस्यास्तथाभूताम्। भाषितमिति भावेऽर्थनपुंसके भावे क्तः। अनुरक्ता अनुरागवतीम्।

(५) वचनमाह बृहत्सेन इति। व्रज गच्छ नलशासनात् नलस्याज्ञया अमात्यान् अमा सह भवाः तेषु तेषु कार्येष्वालोचनार्थं वर्तमाना अमात्या मन्त्रिणः तान्। 'अव्ययात्त्यप्' इति त्यप्। 'मन्त्री धीसचिवोऽमात्यः' इत्यमरः। आनाय्य आनीयेत्यर्थः। निवृत्तप्रेषणान्नयतेः प्रयोजकणिचि क्त्वो ल्यप्। दूताद्द्वारा आनाय्येति वार्थः। तन्मन्दिरात्कार्यस्थानमानीयेत्यर्थः। अर्थस्य रहस्येव निवेदनीयत्वादानाय्याचक्ष्वेत्युक्तिः। यत् द्रव्यं हृतं पुष्करेणेत्यर्थात् च किञ्च यत् अवशिष्टं अवशेषभूतं वसु द्रव्यं नलस्य तदाचक्ष्व। अतः परं कपुस्तके सदृश्यमानमावश्यकं प्रक्षिप्तं स्पष्टार्थं पद्यम्।

(६) तत इति नलशासनं बृहत्सेनया कथितं विज्ञाय ज्ञात्वा। अपीति वितर्के। नः अस्माकं भागधेयं भाग्यं स्यादपि। कच्चिदस्मदीयं भाग्यं नलभूतविरामलक्षणं फलं प्रदर्श्यात्मनोऽस्तित्वं प्रकाशयेत्? इति उक्त्वा। आव्रजन् आगताः।

(७) ता इति। तुकारस्तत इत्यर्थे। भीमसुता दमयन्ती कर्त्री ताः सर्वाः प्रकृतयो मन्त्रिणः द्वितीयं द्वितीयवारं समुपस्थिताः प्राप्ताः इतीति शेषः। इति न्यवेदयत् अकथयत् नलायेत्यर्थात्। स नलः चकारस्त्वर्थे। न प्रत्यनन्दत नाभ्यनन्दयत् नन्दतिरन्तर्भावितण्यर्थः। आर्षमात्मनेपदम्।

(८) वाक्यमिति। सा दमयन्ती भर्तारं पतिं नलं वाक्यमात्मनो वचनं अप्रतिनन्दन्तं अभिनन्दनेनायोजयन्तं अभिवीक्ष्य वेश्म गृहं प्रविवेश।

१ अतः परं 'इत्येवं सा समादिष्टा बृहत्सेना नरेश्वर। उवाच देव्या वचनं मन्त्रिणो सा समीपतः॥' इत्यधिकं कपुस्तके। २ पुनरावजन् (क) ३ तद् (क. म. न.)

निशम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ९
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ १०
बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ११
वार्ष्णेयं तु ततो भैमी सान्त्वयच्छ्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ १२
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥ १३
यथा यथा हि नृपतिः पुष्करेणैव जीयते ।
तथा तथाऽस्य वै द्यूते रागो भूयोऽभिवर्धते ॥ १४

---

( ९ ) निशम्येति । अक्षान् पाशकान् पुण्यश्लोकपराङ्मुखान् पुण्यश्लोकान् नलात् पराङ्मुखान् विमुखान् नलविरुद्धानित्यर्थः निशम्य श्रुत्वा । हृतसर्वस्वं हृतं सर्वं स्वं धनं यस्य तथाभूतम् ।

( १० ) बृहत्सेने इति । हे कल्याणि शुभे बृहत्सेने ! नलशासनात् नलस्याज्ञया वार्ष्णेयमेतन्नामानं सूतं सारथिम् आनय । कुत इत्याह महदिति । यतः महत् कार्यं प्रयोजनं । ' कार्यं हेतौ प्रयोजने ' इति मेदिनी ।

( ११ ) बृहत्सेनेति । आप्तकारिभिः आप्तशब्दोऽत्र भावप्रधानः । आप्तेन आप्ततया श्रद्धेयतया कर्तुं कार्यमनुष्ठातुं शील येषां तथाभूतैः । श्रद्धेयैरित्यर्थः । आनयामास । आनयतेर्ण्यन्ताल्लिट् । आप्तेतिभावप्रधानो निर्देशः ।

( १२ ) वार्ष्णेयमिति । सान्त्वयन्नित्यपि पुस्त्वं, सान्त्वयन्तीत्यर्थः । पान्त्वसान्त्वप्रयोग इत्यतश्चौरादिकाल्लटः शता । सामप्रयोगे विपर्यीकुर्वतीत्यर्थः। स्वामिनः पराभवमसहमानस्य क्षोभसम्भावनया सान्त्वनम् । श्लक्ष्णया मनोहरया । अनिन्दिता प्रशंसनीया, देशकालज्ञा देशमात्मनाऽधिष्ठितं, कालं च जानाति तथाभूता । तस्मिन् देशे तथाविधे च काले यत्कर्तव्यं तज्जानातीत्यर्थः । प्राप्तकालं प्राप्तः कालो यस्य तथाभूतम् । वचनमित्यध्याहार्यम् ।

( १३ ) वचनमाह जानीष इति । त्वयि त्वद्विषये तथा सम्यग्वृत्तः सम्यक् वृत्तं वर्तनं यस्य तथाभूतः । तथा त्वं जानीषे । एतेन च समयेऽस्मिन्साहाय्यस्याकरणे कृतघ्नत्वापत्तिरिति द्योत्यते । विषमस्थस्य संकटे वर्तमानस्य । ' कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् । ' इति गीता ।

( १४ ) विषममाह यथेति । द्यूते रागः प्रणयः आसक्तिरिति यावत् । भूयः भूयिष्ठं यथा तथा अभिवर्धते ।

---

१ निशाम्य ( क ) २ सान्त्वयच्छ्लक्ष्णया ( क, म. )

यथा च पुष्करस्याक्षाः पतन्ति वशवर्तिनः
तथा विपर्ययश्चापि नलस्याक्षेषु दृश्यते ॥ १५
सुहृत्स्वजनवाक्यानि यथाऽयं न शृणोति च।
ममापि च तथा वाक्यं नाभिनन्दति मोहितः ॥ १६
नूनं मन्ये न दोषोऽस्ति नैषधस्य महात्मनः।
यत्तु मे वचनं राजा नाभिनन्दति मोहितः ॥ १७
शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः।
न हि मे शुध्यते भावः कदाचिद्विनशेदपि ॥ १८

(१५) आस्तां नन्वेतत्। कदाचिदेतेनापि पुष्करो जीयेतेति चेन्नैतदस्तीत्याह यथा चेति। यथा पुष्करस्य वशवर्तिनः सन्तः पतन्ति तथा नलस्यापि अक्षेषु विपर्ययः वैपरीत्यं वशवर्तित्वाभाव इत्यर्थः। तदत्र नास्ति विजयप्रत्याशेति भावः।

(१६) यद्येवं, उपदिश्यतामिदानीं सुहृद्भिरिति चेत्तदपि निष्फलमित्याह सुहृदिति। सुहृदां मित्राणां स्वजनानां स्वीयानां (संबन्धिनां) च वाक्यानि यथावत् यथायोग्यं न शृणोति न च नश्शृणोत्यपि। दूरे तावत्तदुपादिष्टार्थानुष्ठानमिति भावः। ननु भोः सुहृदुपदेशापेक्षया सहधर्मिण्युपदेशो ज्यायान्। स हि बलादिवावर्जयत्यन्तःकरणं सर्वाङ्गमनोरम इति प्रवृत्यता तावदत्रेति चेत्सोऽप्यत्र काननचन्द्रिकायमान एवेत्याह ममेति। नाभिनन्दति न बहुमन्यते। तत्र हेतुः मोहित इति। मोह विवेकशक्तिशून्यता प्राप्तः। 'अहह गहनो मोहमहिमे' ति भावः।

(१७) ननु भो गरीयानय दोषो यदात्मनो बहिश्चराणा प्राणानां सहधर्मिण्या अपि वचो न शृणोति चेन्नायमेतस्य दोषः किन्तु भवितव्यताया एवेत्याह यत्त्विति। राजा मोहितः सन् यन्मे वचन नाभिनन्दति सोऽय तस्य महात्मनो नैषधस्य दोषो नून नेति मन्य इति संबन्धः। 'प्रायः शुभं च विदधात्यशुभं च जन्तोः, सर्वङ्कषा भगवती भवितव्यतैवे' ति भावः।

(१८) तदिदानीं त्वयैवाधीयतां साहाय्यमित्याह शरणमिति। त्वां शरणं रक्षितारं प्रपन्ना प्राप्ता। त्वमेवेदानीं नो रक्षितेति भावः। मद्वचः मदुक्तमर्थमित्यर्थः। ननु भोः प्रतीक्ष्यतां तावत् कदाचित्परस्ताद्विजयोऽप्यस्य सम्भविष्यतीति चेन्नैतदस्तीत्याह नेति। मे मम भावो हृदय न शुध्यते न निर्मलं भवति। संदिग्ध इवेत्यर्थः। अतः कदाचित् विनशेदपि विनाशमपि प्राप्नुयात्। सभावनायां लिङ्। 'गणकार्यमनित्यम्' इत्युक्तेः 'न विश्वसेदविश्वस्तम्' इत्यादिवत् शप्। शुध्यत इत्यार्षमात्मनेपदम्। 'सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः' इति मनसो मे सान्दिग्धत्वमेव

१ नैषधः (क) २ इतःप्राक् 'यथा राज्ञः प्रदीप्ताना भाग्यानामद्य मारथे।' इत्यधिकं पद्यार्धं कपूरतके। ३ दोषः (क) ४ विनाशं प्रति सारथे (क)

निशम्य सततं चाक्षान्पुण्यश्लोकपराङ्मुखान् ।
नलं च हृतसर्वस्वं धात्रीं पुनरुवाच ह ॥ ९
बृहत्सेने पुनर्गच्छ वार्ष्णेयं नलशासनात् ।
सूतमानय कल्याणि महत्कार्यमुपस्थितम् ॥ १०
बृहत्सेना तु सा श्रुत्वा दमयन्त्याः प्रभाषितम् ।
वार्ष्णेयमानयामास पुरुषैराप्तकारिभिः ॥ ११
वार्ष्णेयं तु ततो भैमी सान्त्वयञ्श्लक्ष्णया गिरा ।
उवाच देशकालज्ञा प्राप्तकालमनिन्दिता ॥ १२
जानीषे त्वं यथा राजा सम्यग्वृत्तः सदा त्वयि ।
तस्य त्वं विषमस्थस्य साहाय्यं कर्तुमर्हसि ॥१३
यथा यथा हि नृपतिः पुष्करेणैव जीयते ।
तथा तथाऽस्य वै द्यूते रागो भूयोऽभिवर्धते ॥ १४

( ९ ) निशम्येति । अक्षान् पाशकान् पुण्यश्लोकपराङ्मुखान् पुण्यश्लोकात् नलात् पराङ्मुखान् विमुखान् नलविरुद्धानित्यर्थः निशम्य श्रुत्वा । हृतसर्वस्व हृत सर्वं स्व धन यस्य तथाभूतम् ।

( १० ) बृहत्सेन इति । हे कल्याणि शुभे बृहत्सेने । नलशासनात् नलस्याज्ञया वार्ष्णेयमेतन्नामान सूत सारथिम् आनय । कुत इत्याह महदिति। यतः महत् कार्यं प्रयोजन । ' कार्यं हेतौ प्रयोजने ' इति मेदिनी ।

( ११ ) बृहत्सेनेति । आप्तकारिभिः आप्तशब्दोऽत्र भावप्रधानः । आप्तेन आप्ततया श्रद्धेयतया कर्तुं कार्यमनुष्ठातु शील येषां तथाभूतैः । श्रद्धेयैरित्यर्थः । आनयामास । आनयतेर्ण्यन्ताल्लिट् । आप्तेतिभावप्रधानो निर्देशः ।

( १२ ) वार्ष्णेयमिति । सान्त्वयन्नित्यार्षं पुंस्त्व, सान्त्वयन्तीत्यर्थः । षान्त्वसान्त्वप्रयोग इत्यतश्चौरादिकाल्लटः शता । सामप्रयोगे विषयीकुर्वतीत्यर्थः। स्वामिनः पराभवमसहमानस्य क्षोभसंभावनया सान्त्वनम् । श्लक्ष्णया मनोहरया । अनिन्दिता प्रशसनीया, देशकालज्ञा देशमात्मनाऽधिष्ठित, काल च जानाति तथाभूता । तस्मिन् देशे तथाविधे च काले यत्कर्तव्य तज्जानतीत्यर्थः । प्राप्तकाल प्राप्तः कालो यस्य तथाभूतम् । वचनमित्यध्याहार्यम् ।

( १३ ) वचनमाह जानीष इति । त्वयि त्वद्विषये तथा सम्यग्वृत्तः सम्यक् वृत्त वर्तन यस्य तथाभूतः । तथा त्व जानीषे । एतेन च समयेऽस्मिन्साहाय्यस्याकरणे कृतघ्नत्वापत्तिरिति द्योत्यते । विषमस्थस्य संकटे वर्तमानस्य । ' कुतस्त्वा कश्मलमिद विषमे समुपस्थितम् । ' इति गीता ।

( १४ ) विषममाह यथेति । द्यूते रागः प्रणय आसक्तिरिति यावत् । भूयः भूयिष्ठ यथा तथा अभिवर्धते ।

१ निशाम्य ( क ) २ सान्त्वयञ्श्लक्ष्णया ( क. म. )

यथा च पुष्करस्याक्षाः पतन्ति वशवर्तिनः
तथा विपर्ययश्चापि नलस्याक्षेपु दृश्यते ॥ १५
सुहृत्स्वजनवाक्यानि यथाऽयं न शृणोति च ।
ममापि च तथा वाक्यं नाभिनन्दति मोहितः ॥ १६
नूनं मन्ये न दोषोऽस्ति नैषधस्य महात्मनः ।
यत्तु मे वचनं राजा नाभिनन्दति मोहितः ॥ १७
शरणं त्वां प्रपन्नाऽस्मि सारथे कुरु मद्वचः ।
न हि मे शुध्यते भावः कदाचिद्विनशेदपि ॥ १८

( १५ ) आस्तां नन्वेतत्। कदाचिदेतेनापि पुष्करो जीयेतेति चेन्नैतदस्तीत्याह यथा चेति । यथा पुष्करस्य वशवर्तिनः सन्तः पतन्ति तथा नलस्यापि अक्षेपु विपर्ययः वैपरीत्य वशवर्तित्वाभाव इत्यर्थः । तदत्र नास्ति विजयप्रत्याशेति भावः ।

( १६ ) यद्येवं, उपदिश्यतामिदानीं सुहृद्भिरिति चेत्तदपि निष्फलमित्याह सुहृदिति । सुहृदां मित्राणां स्वजनाना स्वीयानां ( संबन्धिनां ) च वाक्यानि यथावत् यथायोग्यं न शृणोति न च नशृणोत्यपि। दूरे तावत्तदुपादिष्टार्थानुष्ठानमिति भावः । ननु भोः सुहृदुपदेशापेक्षया सहधर्मिण्युपदेशो ज्यायान्। स हि बलादिवावर्जयत्यन्तःकरणं सर्वाङ्गमनोरम इति प्रवृत्यतां तावदत्रेति चेत्सोऽप्यत्र काननचान्द्रिकायमान एवेत्याह ममेति । नाभिनन्दति न बहुमन्यते । तत्र हेतुः मोहित इति । मोह विवेकशक्तिशून्यता प्राप्तः । 'अहह गहनो मोहमाहिमे ' ति भावः ।

( १७ ) ननु भो गरीयानय दोषो यदात्मनो बहिश्चराणां प्राणानां सहधर्मिण्या अपि वचो न शृणोति चेन्नायमेतस्य दोषः किन्तु भवितव्यताया एवेत्याह यत्त्विति । राजा मोहितः सन् यन्मे वचन नाभिनन्दति सोऽय तस्य महात्मनो नैषधस्य दोषो नूनं नेति मन्य इति संबन्धः । 'प्रायः शुभं च विदधात्यशुभं च जन्तोः, सर्वङ्कषा भगवती भवितव्यतैवे ' ति भावः।

( १८ ) तदिदानीं त्वयैवाधीयतां साहाय्यमित्याह शरणमिति । त्वां शरणं रक्षितार प्रपन्ना प्राप्ता । त्वमेवेदानीं नो रक्षितेति भावः । मद्वचः मदुक्तमर्थमित्यर्थः । ननु भोः प्रतीक्ष्यतां तावत् कदाचित्परस्ताद्विजयोऽप्यस्य संभविष्यतीति चेन्नैतदस्तीत्याह नेति । मे मम भावो हृदय न शुध्यते न निर्मल भवति । संदिग्ध इवेत्यर्थः। अतः कदाचित् विनशेदपि विनाशमपि प्राप्नुयात् । संभावनायां लिङ् । ' गणकार्यमनित्यम् ' इत्युक्तेः ' न विश्वसेदविश्वस्तम् ' इत्यादिवत् शप् । शुध्यत इत्यार्षमात्मनेपदम् ।' सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय ' इति मनसो मे सान्दिग्धत्वमेव

१ नैषधः ( क ) २ इतःप्राक् ' यथा राज्ञः प्रदीप्ताना भाग्यानामद्य सारथे । ' इत्यधिकं पद्यार्धं कपुस्तके । ३ दोषः ( क ) ४ विनाशं प्रति सारथे ( क )

ऋतुपर्णं स राजानमुपतस्थे सुदुःखितः ।
भृतिं चोपययौ तस्य सारथ्येन महीपतेः ॥ २५

इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
षष्टितमोऽध्यायः ।

## एकषष्टितमोऽध्यायः ।



बृहदश्व उवाच—

ततस्तु याते वार्ष्णेये पुण्यश्लोकस्य दीव्यतः ।
पुष्करेण हृतं राज्यं यच्चान्यद्वसु किंचन ॥ १
हृतराज्यं नलं राजन्प्रहसन्पुष्करोऽब्रवीत् ।
द्यूतं प्रवर्ततां भूयः प्रतिपाणोऽस्ति कस्तव ॥ २
शिष्टा ते दमयन्त्येका सर्वमन्यज्जितं मया ।
दमयन्त्याः पणः साधु वर्ततां यदि मन्यसे ॥ ३
पुष्करेणैवमुक्तस्य पुण्यश्लोकस्य मन्युना ।
व्यदीर्यतेव हृदयं न चैनं किंचिदब्रवीत् ॥ ४

( २५ ) ऋतुपर्णमिति । ऋतुपर्णो नलसमसामयिकोऽयोध्याधिपतिः । उपतस्थे वृत्तिलिप्सया उपजगाम । 'उपपूर्वात्तिष्टतेर्लिट्' 'वा लिप्सायामिति वक्तव्य' मित्यात्मनेपदम् । भृतिं वेतनं, सारथ्येन सारथि कर्मणा करणभूतेन।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां षष्टितमोऽध्यायः।

---

( १ ) तत इति वार्ष्णेये पूर्वाध्यायनिर्दिष्टे सारथौ । याते सति । पुण्यश्लोकस्य नलस्य राज्यं राष्ट्रम् । यच्च अन्यत् किंचन किमपि वसु द्रव्यं तदपीति चच्छब्दबलाल्लभ्यते ।

( २ ) हृतराज्यमिति । प्रहसन् परिहासविषयीकुर्वन् प्रहासशब्दश्च परिहासार्थः 'प्रहासे च मन्योपपद' इत्यत्र सिद्धान्तकौमुद्यां द्रष्टव्यः । भूयः पुनरपि द्यूतं कर्तुं प्रवर्ततां प्रवृत्तं भवतु । प्रतिपाणः प्रतिपणीकरणार्थं वस्तु । पण एव पाणः । स्वार्थेऽण् । आदितः पुष्करेण पणीकृते वस्तुनि पणीकरणीयस्य नलस्य वस्तुनः प्रतिपणत्वोक्तिः ।

( ३ ) शिष्टेति । एका केवला । शिष्टा अवशिष्टा । पणः पणीकरणम् । साधु यथा तथा वर्ततां भवतु ।

( ४ ) पुष्करेणेति । मन्युना कोपेन हेतुभूतेन । व्यदीर्यतेव विदीर्णं बभूवेव । विपूर्वाद्दीर्यतेर्लङ् । चकारस्त्वर्थे । च किन्तु एनं पुष्करं किंचित् किमपि । नाब्रवीत् नोक्तवान् विपदि सहिष्णुत्वस्यैव श्रेयस्त्वादिति भावः ।

१ च स ददौ चास्य सारथ्येन नियोजितः (क) २ महीपत (च. म.) ३ यच्चापि (क) ४ द्यूतं (क)

त्रिरात्रमुषितो राजा जलमात्रेण वर्तयन् ॥ १०
पीड्यमानः क्षुधा तत्र फलमूलानि कर्षयन् ।
प्रातिष्ठत ततो राजा दमयन्ती तमन्वगात् ॥ ११
क्षुधया पीड्यमानस्तु नलो बहुतिथेऽहनि ।
अपश्यच्छकुनान्कांश्चिद्धिरण्यसदृशच्छदान् ॥ १२
स चिन्तयामास तदा निषधाधिपतिर्बली ।
अस्ति भक्ष्यो ममाद्यायं वसु चेदं भविष्यति ॥ १३
ततस्तान्परिधानेन वाससा स समावृणोत् ।
तस्य तद्वस्त्रमादाय सर्वे जग्मुर्विहायसा ॥ १४
उत्पतन्तः खगा वाक्यमेतदाहुस्ततो नलम् ।
दृष्ट्वा दिग्वाससं भूमौ स्थितं दीनमधोमुखम् ॥ १५
वयमक्षाः सुदुर्बुद्धे तव वासो जिहीर्षवः ।

---

न्तोऽपीति मुकुटः । जलमात्रेण केवलेन जलेन करणभूतेन वर्तयन् वृत्तिं कुर्वन् सन् । जलमात्रमेवाभ्यवहरन् सन्नित्यर्थः । उषितः वास कृतवान् ।

( ११ ) पीड्यमान इति । क्षुधा क्षुधया कर्त्र्या । तत्र नगरसमीपे फलमूलानि कर्षयन् आकर्षन् । चौरादिकस्यापरिसमाप्तत्वाण्णिच् स्वार्थे । प्रातिष्ठत प्रयाण कृतवान् । 'समवप्रविभ्यःस्थ' इत्यात्मनेपदम् । अन्वगात् अन्वगमत् । इणो लुङ् ।

( १२ ) क्षुधयेति । बहुतिथे बहूना पूरणे । 'बहुपूगगणसङ्घस्य तिथुक्' इति डट् तिथुक् च । अहनि दिवसे । हिरण्यसदृशच्छदान् हिरण्येन सुवर्णेन सदृशाश्छदाः पक्षाणि येषां तथाभूतान् । 'छदः पलाशे गरुति' इति मेदिनी । शकुनान् पक्षिणः । ' शकुन्तशकुनद्विजाः ' इत्यमरः ।

( १३ ) अस्तीति । अयं पक्षिसमूहः भक्ष्यः भक्षणार्हः । इद पक्षिसमुदायरूप वसु धनं च भविष्यति । स्वर्णमयत्वादेतत्पक्षाणामिति भावः ।

( १४ ) तत इति । परिधानेन परिधीयते गात्रमनेन तथाभुतेन । करणे ल्युट् । वाससा वस्त्रेण । अधोवसनेनेत्यर्थः । तदेकवस्त्रत्वात्तस्य । परिधानशब्दस्याधोवसनवाचित्वेऽपि परिधानसाधनवाचकता विशिष्टवाचकानामिति न्यायात् । सर्वे पक्षिणः विहायसा आकाशमार्गेण ।

( १५ ) उत्पतन्त इति । उत्पतन्तः उड्डयमानाः खगाः- पक्षिणः । दिग्वाससं दिश एव वासो वस्त्र यस्य तथाभूत वस्त्रशून्यमित्यर्थः । तत एव च अधोमुख अवनतमुखम् । लज्जितत्वादिति भावः ।

(१६) वचनमाह वयमिति । सुदुर्बुद्धे ! सुतरां दुष्टा बुद्धिर्यस्य तथाभूत नल । गालिरियम् । वय पक्षिणः । अक्षाः पाशकाः । वासो वस्त्र जिहीर्षवः हर्तुमि-

---

१ चापि ( क ) भक्षो ममापीदं ( च ) २ अन्तरीयेण ( क. )

आगता न हि नः प्रीतिः सवाससि गते त्वयि ॥ १६
तान्समीपगतान्दृष्ट्वा आत्मानं च विवाससम् ।
पुण्यश्लोकस्तदा राजा दमयन्तीमथाब्रवीत् ॥ १७
येषां प्रकोपादैश्वर्यात्प्रच्युतोऽहमनिन्दिते ।
प्राणयात्रां न विन्देयं दुःखितः क्षुधयाऽन्वितः ॥ १८
येषां कृते न सत्कारमकुर्वन्मामि नैषधाः ।
इमे ते शकुना भूत्वा वासो भीरु हरन्ति मे ॥ १९
वैषम्यं परमं प्राप्तो दुःखितो गतचेतनः ।
भर्ता तेऽहं निबोधेदं वचनं हितमात्मनः ॥ २०
एते गच्छन्ति बहवः पन्थानो दक्षिणापथम् ।
अवन्तीमृक्षवन्तं च समतिक्रम्य पर्वतम् ॥ २१
एष विन्ध्यो महाशैलः पयोष्णी च समुद्रगा ।

च्छन्तः सन्त.।हरते' सन्नन्तादुः। आगता'। किमर्थमियमिच्छेत्याह नेति। हि त्वयि सवाससि वस्त्रयुक्ते गते सति नः अस्माकं प्रीतिः हर्षः न तस्मादागता इत्यर्थः।

(१७) तानिति। विवासस विगत वासो यस्मात्तथाभूत वस्त्रशून्यमित्यर्थः।। राजन्नित्यत्र वीक्ष्येति पाठः साधुतमः। तान्पक्षिरूपानक्षानात्मान च वीक्ष्येत्यर्थः।

(१८) वचनमाह येषामिति। हे अनिन्दिते प्रशस्ते दमयन्ति! येषा प्रकोपात् हेतुभूतात् ऐश्वर्यात् प्रच्युतः प्रभ्रष्टः दुःखितः क्षुधयाऽन्वितः सन्नपि प्राणयात्रां प्राणरक्षणोपाय अभ्यवहार्यं, यात्राशब्द उपायार्थः कल्पद्रुमे द्रष्टव्यः। न विन्देयं प्राप्तु न शक्नुयाम्। शकि लिङ् चेति।विन्दतेर्लिङ्।

(१९) येषामिति। येषां कृते यैरेव निमित्तभूतैरित्यर्थः। 'निमित्त पर्यायप्रयोगे सर्वासा प्रायो दर्शन'मिति षष्ठी।कृतेशब्दस्त्वव्ययम्। नैषधाः निषधा निवासो येषा ते (निषधदेशवासिनः) लोकाः कर्तारः। 'सोऽस्य निवास' इत्यण्। मयि मद्विषये। त इमे अक्षा इत्यर्थ'।हे भीरु भयशीले दमयन्ति। 'वासश्चापहरन्ति मे' इति पाठे चकारोऽप्यर्थ.। अन्यत्सर्वमपहृतमिदानी-मवशिष्टं वासोऽप्यपहरन्तीत्यर्थः।

(२०) वैषम्यामिति। परम आत्यन्तिक वैषम्य दुःखम्। गतचेतनः नष्टबुद्धिः। 'प्रतिपज्ज्ञप्तिचेतनाः' इति बुद्धिपर्यायेष्वमरः। हित हिते हेतु-भूतं इद मयोदीर्यमाण। निबोध शृणु। निपूर्वको हि बोधतिः श्रवणार्थः।

(२१) अथ पितृपुरमेव प्रयातु क्लेशासहा दमयन्तीत्यभिप्रेत्य नाना-विधदेशाख्यानच्छलेन विदर्भगामिन मार्गमुपदिशति। एत इति। दक्षिणा-पथं दक्षिणा दक्षिणस्या दिशः पन्था देशविशेषः।यं हिन्देदानीं दाक्षिणात्याच-क्षते। दक्षिणादाजित्याच्। 'ऋक्पूरब्धूः पथामानक्षे' इत्यक्षः। अवन्ती उज्जयिनी। केचित्तु नगरीयमुज्जयिनीतः शोणार्थान्तारितेत्याहुः। वस्तुतस्तु

१ समीक्ष्य (क. ग.) २ वासश्चापहरन्ति म (घ) वासोऽप्यपहरन्ति मे (ग.)

आश्रमाश्च महर्षीणां बहुमूलफलान्विताः ॥ २२
एष पन्था विदर्भाणामसौ गच्छति कोसलान् ।[1]
अतःपरं च देशोऽयं दक्षिणे दक्षिणापथः ॥ २३
एतद्वाक्यं नलो राजा दमयन्तीं समाहितः ।
उवाचासकृदार्तो हि भैमीमुद्दिश्य भारत ॥ २४
ततः सा बाष्पकलया वाचा दुःखेन कर्षिता ।
उवाच दमयन्ती तं नैषधं करुणं वचः ॥ २५
उद्वेजते मे हृदयं सीदन्त्यङ्गानि सर्वशः ।
तव पार्थिव संकल्पं चिन्तयन्त्याः पुनः पुनः ॥ २६
हृतराज्यं हृतद्रव्यं विवस्त्रं क्षुच्छ्रमान्वितम् ।
कथमुत्सृज्य गच्छेयमहं त्वां निर्जने वने ॥ २७

'यल्लङ्कोज्जयिनी' त्यादौ भास्करेणोज्जयिन्याः 'रोहितकमवन्ती चेति' सूर्येण चावन्त्या भूमध्यरेखागतत्वेनोपवर्णनादवन्त्येवोज्जयिनी प्राचां मत इति प्रतीयते । अत एव च 'उज्जयिनी स्याद्विशालावन्ती पुष्पकरण्डिनी' इति हैमः ।

( २२ ) एष इति । पयोष्णी तापीत्यर्वाचीना' । 'तापी पयोष्णी रेवाचे' त्यादिषु पुन' पुराणवचनेषु पयोष्ण्यास्तापीत पार्थक्येन निर्देशाद्भिन्नैव तापीतः पयोष्णीति प्रतीयते ।

(२३) एष इति । कोशलान् कोशलदेशम् । कोशलामिति पाठे तु कोशलदेशराजधानीमित्यर्थः। एतस्य च प्रदेशस्य विदर्भसन्निहितत्वाद्दमयन्त्यै निवेदनम्।

( २४ ) एतदिति । एतत्पूर्वोक्त मार्गनिर्देशविषयकम् । समाहितः समाधानयुक्तः । तत्र हेतुमाह आर्त इति । हि यत भैमीमुद्दिश्य आर्तः दमयन्तीविषये पीडित' । दमयन्त्याः क्लेशेन क्लिश्यन्नित्यर्थ. । वर वियोगो न तु प्रेयस्याः क्लेशानुभवावलोकनमिति मन्वानस्य मार्गोपदेशे समाहितता ।

( २५ ) तत इति । बाष्पकलया अव्यक्तमधुरया ।

( २६ ) उद्वेजत इति । उद्वेजते उद्वेग ( खेद ) प्राप्नोति । गणकार्यस्यानित्यत्वाद्विजतेः शप् । बिभेतीति वा । 'ओविजी भयचलनयोः' इत्युक्तेः । उद्वेपत इति पाठे तु भीत्या कम्पत इत्यर्थः । सर्वशः सर्वाणि अङ्गानि अवयवाः सीदन्ति अवशीर्यमाणानीव भवन्ति । दुःखातिशयवशादिति भावः । संकल्पमभिलापम् ।

( २७ ) हृतेति । उत्सृज्य त्यक्त्वा । निर्जने जनशून्ये । पूर्वार्धेन साहाय्यस्यावश्यकत्व निर्जने वन इत्यनेन च साहाय्यस्यात्यन्तमसम्भवो द्योत्यते । नैव सहधर्मिण्या धर्म इति भावः ।

१ पथ याह्यसि ( क ) अथ गच्छति ( घ. ) २ दक्षिणा ( क. च. )
३ उद्वेपते ( क. च. )

श्रान्तस्य ते क्षुधार्तस्य चिन्तयानस्य तत्सुखम् ।
वने घोरे महाराज नाशयिष्याम्यहं क्लमम् ॥ २८
न च भार्यासमं किंचिद्विद्यते भिषजां मतम् ।
औषधं सर्वदुःखेषु सत्यमेतद्ब्रवीमि ते ॥ २९

नल उवाच ।

एवमेतद्यथाऽऽत्थ त्वं दमयन्ति सुमध्यमे ।
नास्ति भार्यासमं मित्रं नरस्यार्तस्य भेषजम् ॥ ३०
न चाहं त्यक्तुकामस्त्वां किमलं भीरु शङ्कसे ।
त्यजेयमहमात्मानं न चैव त्वामनिन्दिते ॥ ३१

दमयन्त्युवाच ।

यदि मां त्वं महाराज न विहातुमिहेच्छसि ।
तत्किमर्थं विदर्भाणां पन्थाः समुपदिश्यते? ३२
अवैमि चाहं नृपते न तु मां त्यक्तुमर्हसि ।
चेतसा त्वपकृष्टेन मां त्यजेथा महीपते ॥ ३३
पन्थानं हि ममाभीक्ष्णमाख्यासि च नरोत्तम ।
अतोऽनिमित्तं शोकं मे वर्धयस्यमरोपम ॥ ३४

---

( २८ ) त्वमपि तावत्किं करिष्यसीति चेत्तत्राह श्रान्तस्येति । तत् अनुभूतपूर्वं सुखं चिन्तयानस्य चिन्तयतः । चिन्तयतेर्लटः शानच् । 'आगमशास्त्रमनित्यम्' (प. शे. ९४) इत्युक्तेर्न मुगागमः । क्लमं ग्लानिम् ।

( २९ ) नेति । भार्यासमं भार्यया तुल्यम् । भिषजां तु सरूपस्य रोगस्य प्रतीकारं जानानानां मतं सम्मतम् । औषधं प्रतीकारोपायः । ते तुभ्यम् ।

( ३० ) एवमिति । सुमध्यमे शोभनो मध्यमो मध्यं यस्यास्तथाभूते । यथा आत्थ ब्रवीषि । 'ब्रुवः पञ्चानामादितः' इत्यादिना पलादिषु पञ्चसु आदेशे च 'आहस्थः' इति थः । एवं तथा एतत् । आर्तस्य दुःखितस्य नरस्य भार्यासमं मित्रं, भेषजं दुःखप्रतीकारोपायश्च नास्ति ।

( ३१ ) परित्यागशङ्कामपनेतुमाह नेति । हे भीरु ! एतेन त्यागस्यात्यन्तानुचितत्वं द्योत्यते । त्यक्तुकामः त्यक्तुं कामो यस्य तथाभूतः । 'तुं काममनसोरपि' इति मलोपः । अलं पर्याप्तं यथा तथा किं किमर्थं शङ्कसे बिभेषि । आत्मानं स्वमपि त्यजेयं त्यक्तुं शक्नुयां न चैव न तु त्वाम् ।

( ३२ ) यदीति । इह वने विहातुं त्यक्तुम् । तत् तर्हि ।

( ३३ ) अवैमीति मां त्यक्तुं नार्हसि इति अवैमि जाने । तु परन्तु अपकृष्टेन दैन्यातिशयवशात् हीना दशां प्राप्तेन चेतसा उपलक्षितः (अपि अत एव) त्यजेथाः त्यजेः । सम्भावनायां लिङ् । अपि त्यजेथा मे त्याग इति भावः ।

( ३४ ) पन्थानं ममाभीक्ष्णं इत्यादि पन्थानमिति । हि यतः नरसत्तम । ... 

---

१ मार्गमार्गं भ्रमम् । निम्न हि गर्दं साधु ( क. )

यदि चायमभिप्रायस्तव ज्ञातीन्व्रजेदिति ।
सहितावेव गच्छावो विदर्भान्यदि मन्यसे ॥ ३५
विदर्भराजस्तत्र त्वां पूजयिष्यति मानद ।
तेन त्वं पूजितो राजन्सुखं वत्स्यसि नो गृहे ॥ ३६
इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि
नलयात्रायामेकषष्टोऽध्यायः ।

द्विषष्टितमोऽध्यायः ।



नल उवाच—
यथा राज्यं तव पितुस्तथा मम न संशयः ।
न तु तत्र गमिष्यामि विषमस्थः कथंचन ॥ १
कथं समृद्धो गत्वाऽहं तव हर्षविवर्धनः ।

षष्ठी । पश्चात् अभीक्ष्णं पुनः पुनः 'भूयः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ।' इत्यमरः । आख्यासि कथयसि । अनिमित्तं निष्कारणं यथा तथा वर्धयासि । एतेन ते निवेदनेन मे शोकः प्रवर्धत इत्यर्थः ।

( ३५ ) यदीति । ज्ञातीन् पितृकुलसंबन्धिनो बान्धवानिति यावत् । व्रजेत् गच्छेत् । इयं भार्येति शेषः । इतीत्यस्याभिप्राय इत्यनेन संबन्धः । तदेति शेषः । यदि मन्यसे अनुमन्यस इत्यर्थः ।

( ३६ ) नास्ति ते तत्रानादरशङ्कापीत्याह विदर्भेति । मानद बहुमानप्रद नल । पूजयिष्यति सत्करिष्यति । नः अस्माकं । तव मम चेत्यर्थः । अस्मदो द्वयोश्चेति बहुवचनम् । पितुर्गृहे आत्मीयत्वारोपादियमुक्तिः । न इति परकीयत्वशङ्काया अयनवसरमभिप्रेतयति । वत्स्यसि वासं करिष्यसि ।
इति नलोपाख्यानव्याख्यायां बालबोधिन्यां एकषष्टोऽध्यायः ।

( १ ) दमयन्त्याः पितृकुलस्य पारकत्वशङ्काभावमभ्युपगम्य गमनेऽननुमतिं प्रकाशयति । यथेति । यथा यस्मात् तथा तस्मात् । ममेति आवयोरभिन्नत्वादिति भावः । तु किन्तु तथापीत्यर्थः । विषमस्थः संकटे वर्तमानः । कथंचन केनापि प्रकारेण न गमिष्यामि ।

(२) कथमिति । ( पूर्वं ) समृद्धः समृद्धिमान् अत एव तव हर्षवर्धनः आनन्दस्याभिवर्धयिता सन् गतः (इदानीं) परिच्युतो राज्यतो भ्रष्टः परिद्यून इति पाठे परिक्षीणःसन् । 'दीव्यतेर्दिवोऽविजिगीषायाम्' इति निष्ठातस्य नः।

१ राजन् भविष्यति । २ 'बृहदश्व उवाच । इत्युक्तः स तदा देव्या नलो वचनमब्रवीत् ।' इत्यतः पूर्वमधिकं कपुस्तके ।

पैरिच्युतो गमिष्यामि तव शोकविवर्धनः ॥ २

बृहदश्व उवाच—

इति ब्रुवन्नलो राजा दमयन्तीं पुनः पुनः ।
सान्त्वयामास कल्याणीं वाससोऽर्धेन संवृताम् ॥ ३
तावेकवस्त्रसंवीतावटमानावितस्ततः ।
क्षुत्पिपासापरिश्रान्तौ सभां कांचिदुपेयतुः ॥ ४
तां सभामुपसंप्राप्य तदा स निषधाधिपः ।
वैदर्भ्या सहितो राजा निषसाद महीतले ॥ ५
स चैकवस्त्रो मलिनो विवर्णः पांसुगुण्ठितः ।
दमयन्त्या सह श्रान्तः सुष्वाप धरणीतले ॥ ६
दमयन्त्यपि कल्याणी निद्रयाऽपहृता ततः ।
सहसा दुःखमासाद्य सुकुमारी तपस्विनी ॥ ७
सुप्तायां दमयन्त्यां तु नलो राजा विशांपते ।

---

च्छ्रोः भ्रूडिति ऊङ् च । अत एव च तव शोकविवर्धनः सन् कथं गमिष्यामि । न युक्तं विषमस्थस्य गमनमिति भावः ।

( ३ ) इतीति । वाससः अर्धेन । अर्धस्य नलेन परिहितत्वादिति भावः ।

( ४ ) ताविति । एकवस्त्रसंवीतौ एकेनैव वस्त्रेण समं विभक्तेन संवीतौ आच्छन्नौ । इतस्ततः अटमानौ पर्यटनशीलौ । अटतेश्शानच् । तौ सा च स च । 'पुमान् स्त्रिया' इत्येकशेषः । सभा गृहम् । 'वासः कुटी द्वयोः शाला सभा' इति गृहपर्यायेष्वमरः । उपेयतुः उपगतवन्तौ । उपपूर्वादिणो लिट् । अमरेऽपि वास इत्यारभ्य चत्वारि कुटीनामानीत्येवोचितम् ।

( ५ ) तामिति । निषधाधिपो राजा महीतले निरास्तरण एवेत्यर्थः । अहो प्रभावो भवितव्यताया इति भावः ।

( ६ ) स इति । एकवस्त्रः एकं परिधानीयमात्रं वसनं यस्य तथाभूतः तत एव च पांसुगुण्ठितः धूलिव्याप्तः । गुण्ठित इति 'गुठि वेष्टने' इत्यतो निष्ठा । तत एव च विकटो विकराल इव दृश्यमानः । 'विकटा वज्रवाराह्यां त्रिपूरुविकरालयोः ।' इति मेदिनी । सुष्वाप सुप्तवान् । स्वपोर्लिट् । अतः परं पद्यमेकं प्रक्षिप्तं कपुस्तके स्पष्टार्थम् ।

( ७ ) दमयन्तीति । दुःखमासाद्य प्राप्य वर्तमाना सुकुमारी सौकुमार्ययुक्ता तपस्विनी अनुकम्पार्हा । 'तपस्वी तापसे चानुकम्प्ये त्रिषु' इति मेदिनी । सहसा युगपत् निद्रया अपहृता आकृष्टा गृहीतेत्यर्थः ।

( ८ ) सुप्तायामिति । विशांपते राजन्युधिष्ठिर । शोकोन्मथितचित्तात्मा

---

१ परिधृतो ( क. च ) २ नास्तीदं कनखपुस्तकेषु. ३ वै वि-( क च. ग म ) ४ अतःपरं 'ततः स्ववसनस्यान्तं दमयन्ती विशांपते । भूमावभ्रदीपं सुत्वाप पतिमात्रिहगय शोभना ॥' इत्यधिकं कपुस्तके.

शोकोन्मथितचित्तात्मा न स्म शेते तथा पुरा ॥ ८
स तद्राज्यापहरणं सुहृत्त्यागं च सर्वशः ।
वने च तं परिध्वंसं प्रेक्ष्य चिन्तामुपेयिवान् ॥ ९
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
किं नु मे मरणं श्रेयः परित्यागो जनस्य वा ॥ १०
मामियं ह्यनुरक्तैवं दुःखमाप्नोति मत्कृते ।
मद्विहीना त्वियं गच्छेत्कदाचित्स्वजनं प्रति ॥ ११
मयि निःसंशयं दुःखमियं प्राप्स्यत्यनुव्रता ।
उत्सर्गे संशयः स्यात्तु विन्देतापि सुखं क्वचित्[3] ॥ १२
स विनिश्चित्य बहुधा विचार्य च पुनः पुनः ।
उत्सर्गेऽमन्यत श्रेयो दमयन्त्या नराधिप ॥ १३
न चैषा तेजसा शक्या कैश्चिद्धर्षयितुं पथि ।

शोकेन उन्मथित चित्तं आत्मा देहश्च यस्य तथाभूतः । अत एव च यथा पुरा तथा न शेते स्म निद्रां न लेभे ।

( ९ ) स इति । तत् शत्रुकृत राज्याहरण सर्वशः सर्वात्मनेत्यर्थः । सुहृत्त्यागं सुहृदां मित्राणां त्यागम् । मित्रकृतमात्मनस्त्यागमित्यर्थः । परिध्वंस परिक्षयम् प्रेक्ष्य आलोच्य । उपेयिवान् प्राप्तवान् ।

( १० ) किमिति । इद मनसि चिन्त्यमान भार्यापरित्यागरूप कार्यम् । कृत्वा वर्तमानस्येति शेषः । नु वितर्के । श्रेय' श्रेष्ठम् । प्रशस्यशब्दादीयसि प्रशस्यस्य श्र इति श्रः । जनस्य दमयन्तीरूपस्य ।

( ११ ) मामिति । मामनु मामभिलक्ष्य रक्ता राग ( प्रेम ) विशिष्टा अनुर्लक्षण इति कर्मप्रवचनीयसंज्ञायां द्वितीया । मय्यनुरक्तेत्यर्थः । अत एव मत्कृते मदर्थम् ।

( १२ ) मयीति । मयि मद्विषये अनुव्रता अनु सदृश व्रत आचार इत्यर्थः यस्यास्तथाभूता । प्रेमवशान्मदाचारसदृशमाचारमनुतिष्ठन्तीत्यर्थः । मयेति पाठे मया हेतुभूतेनेत्यर्थः । उत्सर्गे अस्यास्त्यागे सति संशयः सुखविषयकः संदेहः स्यात् तु तथापि क्वचित् कदाचिदित्यर्थः । विन्देत प्राप्नुयात् । अपीति संभावनायाम् ।

( १३ ) स इति । बहुधा अनेकैः प्रकारैः । दमयन्त्या उत्सर्गे त्यागे श्रेयः कल्याणम् ।

( १४ ) ननु भोः । परित्यक्तामेनां पथि केचिद्धर्षयेयुरिति चेन्नैतदेव

१ चित्तः सन् ( क ) चित्तोऽसौ ( च ) २ मया ( क ) ३ अतः परं श्लोकद्वयमेवाधिकं कपुस्तके । ४ स विचिन्त्यैव ( च )

यशस्विनी महाभागा मद्भक्तेयं पतिव्रता ॥ १४
एवं तस्य तदा बुद्धिर्दमयन्त्यां न्यवर्तत ।
कलिना दुष्टभावेन दमयन्त्या विसर्जने ॥ १५
सोऽवस्त्रतामात्मनश्च तस्याश्चाप्येकवस्त्रताम् ।
चिन्तयित्वाऽभ्यगाद्राजा वस्त्रार्धस्यावकर्तनम् ॥ १६
कथं वासो विकर्तेयं न च बुध्येत मे प्रिया ।
विचिन्त्यैवं नलो राजा सभां पर्यचरत्तदा ॥ १७
परिधावन्नथ नल इतश्चेतश्च भारत ।
आससाद सभोद्देशे विकोशं खड्गमुत्तमम् ॥ १८
तेनार्धं वाससश्छित्त्वा निवस्य च परंतपः ।
सुप्तामुत्सृज्य वैदर्भीं प्राद्रवद्गतचेतनाम् ॥ १९
ततो निवृत्तहृदयः पुनरागम्य तां सभाम् ।

---

मित्याह नेति । तेजसा हेतुभूतेन तेजोविशिष्टत्वादित्यर्थः । धर्षयितु अभि-भवितुम् । मद्भक्ता मम भक्ता अनुरागिणी ।

( १५ ) एवमिति । दमयन्त्यां विषये एवं पूर्वोक्तप्रकारेण न्यवर्तत निश्चिता आसीत् । उत्सर्गमेतस्या निश्चितवानित्यर्थः । तत्र हेतुमाह कलि-नेति । कलिना कर्त्रा दमयन्त्या विसर्जने त्यागनिमित्तं दुष्टभावेन दूषितेन मनसा हेतुभूतेन । दमयन्त्यास्त्यागमुद्दिश्य कलिना मनसो दूषितत्वादिति भावः। अत्र दमयन्त्या इत्येवादिमेऽर्धे क्वचित्पाठः स्पष्टः । तत्र च दमयन्त्या निवृत्ता परावृत्तेत्यर्थः ।

( १६ ) स इति । वस्त्रार्धस्य अर्धस्य वस्त्रस्य अवकर्तनं अवकर्त्य पृथ-क्करणं, द्वयोरपि परिधाननिर्वाहार्थमिति भावः । अभ्यगात् मनसोपससार मनसि कृतवानित्यर्थः ।

( १७ ) कथमिति । यथा तथेत्यध्याहार्यम् । यथा मे प्रिया न बुध्येत न जागृयात् । तथा वासः कथं विकर्तेयमिति सम्बन्धः । पर्यचरत् कर्तनसाध-नान्वेषणार्थं परितश्चचार ।

( १८ ) परीति । भारत युधिष्ठिर ! परिधावन् । धावु गतिशुद्ध्योरि-त्यतो लटः शता । विकोश विगतः कोशात् पिधानाद्विकोशः तम् । खड्गं आससाद प्राप्तवान् ।

( १९ ) तेनेति । छित्वा पृथक् कृत्वा । द्विधा कृत्वेति तु नार्थः । अर्धस्य कर्मत्वात् । निवस्य परिधाय । वस्तेराच्छादनार्थात् क्त्वो ल्यप् । निरस्येति पाठो लेखकप्रमादमूलक एवेति प्रतिभाति । सुप्तां तत एव च गत-चेतनां नष्टसंज्ञाम् । उत्सृज्य त्यक्त्वा प्राद्रवत् अगच्छत् । द्रुगतावित्यतो लङ् ।[1]

( २० ) तत इति । निवृत्तहृदयः निवृत्त गमनक्रियातः परावृत्त हृदय

---

१ निवस्याथ ( च ) २ निवद ( क ).

दमयन्तीं तदा दृष्ट्वा रुरोद निषधाधिपः ॥ २०
या न वायुर्न चादित्यः पुरा पश्यति मे प्रियाम् ।
सेयमद्य सभामध्ये शेते भूमावनाथवत् ॥ २१
इयं वस्त्रावकर्तेन संवीता चारुहासिनी ।
उन्मत्तेव [1]वरारोहा कथं बुद्ध्वा भविष्यति ॥ २२
कथमेका सती भैमी मया विरहिता शुभा ।
चरिष्यति वने घोरे मृगव्यालनिषेविते ॥ २३
आदित्या वसवो रुद्रा अश्विनौ समरुद्गणौ ।
रक्षन्तु त्वां महाभागे धर्मेणासि समावृता ॥ २४
एवमुक्त्वा प्रियां भार्यां रूपेणाप्रतिमां भुवि ।
कलिनाऽपहृतज्ञानो नलः प्रातिष्ठदुद्यतः ॥ २५

यस्य तथाभूतः । प्रणयातिशयवशादिति भाव । रुरोद विललाप ।

( २१ ) विलपमाह यामिति । पुरा न पश्यति नापश्यत् । असूर्यंपश्यत्वादिति भावः । आदित्यः सूर्य. ।

(२२) इयमिति । चारुहासिनी चारु हसितुं शीलं यस्यास्तथाभूता। वस्त्रावकर्तेन वस्त्रखण्डेन संवीता आच्छन्ना । व्येञ् संवरण इत्यतो निष्ठायां यजादित्वात्संप्रसारणे हल इति दीर्घ. । उन्मत्तेव भूता । पत्युस्तिरोभूतत्वादिति भावः । बुद्ध्वा जागरानन्तरं कथं किं प्रकारा भविष्यति का दशामनुभविष्यतीत्यर्थः।

( २३ ) कथमिति । भैमीति राजपुत्रीत्वादनचरत्त्वाशक्यत्वं द्योत्यते । मया विरहितेति च विपदि परित्रातुरभावादत्यन्ताशक्यत्वं तस्य द्योतयति । स्वभावतोऽपि नैव शक्यसंचारं वनमिति द्योतयितुमाह मृगेति । मृगैः वन्यैः पशुभिः व्यालैः सर्पैश्च निषेविते नितरां सेविते ।

(२४) परित्राणार्थमाशिषं प्रयच्छति आदित्या इति । आदित्या द्वादश देवविशेषाः 'अर्यमा च विधाता च त्वष्टा पूषा च भारत । विवस्वान्सविता धाता मित्रो वरुण एव च । अंशो भगश्चातितेजा आदित्या द्वादश स्मृताः ॥' इति हरिवंशोक्ताः । वसव. अष्टौ देवविशेषा 'धरो ध्रुवश्च सोमश्च विष्णुश्चैवानिलोऽनल. । प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।' इति भरतोक्ताः। रुद्रा एकादश देवताविशेषा 'अजैकपादहिर्बुध्न्यो विरूपाक्षः सुरेश्वरः । जयन्तो बहुरूपश्च त्र्यम्बकोऽप्यपराजित । वैवस्वतश्च सावित्रो हरो रुद्रा इमे स्मृता' इति जटाधरेण निर्दिष्टा । अश्विनौ अश्विनीकुमारौ । मरुतो देवविशेषाः । स्वयमप्यात्मानं गोप्तुं प्रभवसीत्याह धर्मेणेति । धर्मेण कर्म्णा समावृता सम्यक् कृतावरणा । न हि धर्मावृतानां नाश. संभवतीति भावः ।

( २५ ) एवमिति । प्रियां भार्यां उद्दिश्येति शेषः । प्रियां रूपेणाप्रतिमां ( निरुपमां ) इति च त्यक्त्वा प्रस्थानस्याशक्यत्वमभिप्रैतयति । गमनकारणमाह कलिनेति । प्रातिष्ठदित्यार्षमात्मनेपदम् । उद्यतः त्यागोद्युक्तः सन्।

[1] मया हीना ( क, च.)

गत्वा गत्वा नलो राजा पुनरेति सभां प्रति ।
आकृष्यमाणः कलिना सौहृदेनापकृष्यते ॥ २६
द्विधेव हृदयं तस्य दुःखितस्याभवत्तदा ।
दोलेव मुहुरायाति याति चैव मुहुर्मुहुः ॥ २७
अवकृष्टस्तु कलिना मोहितः प्राद्रवन्नलः ।
सुप्तामुत्सृज्य तां भार्यां विलप्य करुणं बहु ॥ २८
नष्टात्मा कलिना स्पृष्टस्तत्तद्विगणयन्मुहुः ।
जगामैकां वने शून्ये भार्यामुत्सृज्य मोहितः ॥ २९
इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि
द्विषष्टितमोऽध्यायः ।

## त्रिषष्टितमोऽध्यायः ।



बृहदश्व उवाच—
अपक्रान्ते नले राजन्दमयन्ती गतक्लमा ।
अबुध्यत वरारोहा संत्रस्ता विजने वने ॥ १
अपश्यमाना भर्तारं शोकदुःखसमन्विता ।

( २६ ) स्नेहप्रवृत्तेर्बलीयस्त्वमभिप्रेत्य माह गत्वेति । वीप्सया द्विर्वचनम् । मुहुः गत्वा गत्वा पुनरेतीति सबन्धः । तत्र कारणमाह कलिनेति । एकतः कलिनाऽपरतश्च सौहृदेन ( प्रेम्णा ) समाकृष्यमाणो दोलेव बभूवेति भावः। सौहृदमिति शोभन हृदय यस्य तस्य भाव.। सुहृच्छब्दाल् युवादित्वादण्।
( २७ ) एतमेवार्थं विस्पष्टयति । द्विधेव द्विप्रकारमेव ।
( २८,२९ ) अवकृष्ट इति । तु किन्तु मोहितो मोह प्रापितः। प्राद्रवत् अगच्छत्। करुण यथा तथा बहु विलप्य । कलिना स्पृष्टः अत एव नष्टात्मा नष्ट आत्मा मनो लक्षणया विवेको यस्य तथाभूतः । अत एव च तत्तत् विगणयन् अवगणयन् । शून्ये निर्मानुषे । दुःखितः सन् जगाम ।
इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां दमयन्तीत्यागे द्विषष्टोऽध्यायः

( १ ) अपक्रान्त इति । नले अपक्रान्ते सति अबुध्यतेति सम्बन्धः। गतक्लमा नष्टग्लानिः। निद्राया आसेवनादिति भाव.। ततश्च विजने निर्मानुषे । संत्रस्ता भीता आसीदिति शेषः। विजन इति सत्रासे हेतु प्राह ।
( २ ) अपश्यमानेति । भर्तार अपश्यमाना अपश्यन्ती । आर्षमात्मनेपदम्। तत एव च संत्रस्ता अत्यन्त भीता । उच्चैः तारस्वरेण महाराजेति

१ मह ( क. च. )

प्राक्रोशदुच्चैः संत्रस्ता महाराजेति नैषधम् ॥ २
हा नाथ हा महाराज हा स्वामिन्किं जहासि माम् ।
हा हताऽस्मि विनष्टाऽस्मि भीताऽस्मि विजने वने ॥ ३
ननु नाम महाराज धर्मज्ञः सत्यवागसि ।
कथमुक्त्वा तथा सत्यं सुप्तामुत्सृज्य कानने ॥ ४
कथमुत्सृज्य गन्ताऽसि दक्षां भार्यामनुव्रताम् ।
विशेषतोऽनपकृते परेणापकृते सति ॥ ५
शक्यसे ताँ गिरः सम्यक् कर्तुं मयि नरेश्वर ।
यास्त्वया लोकपालानां सन्निधौ कथिताः पुरा ॥ ६
नाकाले विहितो मृत्युर्मर्त्यानां पुरुषर्षभ ।

प्राक्रोशत् आहूतवती । क्रुश आह्वाने रोदने चेत्यतो लङ् । महाराजेत्यार्षत्वात् प्लुतत्वाभावान्न प्रकृतिभावः ।

( ३ ) हेति । हेति विषादे । 'हा विषादशुगार्तिषु' इत्यमरः । किं कस्मात् जहासि त्यजसि । हता हतप्राया विपन्नतमत्वादिति भावः । विनष्टा विनाशं प्राप्तेव ।

( ४ ) नन्विति । नन्विति स्मारणे । धर्मज्ञ इति भार्यात्यागस्यानौचित्यं द्योतयति । सत्यवागिति च 'न त्वां त्यक्तुमिच्छामी' त्यात्मवचनातिक्रमस्य । तथा 'न चाहं त्यक्तुकामस्त्वाम्' इत्येव ( ६१–३१ ) प्रकारेण । उत्सृज्य गच्छसीति शेषः ।

( ५ ) कथमिति । दक्षां चतुरां अनुव्रतां अनुकूलाचारां भार्यां सहधर्मिणीम् । एतेन त्यागस्यात्यन्तमनौचित्यं द्योत्यते । अनपकृते मत्कृतापकाराभावे सति । अपकृतं ह्यपकारः । परेण शत्रुणा मदन्येन वा पुष्करेण । अयुक्तोऽयं चौरापराधे माण्डव्यदण्ड इति भावः ।

( ६ ) शक्यस इति । मयि मद्विषये याः पुरा स्वयंवरकाले कथितास्त्वयेति शेषः । ता इति च यच्छब्दबलाल्लभ्यते । तेषां मद्वरणायोपस्थितानामिति भावः । एतेनात्मनः प्रणयदार्ढ्यं द्योत्यते । गिरो वाचः कर्मभूतः सम्यक् कर्तुं तदुक्तमर्थमनुष्ठातुमित्यर्थः । शक्यसे शक्नोषीत्यर्थः । दैवादिकस्यापरिसमाप्तत्वाच्छ्यन् । वेति प्रश्ने । पचतोऽस्माद् गम्यमानापि निन्दा दमयन्त्यां नोचितेति द्रष्टव्यम् । अत एव च वेत्यस्याथवेति नार्थः । ता इति पाठस्तु साधीयान् ।

( ७ ) नेति । पुरुषर्षभ नरश्रेष्ठ । अकाले असमये न विहितो न कृतः धात्रेति शेषः । यत्र यस्मिन् अकारणे सति । यस्मादिति यावत् उत्सृष्टा

१ कथंविधस्त्वं हि तथा ( क ) २ मां गतः ( क. च. ) ३ वनयां ( क. च. ) ४ नापकृतः ( क ) ५ कृतो ह्यसि ( क ) ६ न ( क ) ७ सत्याः ( क ) 'शक्यसे ता गिरः सत्या मयि कर्तुं नरेश्वरः' ( च )

यत्र कान्ता त्वयोत्सृष्टा मुहूर्तमपि जीवति ॥ ७
पर्याप्तः परिहासोऽयमेतावान्पुरुषर्षभ ।
भीताऽहमतिदुर्धर्ष दर्शयात्मानमीश्वर ॥ ८
दृश्यसे दृश्यसे राजन्नेष दृष्टोऽसि नैषध ।
आवार्य गुल्मैरात्मानं किं मां न प्रतिभाषसे ॥ ९
नृशंसं बत राजेन्द्र यन्मामेवंगतामिह ।
विलपन्तीं समालिङ्ग्य नाश्वासयसि पार्थिव ॥ १०
न शोचाम्यहमात्मानं न चान्यदपि किंचन ।
कथं नु भवितास्येक इति त्वां नृप शोचिमि ॥ ११
कथं नु राजंस्तृषितः क्षुधितः श्रमकर्शितः ।
सायाह्ने वृक्षमूलेषु मामपश्यन्भविष्यसि ? ॥ १२

त्यक्ता। मुहूर्तं अल्पकालमपि । जीवती । 'मुहूर्तमल्पकालेऽपी ' ति शब्दार्णवः ।

( ८ ) परिहासेन यत्र क्वापि निलीयावस्थितो भर्तेत्याशङ्क्याह । पर्याप्त इति । अय मयानुभूयमानः परिहासस्त्वया कृत इत्यर्थात्। पर्याप्तः अलम्भूतः। नास्मदधिकापेक्षेत्यर्थः। कुतः पर्याप्तिरित्याह भीतेति । अतिदुर्धर्षः अत्यन्त दुरभिभव ।

( ९ ) दृश्यस इति । गुल्मैः प्रकाण्डशून्यैस्तरुविशेषैः करणभूतैः आत्मानं आवार्य आवृत्तं कृत्वा। चौरादेरपरिसमाप्तत्वात्स्वार्थे णिच्। किं कस्मात्।

( १० ) नृशंसमिति । इह एवमनेन प्रकारेण गता विद्यमाना समागम्य नाश्वासयसि धैर्यप्रदानेन सुखिता न करोषि इति यत् तदेतत् नृशंसं क्रूर कर्मेत्यर्थः। बतेति खेदे । 'नृशंसो घातुकः क्रूर ' इत्यमरः ।

( ११ ) नेति । अन्यदपि किंचन न शोचामि । एकः मया विरहितः कथ भवितासि सत्ता प्राप्स्यसि जीविष्यासीत्यर्थः । न त्वया जीवितुं शक्यमिति भावः। इति हेतोः। त्वा शोचिमि शोचामीत्यर्थः । आर्षमिदम् । शोचय इति पाठे शोचतेर्भौवादिकान्निवृत्तप्रेषणाण्णिचि साधुता ।

( १२ ) कथमिति । सायाह्ने अह्नो दिवसस्य साये अन्ते । दिनान्त इत्यर्थः । वृक्षस्य मूलेषु आवासार्थमुपाश्रितेषु मामपश्यन्निति। एवंविधे हि समये यथावत्परिचरन्ती भार्यैव दुःखमपनयतीति तामपश्यन्निति भावः । आत्मनस्तृष्णादिभिः प्रेयस्या ममापि तृष्णाद्याकुलीभाव सभावयन् सविशेष पीडामनुप्राप्त इति वा भावः । कथ किम्प्रकारः । नुर्वितर्के ।

१ मृग भीताऽस्मि ( क ) २ दुर्धर्ष ( क. च. न म. ) ३ तिष्ठसि ( क ) तिष्ठसि नैषध ( च ) ४ नृशसं ( क ), नृशस ( च ) ५ शोचये ( क ), शोचिमि ( च )

ततः सा तीव्रशोकार्ता प्रदीप्तेव च मन्युना ।
इतश्चेतश्च रुदती पर्यधावत दुःखिता ॥ १३
मुहुरालीयते भीता मुहुः क्रोशति रोदिति ॥ १४
अतीव शोकसंतप्ता मुहुर्निःश्वस्य विह्वला ।
उवाच भैमी निःश्वस्य रुदत्यथ पतिव्रता ॥ १५
यस्याभिशापाद्दुःखार्तो दुःखं विन्दति नैषधः ।
तस्य भूतस्य नो दुःखाद्दुःखमभ्यधिकं भवेत् ॥ १६
अपापचेतसं पापो य एवं कृतवान्नलम् ।
तस्माद्दुःखतरं प्राप्य जीवत्वसुखजीविकाम् ॥ १७
एवं तु विलपन्ती सा राज्ञो भार्या महात्मनः ।
अन्वेषमाणा भर्तारं वने श्वापदसेविते ॥ १८
उन्मत्तवद्भीमसुता विलपन्ती इतस्ततः ।

( १३ ) तत इति । प्रदीप्ता प्रज्वलिता । मन्युना शोकरूपेणाग्निनेति गम्यते । 'मन्युशोकौ तु शुक् स्त्रियाम्' इत्यमरः । इतश्चेतश्च पर्यधावत् परिभ्रान्तवती । आर्षमात्मनेपदम् ।

( १४ ) मुहुरिति । उत्पतत इत्यार्षमात्मनेपदम् । लट् च लङर्थे । उदपतादित्यर्थः । एवमुत्तरत्रापि । विह्वला व्याकुला । आलीयते भीतत्वाद्भय हेतोरात्मानं गोपयितुमिति भावः । क्रोशति भर्तारमाह्वयति ।

( १५ ) अतीवेति । अस्यार्धस्य रोदितीत्यनेन पूर्वेण संबन्धः । अन्यथा हि निश्वस्येति पौनरुक्त्यं प्रसज्येत ।

( १६ ) यस्येति । यस्येति कर्तृकर्मणो कृतीति कर्तरि षष्ठी, अभिशापेन अनिष्टचिन्तनेन । यत्कृतेनानिष्टचिन्तनेनेत्यर्थः । भूतस्य जन्तोः नः अस्माकम् 'अस्मदो द्वयोश्च' इति बहुवचनम् । मम च नलस्य चेत्यर्थः । दुःखात् अभ्यधिकं दुःखं भवेत् भवतु । 'जन्तौ क्लीबं त्रिषूचिते' इति भूतशब्दार्थेषु मेदिनी ।

( १७ ) अपापेति । अपापचेतसं अदुष्टमनसं नलं य एवं ईदृशम् । स इति शेषः । तस्मात् नलात् दुःखतरं अत्यन्तं दुःखम् । असुखजीविका असुखेन जीविका जीवनं ताम् । धात्वर्थनिर्देशे ण्वुल् । स्त्रीत्वाट्टाप् । जीवतु करोतु । धातूनामनेकार्थत्वात् । 'जीवेद्ब्राह्मणजीविकाम्' ( ४–११ )इत्यत्र हि मनावित्थमेव कुल्लुको जीवतिं व्याचख्यौ । सुखशून्यं जीवत्वित्यर्थः ।

( १८–१९ ) एवं त्विति । युग्मकमेतत् । अन्वेषमाणा अन्वेषयन्तीत्यर्थः 'एषृ गतौ' इत्यतोऽनुपूर्वाल्लटः शानच् । श्वापदसेविते श्वापदैर्हिंस्रैः पशुभिः

१ निष्क्रम्य ( च ) २ रुदतीति ( च ), रोदमाना ( ब ) ३ नैष नन्दति ( च ) ४ तद्दुःखात् ( क ) ५ अन्वेषति स्म ( क ) ६ ततस्ततः ( क. च. )

हाहा राजन्निति मुहुरितश्चेतश्च धावति ॥ १९
तां क्रन्दमानामत्यर्थं कुररीमिव वाशतीम् ।
करुणं बहु शोचन्तीं विलपन्तीं मुहुर्मुहुः ॥ २०
सहसाऽभ्यागतां भैमीमभ्याशपरिवर्तिनीम् ।
जग्राहाजगरो ग्राहो महाकायः क्षुधान्वितः ॥ २१
सा ग्रस्यमाना ग्राहेण शोकेन च परिप्लुता ।
नात्मानं शोचति तथा यथा शोचति नैषधम् ॥ २२
हा नाथ मामिह वने ग्रस्यमानामनाथवत् ।
ग्राहेणानेन विजने किमर्थं नानुधावसि ॥ २३
कथं भविष्यसि पुनर्मामनुस्मृत्य नैषध ।
कथं भवाञ्जगामाद्य मामुत्सृज्य वने प्रभो ॥ २४
शापान्मुक्तः पुनर्लब्ध्वा बुद्धिं चेतो धनानि च ।

सेविते कृतसेनने युक्त इत्यर्थः। इतस्ततः प्रदेशे हा हा राजन्निति विलपन्ती रुदती। उन्मत्तवत् इतश्चेतश्च धावति। भूते लडर्थः।

( २०।२१ ) तामिति पुनर्युग्मकम्। अत्यर्थं अत्यन्त क्रन्दमाना क्रोशन्तीं वाशतीं विराव कुर्वतीम्। वाशतिरितरक्षा शब्दे रूढः। 'तिरश्चां वाशितं रुतं' मित्यमरः। कुररीं पक्षिविशेषमिव। अस्या हि रुतं क्रन्दनप्रतिमं भवति। अत एवाह मालतीमाधवे भवभूतिः 'नादस्तावद्विकलकुररीकूजितस्निग्धताराः' इति। करुणं यथा तथा शोचन्तीम् शोकं कुर्वाणाम्। शोचतेः सकर्मकत्वविवक्षायां त्वात्मानं च भर्तारं चेति कर्मपदमध्याहार्यम्। सहसा अकस्मात् अभ्यागतां समीपं प्राप्ताम्। अभ्यासपरिवर्तिनीं अभ्यासे (३) आत्मनः समीपे परिवर्तते परिभ्रमति विद्यते वा तथाभूताम्। अजगरः सर्पविशेषः स्वनाम्ना ख्यातः। जग्राह गृहीतवान्।

( २२ ) सेति। ग्राहेण गृह्णातीति ग्राहोऽजगरः तेन। 'विभाषा ग्रह' इति णः। परिप्लुता व्याप्ता। नात्मानमिति प्राणेभ्योऽपिऽप्रियः पतिः पतिव्रतानामित्यहो माहात्म्यमेतासामिति भावः।

( २३ ) शोकमाह। हेति विषादे। विजने निर्मानुषे। एतेन परित्रातुरत्यन्तमभावो द्योत्यते। ग्रस्यमाना कवलीक्रियमाणाम्। अनुधावसि सवेगमनुपगच्छसीत्यर्थः।

( २४ ) कथमिति। मामनुस्मृत्य कथं किंप्रकारो भविष्यसि। अनिर्वचनीयं प्रकारं प्रतिपत्स्यस इत्यर्थः कथं स्थास्यसीति वा। जगाम गतवान्। दमयन्त्याः सुप्ततया गमनस्य परोक्षतया लिट्।

( २५ ) ननु प्राचीने कर्मणि समरदाररतो न युक्तं मेऽस्मानामिति

१ इत्थंमान (क. ध.) २ ग्रसमानाम् (ध) ३ भीमे (ग) ४ पराजिता ५ अगाम् (ङ) ६ इत्थं पुस्तकं नास्ति। ७ शापात् (ग. क न.)

श्रान्तस्य ते क्षुधार्तस्य परिग्लानस्य नैषध ॥ २५
कः श्रमं राजशार्दूल नाशयिष्यति तेऽनघ ।
ततः कश्चिन्मृगव्याधो विचरन्गहने वने ॥ २६
आक्रन्दमानां संश्रुत्य जवेनाभिससार ह ।
तां तु दृष्ट्वा तथा ग्रस्तामुरगेणायतेक्षणाम् ॥ २७
त्वरमाणो मृगव्याधः समातिक्रम्य वेगतः ।
मुखतः पाटयामास शस्त्रेण निशितेन च ॥ २८
निर्विचेष्टं भुजङ्गं तं विशस्य मृगजीवनः ।
मोक्षयित्वा स तां व्याधः प्रक्षाल्य सलिलेन ह ॥ २९

---

चेद्गतमपि ननु लभ्येतैव पुनरेतादिति कृत तत्र खेदेनेत्याह शापादिति । दमयन्त्या सभावितात् मुक्तः । बुद्धिं ज्ञानं चेतो विचारशक्तिमिति यावत् । लब्धा लप्स्यस इत्यर्थः। भवानिति कर्तृपद सबध्यते । लभेर्लुट् । अर्थतोऽस्मात् कथं भविष्यसीत्यादि पूर्वतरमर्धे योजयन् लब्धेत्यत्र च लब्ध्वेति पाठ कल्पयन्व्याचक्षाणो नीलकण्ठमहोदयः सर्वथा चिन्त्य एव सहृदयप्रवरैः । अतः पर पुनः शोचति श्रान्तस्येति। श्रान्तस्य श्रम प्राप्तस्य, परिम्लानस्य ग्लानिमनुप्राप्तस्य।

(२६) क इति । पूर्वार्धं पूर्वश्लोकोत्तरार्धान्वयि । मृगव्याधः मृगान् विध्यति तथाभूतो मृगवधाजीवी । गहने दुष्प्रवेशे ।

(२७) आक्रन्दमानामिति । आक्रन्दमाना आक्रोशन्तीं सश्रुत्य सम्यक् श्रुत्वा । तस्याः क्रन्दित श्रुत्वेत्यर्थ । जवेन वेगेन अभिससार तस्याः समीप जगाम । हेति पादपूर्तौ । उरगेण सर्पेण ( अजगरेण ) । स ह्युरसा गच्छतीति । आयतेक्षणां आयते दीर्घे ईक्षणे नेत्रे यस्यास्तथाभूताम् । सुन्दरीमित्यर्थः । एतेन काममूलकत्वमेतत्कृतस्य स्त्रीपरित्राणस्य गम्यते ।

(२८) त्वरमाण इति । त्वरमाणस्त्वरा कुर्वन् । त्वरतेर्लटः शानच् । वेगतः वेगेन समतिक्रम्य आक्रम्येत्यर्थः। अजगरमिति शेषः । मुखतः मुखाद्यप्रभृति । निशितेन शाणोल्लीढेन तीक्ष्णेनेत्यर्थः । शो तनूकरण इत्यतो निपूर्वान्निष्ठा । शस्त्रेण पाटयामास । विदारितवान् । चौरादिकस्य पटेर्धातूनामनेकार्थत्वाद्विदारणे वृत्तिः ।

(२९) निर्विचेष्टमिति। निर्विचेष्ट चेष्टाभिः शून्यम् । प्रकृतिः खल्वसावजगराणां यदेते ग्रस्तमानुषा न विचेष्टितु प्रभवन्तीति । भुजग सर्पमजगरम् । स हि भुजेन कौटिल्येन गच्छतीति । विशस्य हिंसित्वा । शमु हिंसायामित्यतः क्त्वो ल्यप् । मृगजीवनो मृगा एव जीवनमुपजीविका यस्य तथाभूतः व्याधः । मोक्षयित्वा अजगरोदरान्मोक्षं गमयित्वा । प्रातिपदिकाद्धात्वर्थ इति मोक्षशब्दाण्णिच् ।

---

१ ग्लानस्य ( च. क. न. म.) २ अतः परं 'बृहदश्व उवाच' इत्यधिकं कपुस्तके ३ ता तु कश्चित् ( क ), तामकस्मात् ( च ) ४ समाधिक्रम्य ( न म. ), सत्वरं गहने वने ( क ) ५ अतः परं ' समभिक्रम्य वेगेन सत्वरः स वनेचरः ।' इत्यधिकं कपुस्तके । ६ मुखे तं (क) ७ ह ( च.)

समाश्वास्य कृताहारामथ पप्रच्छ भारत ।
कस्य त्वं मृगशावाक्षि कथं चाभ्यागता वनम् ॥ ३०
कथं चेदं महत्कृच्छ्रं प्राप्तवत्यसि भाविनी ।
दमयन्ती तथा तेन पृच्छ्यमाना विशांपते ॥ ३१
सर्वमेतद्यथावृत्तमाचचक्षेऽस्य भारत ।
तामर्धवस्त्रसंवीतां पीनश्रोणिपयोधराम् ॥ ३२
सुकुमारानवद्याङ्गीं पूर्णचन्द्रनिभाननाम् ।
अरालपक्ष्मनयनां तथा मधुरभाषिणीम् ॥ ३३
लक्षयित्वा मृगव्याध कामस्य वशमीयिवान् ।
तामेव श्लक्ष्णया वाचा लुब्धको मृदुपूर्वया ॥ ३४
सान्त्वयामास कामार्तस्तदबुध्यत भाविनी ।
दमयन्त्यपि तं दुष्टमुपलभ्य पतिव्रता ॥ ३५
तीव्ररोषसमाविष्टा प्रजज्वालेव मन्युना ।

---

( ३० ) समाश्वास्येति । मृगशावाक्षि मृगशावस्य हरिणशिशोरिवाक्षिणी यस्यास्तथाभूते । सुन्दरीत्यर्थः । अभ्यागता आगमनविषयीकृतम् । त्वयेति शेषः ।

( ३१ ) कथमिति । भाविनि अनुरागिणि । कृच्छ्रं दुःखम् ।

( ३२ ) सर्वमिति । एतत् वृत्तं यथावृत्तं वृत्तं घटितमनतिक्रम्य । यथा घटितं तथेत्यर्थः । आचचक्षे कथितवती । चक्षिङो लिट् । अर्धवस्त्रसंवीतां अर्धेन वाससा प्रावृताम् । पीनश्रोणिपयोधरां स्थूलनितम्बस्तनीम् ।

( ३३ ) सुकुमारेति । सुकुमाराणि अनवद्यानि निर्दूषणानि चाङ्गानि अवयवा यस्यास्ताम् । पूर्णचन्द्रनिभाननां पूर्णस्य चन्द्रस्य निभं सदृशं आननं यस्यास्ताम् । अरालपक्ष्मनयनां अरालानि कुटिलानि पक्ष्माणि लोमानि ययोस्तथाभूते नयने यस्यास्ताम् ।

(३४) लक्षयित्वेति । लक्षयित्वा दृष्ट्वा । कामस्य मदनस्य वशं अधीनताम् । ईयिवान् प्राप्तवान् । इणो लिटः क्वसुः । एवमिति किंचेत्यर्थे । [illegible] व्याध । श्लक्ष्णया मनोहरया मृदुपूर्वया मृदु मार्दवयुक्तत्वं पूर्वं तथाभूतया । वाचा करणभूतया ।

( ३५ ) सान्त्वयामासेति । सान्त्वयामास साम्ना योजयामास । भाविनी [illegible] तर्कयितुं शीलं यस्यास्तथाभूता तर्कशीलेत्यर्थः । अनुपसर्गाणामपि [illegible] संभावनार्थे । ताच्छील्ये णिनिः । तं दुष्टं ज्ञात्वा ।

( ३६ ) तीव्रेति । तीव्रेणात्यन्तिकेन रोषेण समाविष्टा सम्यक्कृतशरीरप्रवेशा । मन्युना कोपेन । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः । मन्युनेत्यधिक

---

१ चाभ्यागता ( च म न ) चाभ्यगता (क) २ तामथ ( च क ) ३ ती व्र ( च )

स तु पापमतिः क्रुद्धः प्रधर्षयितुमातुरः ॥ ३६
दुर्धर्षां तर्कयामास दीप्तामग्निशिखामिव ॥
दमयन्ती तु दुःखार्ता पतिराज्यविनाकृता ॥ ३७
अतीतवाक्पथे काले शशापैनं रुषा किल ।
यथाऽहं नैषधादन्यं मनसाऽपि न चिन्तये ॥ ३८
तथाऽयं पततां क्षुद्रः परासुर्मृगजीवनः ।
उक्तमात्रे तु वचने तया स मृगजीवनः ।
व्यसुः पपात मेदिन्यामग्निदग्ध इव द्रुमः ॥ ३९
इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
त्रिषष्टोऽध्यायः ।

---

चतुष्षष्टोऽध्यायः ।

बृहदश्व उवाच—
सा निहत्य मृगव्याधं प्रतस्थे कमलेक्षणा ।
वनं प्रतिभयं शून्यं झिल्लिकागणनादितम् ॥ १

---

मप्याप्यत्वात्सोढव्यम् । पापमतिः पापे पापा वा मतिर्यस्य तथाभूतः । आतुरः कामेन व्याकुलीभूतः । प्रधर्षयितुं अभिभवितुं बला कारविषयीकर्तुमिति यावत् । तर्कयामासेत्युत्तरेण सम्बन्धः । 'धर्षे न स्यात्पराभवे' इति मेदिनी ।

( ३७ ) दुर्धर्षामिति । दुर्धर्षां दुःखेन धर्षितुं शक्याम् अशक्याभिभवामित्यर्थः । अग्निशिखामग्निज्वालाम् । 'आर्चिर्हेति शिखा' इति ज्वालापर्यायेष्वमरः । तर्कयामास विचारयामास । पतिराज्यविनाकृता पत्या राज्येन च विरहिता ।

( ३८ ) अतीतेति । अतीतोऽतिक्रान्तः वाक्पथो वाचो मार्गो तत्र तथाभूते । यत्र न शक्यो वाचाऽऽत्मा परित्रातुं तथाभूत इत्यर्थः । काले शशाप शापं दत्तवती । शापमाह यथेति । यथा यदीत्यर्थः ।

( ३९ ) तथेति । तथा तर्हीत्यर्थः । मृगजीवनो व्याधः परासुः परागता असवो यस्य तथाभूतः सन् मृतः सन्नित्यर्थः । 'परासुप्राप्तपञ्चत्वपरेतप्रेतसंस्थिताः' इत्यमरः । पतता पततु । आर्षमात्मनेपदम् । उक्तमात्रे उक्त एव । वचनसमनन्तरमेवेत्यर्थः । व्यसुः विगतप्राणः सन् । मेदिन्यां भूमौ ।

इति श्रीनलचरितव्याख्यायां बालबोधिन्यां त्रयष्षष्टोऽध्यायः ।

---

( १ ) सेति । सा दमयन्ती प्रतस्थे प्रययौ । 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । प्रतिभयं भयङ्करम् । झिल्लिकागणनादितं झिल्लिकानां चीरीणां 'चिल्ट' इतिख्यातानां गणैर्नादितं नादयुक्तं कृतम् । 'चीरी झिल्लिका च समा इमाः ।' इत्यमरः ।

---

१ क्षुद्रः ( क. म. सं. )

सिंहद्वीपिरुरुव्याघ्रमहिषर्क्षगणैर्युतम् ।
नानापक्षिगणाकीर्णं म्लेच्छतस्करसेवितम् ॥ २
सालवेणुधवाश्वत्थतिन्दुकेङ्गुदकिंशुकैः ।
अर्जुनारिष्टसंछन्नं स्यन्दनैश्च सशाल्मलैः ॥ ३
जम्ब्वाम्रलोध्रखदिरशालवेत्रसमाकुलम् ।
पद्मकामलकप्लक्षकदम्बोदुम्बरावृतम् ॥ ४
बदरीबिल्वसंछन्नं न्यग्रोधैश्च समाकुलम् ।
प्रियालतालखर्जूरहरीतकिबिभीतकैः ॥ ५
नानाधातुशतैर्नद्धान्विविधानपि चाचलान् ।

---

( २ ) वनमुपवर्णयति सिंहेत्यादिभिश्चतुर्भिः । सिंहेति । सिंहाः द्वीपिनः चित्रकाया व्याघ्रविशेषाः ' चित्ता ' इति ख्याताः । रुरुः 'रोहैं' इति महाराष्ट्रेषु ख्यातो मृगविशेषः । महिषो वनमहिषः ऋक्षा अच्छभल्ला 'अस्वल' इतिख्याताः मृगा हरिणाश्च तैः । नानेति नानापक्षिणां गणैः आकीर्णं व्याप्तम् । म्लेच्छाः ' गोमांसखादको यस्तु विरुद्धं बहु भाषते । सर्वाचारविहीनश्च म्लेच्छ इत्यभिधीयते' इति बौधायनेन परिभाषिताः ।

( ३ ) सालेति । सालाः सर्जाः ' सालई ' इतिख्याता वृक्षविशेषाः वेणवः, धवाः अर्शःप्रभृतिरोगनिर्मूलना वृक्षविशेषाः ' धवो धटो नन्दितरु' रिति भावप्रकाशः । अश्वत्थाः, तिन्दुकाः स्फूर्जकाः 'टेंभुरणी' इति ख्याताः, इङ्गुदा ' हिंगणबेट्ट ' इति ख्याताः ' किंशुकाः पलाशाश्च तैः । अर्जुनेति अर्जुनाः ' सादडा ' इति ख्याता अरिष्टाश्च 'रिठा ' इति ख्यातास्तैः संछन्नं आवृतम् । स्यन्दनैस्तिनिशैः 'तिवस ' इति ख्यातैः । संछन्नमिति समासैकदेशोऽनुवर्तते । सशाल्मलैः शाल्मलैः शाल्मलिभिः ' सावरी ' ति ख्यातैः सहवर्तन्ते तथाभूतैः ।

( ४ ) जम्ब्वः आम्राः लोध्रा ' लोध ' इति ख्याताः खदिराः ' खैर ' इतिख्याताश्च ये साला वृक्षास्तैश्च वेत्रैर्वेतसैश्च समाकुलं व्याप्तम् । पद्मकेति । पद्मकाः पद्मकाष्ठतरवः आमलकाः प्लक्षाः ' पायरी ' इति ख्याताः कदम्बाः ' कळंब ' इति ख्याता उदुम्बराश्च तैरावृतम् ।

( ५ ) बदरीति । न्यग्रोधैर्वटैः । प्रियालेति प्रियाला राजादनाः 'चार' इतिख्याताः तालाः खर्जूरा हरीतका हरीतकी ( हिरडा ) तरवः बिभीतकाः ' बेहडा ' इतिख्याताश्च तैः समाकुलम् ।

( ६ ) नानेति । अत्र परमष्टम पद्य यावद्द्वितीयान्तानि कर्मपदान्यष्टमपद्यान्तर्गतेन ददर्शेत्यनेन सम्बध्यन्ते । नाना यानि धातुशतानि तैः नद्धान् बद्धान्व्याप्तानिति यावत् । अचलान् पर्वतान् । पक्षिसंघुष्टान् पक्षिभिर्नादितान्

---

१ वराह ( क ) २ शाक (क)

निकुञ्जान्पैरिसंघुष्टान्दरीश्चाद्भुतदर्शनाः ॥ ६
नदीः सरांसि वापीश्च विविधांश्च मृगद्विजान् ।
सा बहून्भीमरूपांश्च पिशाचोरगराक्षसान् ॥ ७
पल्वलानि तटाकानि गिरिकूटानि सर्वशः ।
सैरितो निर्झरांश्चैव ददर्शाद्भुतदर्शनान् ॥ ८
यूथशो ददृशे चात्र विदर्भाधिपनन्दिनी ।
महिषांश्चै वराहांश्च ऋक्षांश्चै वनपन्नगान् ॥ ९
तेजसा यशसा लक्ष्म्या स्थित्या च परया युता ।
वैदर्भी विचरत्येका नलमन्वेषती तदा ॥ १०
नाबिभ्यत्सा नृपसुता भैमी तत्राथ कस्यचित् ।
दारुणामटवीं प्राप्य भर्तृव्यसनपीडिता ॥ ११
विदर्भतनया राजन्विललाप सुदुःखिता ।
भर्तृशोकपरीताङ्गी शिलातलमथाश्रिता ॥ १२

निकुञ्जान् लतादिपिहितोदरान् प्रदेशान् । अद्भुतदर्शनाःअद्भुत आश्चर्यजनकं दर्शन यासा ताः दरीः कन्दराणि ।

( ७ ) नदीरिति । महान्तस्तडागा' । वापी खाते चतुर्दिक्षु प्रातिदिश त्रिंशदधिकशतहस्तान्यूनो जलाशयाविशेष. ।

( ८ ) पल्वालानीति । पल्वलानि अल्पसरासि । तडागाः खाते चतुर्दिक्षु प्रतिदिश चत्वारिंशद्धस्तान्यूनो जलाशयाविशेषः । तडागादिलक्षणानि च जलाशयोत्सर्गतत्वे द्रष्टव्यानि । गिरिकूटानि पर्वतशिखराणि । सर्वशः सर्वाणि । निर्झरान् झराख्याञ्जलप्रवाहान् ।

( ९ ) यूथश इति । विदर्भाधिपनन्दिनी दमयन्ती । यूथशः यूथभूतान् । यूथः समूहः । वनपन्नगा आरण्यकाः सर्पाः । सर्पाः हि पन्न पातित यथा तथा गच्छन्तीति ।

( १० ) तेजसेति । स्थित्या स्थैर्येण । अन्वेषती अन्वेषयन्ती । अनुपूर्वादेषतेरनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यतया लटः शतरि ' उगितश्चे ' ति स्त्रियां ङीप् । आगमशास्त्रस्यानित्यत्वाच्च नुमभावः ।

( ११ ) नेति । अबिभ्यदित्यार्षम् अबिभेदित्यर्थः । भियो लङ् कस्यचित् कस्मादपीत्यर्थः । शेषे षष्ठी । दारुणा भीषणा अटवीं वन प्राप्य भर्तृव्यसनपीडिता भर्तुर्दुःखेन सञ्जातपीडा क्लेशिता वा विललापेत्युत्तरेण सम्बन्धः ।

( १२ ) विदर्भेति । भार्त्रेति भर्तुः सनन्धिना शोकेन परीतानि अङ्गानि अवयवा यस्यास्तथाभूता ।

१ पक्षि ( क ) निकुञ्जपक्षिसंघुष्टा ( च ) २ चरतो ( क ) ३ सरित्सरांसि च तदा ( क ) ४ दर्शनाम् ( क ) ५ महिषान्वराहान् गोमायूऋक्षवानरपन्नगान् ( क ) ६ वानरपन्नगान् (च) ७ चचारैका ( क ) ८ कर्शिता ( च. क.)

दमयन्त्युवाच ।
व्यूढोरस्क महाबाहो निषधानां जनाधिप ।
क्व नु राजन्गतोऽस्यद्य त्यक्त्वा मां विजने वने ॥ १३
अश्वमेधादिभिर्वीर क्रतुभिर्भूरिदक्षिणैः ।
कथमिष्ट्वा नरव्याघ्र मयि मिथ्या प्रवर्तसे ॥ १४
यत्त्वयोक्तं नरश्रेष्ठ मत्समक्षं महाद्युते ।
स्मर्तुमर्हसि कल्याण वचनं पार्थिवर्षभ ॥ १५
यच्चोक्तं विहगैर्हंसैः समीपे तव भूमिप ।
मत्समक्षं यदुक्तं च तदवेक्षितुमर्हसि ॥ १६
चत्वार एकतो वेदाः साङ्गोपाङ्गाः सविस्तराः ।
स्वधीता मनुजव्याघ्र सत्यमेकं किलैकतः ॥ १७
तस्मादर्हसि शत्रुघ्न सत्यं कर्तुं नरेश्वर ।
उक्तवानसि यद्वीर मत्सकाशे पुरा वचः ॥ १८

---

( १३ ) व्यूढोरस्केति । व्यूढं पृथुलं वक्षो हृदयं यस्य तथाभूत। 'व्यूढः संहतविन्यस्तपृथुलेष्वभिधेयवत् । इति मेदिनी।' विसृज्य त्यक्त्वा मामिति शेषः।

( १४ ) अश्वमेधेति । भूरिदक्षिणैरिति भूरि भूयिष्ठा दक्षिणा येषु तथाभूतैः। क्रतुभिर्यज्ञैः इष्ट्वा । यज्ञान् कृत्वेत्यर्थः। मयि मद्विषये मिथ्या असत्यावलम्बी सन् प्रवर्तसे । नैतत्सदृशमिति भावः ।

( १५ ) यदिति । यत् विवाहकाले ' यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते । तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ॥ ' इति उक्तम् ( ५७-२२ ) वचनं तद्वचनमित्यर्थः। पार्थिवर्षभ नृपतिश्रेष्ठ ।

( १६ ) यदिति। विहगैः विहायसि आकाशे गच्छद्भिः। गमेर्डः। 'विहायसो विह चे' ति विहादेशः । अवेक्षितुं आलोचयितुम् । नार्हति तादृशं प्रेम त्यागमिति भावः ।

( १७ ) चत्वार इति।वेदा ऋग्यजुःसामाथर्वाख्याः।साङ्गोपाङ्गा अङ्गैरुपाङ्गैश्च सह वर्तमानाः। वेदानामङ्गानि च ' शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः । ज्योतिषामयनं चेति षडङ्गानि प्रचक्षते ॥ ' इत्युक्तानि । उपाङ्गानि च पुराणन्यायमीमांसाधर्मशास्त्राख्यानि । एकतः एकस्मिन्पार्श्वे । सत्यं किल साङ्गोपाङ्गेन वेदचतुष्टयेन समितमिति भावः ।

( १८ ) तस्मादिति । पुरा मत्सकाशे यद्वच उक्तवानसि तत्सत्यं कर्तुमर्हसीति सम्बन्धः ।

---

*१ सिंहोरस्क ( क. च. ) २ गतोऽसि त्वं ( क ) गतोऽसीह ( च ) ३ श्वास ( क ) स्वास-( च ) ४ कर्तुं ( क. च. ) ५ तद्वृतं ( क. च. ) ६ मद्दरसकाशे च तैरुक्तं ( क. च. )

हा वीर ननु नामाहं नष्टा किल तवानघ ।
अस्यामटव्यां घोरायां किं मां न प्रतिभाषसे ॥ १९
भर्त्सयत्येष मा रौद्रो व्यात्तास्यो दारुणाकृतिः ।
अरण्यराट् क्षुधाविष्टः किं मां न त्रातुमर्हसि ॥ २०
न मे त्वदन्या काचिद्धि प्रियाऽस्तीत्यब्रवीः सदा ।
तामृतां कुरु कल्याण पुरोक्तां भारतीं नृप ॥ २१
उन्मत्तां विलपन्तीं मां भार्यामिष्टां नराधिप ।
ईप्सितामीप्सितोऽसि त्वं किं मां न प्रतिभाषसे ॥ २२
कृशां दीनां विवर्णां च मलिनां वसुधाधिप ।
वस्त्रार्धप्रावृतामेकां विलपन्तीमनाथवत् ॥ २३
यूथभ्रष्टामिवैकां मां हरिणीं पृथुलोचन ।
न मानयसि मामार्य रुदतीमरिकर्शन ॥ २४
महाराज महारण्ये अहमेकाकिनी सती ।

(१९) हेति । अनघ निष्पाप । तव नष्टा असद्भूता । त्वयाऽपेक्ष्यमाणाऽपि ते नेदानीमस्मि असांनिध्यादिति भावः । नाम प्राकाश्ये । स्पष्टोऽयमर्थ इति भावः । हा इति विषादे । यद्वा तव सत्यमहं नष्टा नाशमनुप्राप्तेत्यर्थः अन्यत्पूर्ववत् । घोरतमे कानने नाशस्यावश्यभावित्वाद्भूततयोक्तिः । प्रतिभाषसे उत्तरयसि ।

(२०) भक्षयतीति । रौद्रो भयङ्करः । व्यात्तास्यः व्यात्तं भक्षणार्थमुद्घाट्य प्रसारितमास्यं मुखं येन तथाभूतः । अरण्यराट् अरण्यस्य राट् राजा सिंहः । क्षुधा आविष्टः आक्रान्तः । एतेन जीवनप्रत्याशाया अभावो द्योत्यते ।

(२१) नेति । त्वत् त्वत्तः । अन्यारादित्यादिना पञ्चमी । भारतीं वाणीम् । ऋतां सत्याम् ।

(२२) उन्मत्तामिति । उन्मत्तामुन्मादयुक्तामिव सञ्जाताम् । इष्टां प्रियाम् । ईप्सिता आप्तुमिष्टाम् । ईप्सितोऽसीत्यत्र ईप्सितोऽपीत्येव पाठः साधुतमः । अपिरेव ह्यत्र प्रयुक्तः प्रतिभाषणाभावस्यायुक्ततां विशदीकुर्यान्न पुनरस्तिरिति ।

(२३) कृशामिति । विवर्णां कान्तिशून्यां म्लानामित्यर्थः ।

(२४) यूथेति । यूथभ्रष्टां यूथात्सजातीयानां समूहाद् भ्रष्टां हरिणीमिव वर्तमानाम् । पृथुलोचन विशालनेत्र नल । पृथुलोचनता हि लक्षणं महात्मन इति लक्षणविद आचक्षते । अरिकर्षणेति अरीन् कर्षयति वधार्थमिति तथाभूत । कर्शनेति पाठे कृश तानवे इत्यतो दैवादिकाण्णिचो ल्युट् । कर्शयति कृशीकरोतीति कर्शनः क्षयकारीत्यर्थः ।

(२५) महाराजेति । महारण्ये एकाकिनी असहाया 'एकादाकीनिच्चा

१ नामाहमिष्टा (क. च.) २ प्रियेत्यसकृदब्रवी (च) ३ अब्रवीस्तदा (क)
४ रुदन्तीं (क ग म) ५ [illegible]

देममन्त्यभिभाषे त्वां किं मां न प्रतिभाषसे ॥ २५
कुलशीलोपसंपन्नं चारुसर्वाङ्गशोभनम् ।
नाद्य त्वां प्रतिपश्यामि गिरावस्मिन्नरोत्तमम् ॥ २६
वने चास्मिन्महाघोरे सिंहव्याघ्रनिषेविते ।
शयानमुपविष्टं वा स्थितं वा निषधाधिप ॥ २७
प्रस्थितं वा नरश्रेष्ठ मम शोकविवर्धनं ।
कं नु पृच्छामि दुःखार्ता त्वदर्थे शोककर्शिता ॥ २८
कच्चिद्दृष्टस्त्वयाऽरण्ये संगत्येह नलो नृपः ।
को नु मे वाथ प्रष्टव्यो वनेऽस्मिन्प्रस्थितं नलम् ॥ २९
अभिरूपं महात्मानं परव्यूहविनाशनम् ।
यमन्वेषसि राजानं नलं पद्मनिभेक्षणम् ॥ ३०
अयं स इति कस्याद्य श्रोष्यामि मधुरां गिरम् ।

सहाय' इत्याकिनिच्[ सती । एतेन प्रतिभाषणाभावस्यात्यन्तमयुक्तत्व द्योत्यते ।

( २६ ) कुलेति । कुल कुलीनता शील सद्वृत्त ताभ्या उपसपन्न युक्तम् ' शील स्वभावे सद्वृत्ते ' इति मेदिनी । चार्विति चारूणि मनोहराणि सर्वाण्यङ्गानि यस्य स चासौ शोभनश्च तम् )

(२७–२७) ननु पृच्छ्यता यः कोऽपि मदीयमधिष्ठानामिति चेनैतच्छक्यसघटनामित्याह वन इति । इतः प्रभृति सार्धे पद्यद्वयमेक वाक्यम् । शयान शयन कुर्वाणम् । प्रस्थित प्रयान्तामिति यावत् । शोककर्षिता शोकेनाकृष्टा ( आक्रान्तेत्यर्थ ) कृषेर्निवृत्तप्रेषणाण्णिचि निष्ठा । कार्शितेतिपाठे कृशीकृतेर्थः।

( २९ ) कच्चिदिति । कच्चिदित्यभीष्टप्रश्नेऽव्ययम् । सगत्य समागम्य ' त्वया इहारण्ये सगम्य नलो नृपः कच्चिद्दृष्टः ?' इति सबन्धः । इतीत्यध्याहार्यम् । पद्यार्धमिदं पूर्वान्वयि । मे मया । निपातोऽय मे शब्दः । को नु नल पृष्टव्य इति सबन्धः । प्रच्छेर्द्विकर्मकतया किमर्थश्च नलश्चेति कर्मद्वितयम् ।

( ३० ) अभिरूपामिति । अभिरूप विद्वास मनोहर वा । ' प्राप्तरूपस्वरूपाभिरूपा बुधमनोज्ञयोः '। इत्यमरः । ' अभिरूपभूयिष्ठा परिषदियमिति' कालिदासः । परव्यूहविनाशन शत्रुसमूहनाशनम् । 'सदोहे प्रकरौघवारनिकरः ।' इति हैम । पद्मनिभेक्षण कमलसदृशनेत्र । अन्वेषसि अन्वीच्छसि । एषु गतावित्यतो लट् । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । अतः पर चतुस्त्रिंश पद्य यावदुत्तरोत्तरपद्यपूर्वार्ध पूर्वपूर्वपद्योत्तरार्धान्वयि ।

( ३१ ) अयमिति । मधुरा मनोहरा । अय पुरो दृश्यमानः सद्य

१ आभाषमाणा त्वां पत्नीं ( क ) सपत्नीमभिभाषन्तीं ( च ) सपन्न ( न. म. ) सपन्ना ( च ) संपन्ना ( क ) २ शोभन ( न. म. ) शोभना ( च ) शोभनाम् ( क ) अतः परं च ' अनुमतां महाराज किं मां न प्रतिभाषसे । ' इत्याधिक क पुस्तके । ४ निबर्हण ( क ) ५ संगत्येति ( क ) ६ कथयेस्व वनेऽस्मिन्विष्ठित नृपम् ( क. च. )

अरण्यराडयं श्रीमांश्चतुर्दंष्ट्रो महाहनुः ॥ ३१
शार्दूलोऽभिमुखोऽभ्येति पृच्छाम्येनमशङ्किता ।
भवान्मृगाणामधिपस्त्वमस्मिन्कानने प्रभुः ॥ ३२
विदर्भराजतनयां दमयन्तीति विद्धि माम् ।
निषधाधिपतेर्भार्यां नलस्यामित्रघातिनः ॥ ३३
पतिमन्वेषतीमेकां कृपणां शोककर्शिताम् ।
आश्वासय मृगेन्द्रेह यदि दृष्टस्त्वया नलः ॥ ३४
अथवा त्वं वनपते नलं यदि न शंससि ।
मां खादय मृगश्रेष्ठ दुःखादस्माद्विमोचय ॥ ३५
श्रुत्वाऽरण्ये विलपितं न मामाश्वासयत्ययम् ।

दंष्ट्राः चतस्रो दंष्ट्रा बहिर्दृश्यमाना यस्य तथाभूतः अरण्यराट् अरण्यस्य राजा। राजत इति राट्। राजेः क्विप्। ' राजा राट् पार्थिव ' इत्यमरः।

( ३२ ) शार्दूल इति शार्दूलो व्याघ्रः। अभिमुखः संमुखः सन् एति गच्छति। अशङ्किता अभीता। व्रजामि उपगच्छामीत्यर्थः। नल प्रष्टुमिति भावः। गत्वा पृच्छति भवानिति। मृगाणां वन्यानां पशूनाम्। कानने अरण्य-विषये। प्रभुः स्वामी। असीति शेषः।

( ३३ ) विदर्भेति । दमयन्तीति विद्धि दमयन्तीं जानीहि। कर्मणो निपातेनाभिधानात्प्रथमा। ' नारद इत्यबोधि स ' इत्यादिवत्। आमित्र-घातिनः शत्रुघातनशीलस्य। ताच्छील्ये णिनिः।

( ३४ ) पतिमिति। अन्वेषतीं अन्विच्छन्तीं। नुमात्मनेपदयोरभाव-स्तूपपादितः प्रागेव। कृपणां दीनां। आश्वासय वार्तानिवेदनेन सुखय।

( ३५ ) अथवेति। त्वं वनपते इत्यत्र अरण्यनृपते इति पाठस्तु न साधुः। नृपतिशब्दस्याधीश्वरसामान्यवाचकत्वाभावात्। नृणामेव ह्यधीश्वरे युक्तः प्रयोग एतस्येति। शंससि कथयसि। शंसु स्तुतावित्यस्य धातोरनेकार्थ-त्वात्कथने वृत्तिः। प्रयुञ्जते चात्रार्थे एनं कवयः। यथा कालिदासः' न मे ह्रिया शंसति किंचिदीप्सितम्। ' इति ( रघौ )। तर्हीति यदिशब्दबला-ल्लभ्यते। खादय भक्षय। खादतेर्निवृत्तप्रेषणाण्णिचि लोट्। कुत इत्याह। दुःखादिति। वाक्यमेतत्खादने हेतुमवबोधयति।

(३६) शार्दूलमनाचक्षाणमुपलभ्यान्यतः प्रवर्तते श्रुत्वेति। अयं व्याघ्रः मां नाश्वा-सयति। अत इति शेषः। स्वादुसलिला मधुरजलाम्। सागरगमां सागरं गच्छ-न्तीम्। 'गमेः सुपि वाच्य' इति खच्। 'अरुर्द्विषदित्यादिना' मुम्। आपगा नदीम्। सा ह्यापेन जलसमूहेन गच्छतीति। यामि प्रष्टुमिति भावः। अतः परं च यथापूर्वं यथोत्तरं चात्मनो निवेदनस्य नलविषयकस्य च प्रश्नस्याभावाद्भवितव्यमेव

१ अतः परं ' सिंहस्कन्धो महाबाहुः पद्मपत्रनिभेक्षणः। ' इत्यधिकं कपुस्तके २ अथवाऽरण्यनृपते ( क. च. ) मामदस्व मृगश्रेष्ठ विशोकां कुरु दुःखिताम् ( च ) ४ ममैव मृगराट् स्वयम् ( क. च. )

यामीमां स्वादुसलिलामापगां सागरङ्गमाम् ॥ ३६
इमं शिलोच्चयं पुण्यं शृङ्गैर्बहुभिरुच्छ्रितैः ।
विराजद्भिरिवानेकैर्नैकवर्णैर्मनोरमैः ॥ ३७
नानाधातुसमाकीर्णं विविधोपलभूषितम् ।
अस्यारण्यस्य महतः केतुभूतमिवोत्थितम् ॥ ३८
सिंहशार्दूलमातङ्गवराहर्क्षमृगायुतम् ।
पतत्रिभिर्बहुविधैः समन्तादनुनादितम् ॥ ३९
किंशुकाशोकबकुलपुन्नागैरुपशोभितम् ।
कर्णिकारधवप्लक्षैः सुपुष्पैरुपशोभितम् ४०
सरिद्भिः सविहङ्गाभिः शिखरैश्च समाकुलम् ।
गिरिराजमिमं तावत्पृच्छामि नृपतिं प्रति ॥ ४१

कैश्चित्पद्यैरिति प्रतीयते । नैव पुनः क्वापि सदृशान्येतानि । 'श्रुत्वाऽरण्ये विलपित ममैव मृगराट् स्वयम्। यात्येव मृष्टसलिलामापगां सागरोपमाम्' इति कचपुस्तकधृतस्तु पाठो नैतदपेक्षते। बहुषु पुनर्नैव सदृष्टो नापि चारुतर इत्युपेक्षितोऽस्माभिः

( ३७ ) अथ पर्वतं पृच्छामीत्याह इममिति । शिलोच्चयं पर्वतम् । 'स हि शिलानामुच्चय इति । पुण्यं पवित्रम् । शृङ्गैः शिखरैः उच्छ्रितम् । प्रकृत्यादित्वात्तृतीया । उच्छ्रितशिखरमित्यर्थः । विराजद्भिः शोभमानैः । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वाल्लटः शता । नैकवर्णमनोरमैः नैके अनेके वर्णा येषां तान्यत एव च मनोरमाणि । नैकेति नशब्देन सुप्सुपेति समासः।

( ३८ ) नानेति । कलापकमेतत् । इतः परं द्वितीयान्तानि पद्यान्येकचत्वारिंशगतेन गिरिराजमित्यनेन संबध्यन्ते । नानाधातुसमाकीर्णं अनेकैर्धातुभिर्व्याप्तम् । विविधोपलभूषितम् अनेकप्रकारैः पाषाणै रत्नैर्वा शोभितम् । ' उपलः प्रस्तरे रत्ने ' इति मेदिनी । केतुभूतं ध्वजसदृशम् । उत्थितं उच्छ्रितमित्यर्थः । उच्छ्रितमिति पाठस्तु साधुतरः ।

( ३९ ) सिंहेति सिंहानां शार्दूलानां मातङ्गानां ( गजानां ) वराहाणां ऋक्षाणां मृगाणां च अयुतानि दशसहस्राणि यस्मिंस्तथाभूतम् । अयुतशब्दोऽत्रासंख्येयतां लक्षयति । पतत्रिभिः पक्षिभिः पतत्राणि हि पतत्त्रायन्ते तानि चैषां सन्तीति । अनुनादितं नादयुक्तं कृतम् ।

(४०) किंशुकेति । किंशुकाः पलाशाः । पुन्नागाः 'उडणी'ति विख्याताः कर्णिकाराः ' पांगेरा ' इति ख्याताः । धवा अर्शोहरा वृक्षविशेषाः ।

( ४१ ) सरिद्भिरिति । सविहङ्गाभिः हंसादिजलचरपक्षियुक्ताभिः । सरिद्भिर्नदीभिः समाकुलं व्याप्तम् । नृपतिं प्रति नलविषये । तावत् आदौ ।

१ यात्येव मृष्टसलिलामापगां सागरोपगाम् । ( क ) यात्येवा मृष्टसलिला (च) २ विराजितं दिवसृग्भिः ( घ. न. ) ३ मिवोच्छ्रितम् ( क ) मिव स्थितम् ( न ) ४ रुपशोभितम् ( च ) ५ अन. पर ' पृथिव्या रुचिराकारं चूडामणिमिव स्थितम् । ' इत्यधिकं कपुस्तके । ६ मृच्छामि ( न )

भगवन्नचलश्रेष्ठ दिव्यदर्शन विश्रुत ।
शरण्य बहुकल्याण नमस्तेऽस्तु महीधर ॥ ४२
प्रणमे त्वाऽभिगम्याहं राजपुत्रीं निबोध माम् ।
राज्ञः स्नुषां राजभार्यां दमयन्तीति विश्रुताम् ॥४३
राजा विदर्भाधिपतिः पिता मम महारथः ।
भीमो नाम क्षितिपतिश्चातुर्वर्ण्यस्य रक्षिता ॥ ४४
राजसूयाश्वमेधानां क्रतूनां दक्षिणावताम् ।
आहर्ता पार्थिवश्रेष्ठः पृथुचार्वञ्चितेक्षणः ॥ ४५
ब्रह्मण्यः साधुवृत्तश्च सत्यवागनसूयकः ।
शीलवान्वीर्यसंपन्नः पृथुश्रीर्धर्मविच्छुचिः ॥ ४६
सम्यग्गोप्ता विदर्भाणां निर्जितारिगणः प्रभुः ।
तस्य मां विद्धि तनयां भगवंस्त्वामुपस्थिताम् ॥ ४७

---

(४२) भगवन्निति । दिव्यदर्शन दिव्य दर्शन वर्णो यस्य तथाभूत अलौकिकस्वरूपेत्यर्थः । 'दर्शनं वर्णमुकुरचक्षु शास्त्रोपलब्धिषु' इति त्रिकाण्डशेषः । विश्रुत विख्यात । शरण्य शरणे रक्षणे साधो । । 'तत्र साधु'रिति यत् ।

(४३) प्रणम इति । अभिगम्य आगम्य । प्रणमे नमस्करोमि । आर्षस्तङ् । निबोध जानीहि । विश्रुता ख्याताम् ।

(४४) राजेति । महारथः ' एको दश सहस्राणि योधयेद्यस्तु धन्विनाम् । अस्त्रशस्त्रप्रवीणश्च महारथ इति स्मृतः ॥' इत्युक्तलक्षणो वीरः । क्षितिपती राजा । चातुर्वर्ण्यस्य चत्वारो वर्णाश्चातुर्वर्ण्यं तस्य । ब्राह्मणक्षत्रियवैश्यशूद्राणामित्यर्थः । 'चतुर्वर्णादीनां स्वार्थ उपसङ्ख्यान'मिति ष्यञ् स्वार्थे।

(४५) राजसूयेति । राज्ञा सोतव्योऽभिषवद्वारा निष्पादनीयो राजा वा सोमः ( लताविशेषः ) सूयतेऽस्मिन्स राजसूयो राज्ञा कर्तव्यो यज्ञविशेषः । 'राजसूयसूर्ये'त्यादिनिपातनात्साधु । 'राजा स्वाराज्यकामो राजसूयेन यजेते'ति श्रुतिः । अश्वमेधश्च प्रागुक्तः क्रतुविशेषः । बहूनां करणाद्बहुवचनम् । दक्षिणावतां भूयिष्ठदक्षिणायुक्तानाम् । भूमार्थे मतुप् । आहर्ता कर्ता । 'आहर्ता क्रतूनाम् ।' इति कादम्बरी । पृथिनी पृथुनी विशाले चारु मनोहर अञ्चित स्पन्दन ययोस्तथाभूते च ईक्षणे यस्य स ।

(४६) ब्रह्मण्य इति । ब्रह्मण्यो ब्रह्मभ्यो ब्राह्मणेभ्यो हितः । 'तस्मै हित'मिति यत् । अत्र च ब्राह्मणवाच्येव ब्रह्मशब्दो गृह्यत इति भाष्ये द्रष्टव्यम् । अनसूयकः नासूयतीति तथाभूतः । 'असूञ् उपतापन' इत्यतो ण्वुल् कर्तरि । शीलवान् शोभनस्वभावयुक्तः । पृथुश्रीर्विपुलसंपत्ति ।

(४७) सम्यगिति । गोप्ता रक्षिता । गुपेस्तृच् कर्तरि । त्वामुपस्थितां त्वत्समीपं प्राप्ताम् ।

निषधेषु महाराजः श्वशुरो मे नरोत्तमः ।
गृहीतनामा विख्यातो वीरसेन इति स्म ह ॥ ४८
तस्य राज्ञः सुतो वीरः श्रीमान्सत्यपराक्रमः ।
क्रमप्राप्तं पितुः स्वं यो राज्यं समनुशास्ति ह ॥ ४९
नलो नामारिहा श्यामः पुण्यश्लोक इति श्रुतः ।
ब्रह्मण्यो वेदविद्वाग्मी पुण्यकृत्सोमपोऽग्निचित् ॥ ५०
यष्टा दाता च योद्धा च सम्यक्चैव प्रशासिता ।
तस्य मामबलां श्रेष्ठां विद्धि भार्यामिहागताम् ॥ ५१
त्यक्तश्रियं भर्तृहीनामनाथां व्यसनान्विताम् ।
अन्वेषमाणां भर्तारं त्वं मां पर्वतसत्तम ॥ ५२
समुल्लिखद्भिरेतैर्हि त्वया शृङ्गशतैर्नृपः ।

---

(४८) पितृकुलमाख्याय पतिकुलमिदानीमाचष्टे निषधेष्विति। गृहीतनामा सुगृहीतनामेत्यर्थः । स च प्रातःस्मरणीयनामा । 'स सुगृहीतनामा स्यात्यः प्रातः स्मर्यते बुधैः ।' इत्युक्तेः ।

(४९) तस्येति। तस्य वीरसेनस्य। पितुः सकाशात् क्रमप्राप्तं। वंशक्रमेण प्राप्तं राज्यं राष्ट्रम्। हेति निश्चये पादपूर्तौ वा।

(५०) नल इति। नलो नाम नल इति प्रसिद्धः। नाम प्राकाश्ये। अरिहा शत्रूणां हन्ता। हन्तेः क्विप्। वाग्मी वाचोयुक्तिपटुः। 'वाचो युक्तिपटुर्वाग्मी'ति तर्कवाचस्पतिः। अत्र द्विगकारमेव रूपमित्येके। वस्तुतस्तु 'हलो यमां यमि लोपः' इति वैकल्पिके लोपे एकगकारमपि रूपं संपद्यत एव। सोमपः सोमं पिबति तथाभूतः। पिबते कः। यज्ञकर्तेत्यर्थः। तत्रैव हि सोमरसः पीयत इति। सोमश्च नाम मानसपरिसरोद्भवो लताविशेषः। यस्य किल सोमस्येव कलाः शुक्ले पक्षे पत्राण्युपचीयन्ते कृष्णे चापह्रसन्ति। विशेषतश्च स्वरूपादिकमेतस्य सुश्रुते चिकित्सितस्थाने एकोनत्रिंशेऽध्याये द्रष्टव्यम्। अग्निमान् आहिताग्निः।

(५१) यष्टेति। यष्टा यजनशीलः। यजेस्ताच्छील्ये तृन्। एवमुत्तरत्रापि। अबलां श्रेष्ठामित्यत्र अचलश्रेष्ठेति पाठः साधुतरः। अन्यथा ह्यात्मनः श्लाघा भवतीति।

(५२) त्यक्तश्रियमिति। त्यक्ता श्रीः संपद्यया तथाभूताम्। अनाथां नास्ति नाथ आश्रयो यस्यास्तथाभूताम्। व्यसनान्वितां दुःखयुक्ताम्। अन्वेषमाणामित्यनुपूर्वादेषतेर्भौवादिकाल्लटः शानच्। अनेकार्थत्वादन्वेषणे वृत्तिः। मामिति विद्धीति पूर्वेण संबन्धः।

(५३) समुल्लिखद्भिरिति। समुल्लिखद्भिरित्येवात्र युक्तः पाठः। कर्मणि

---

१ स्मृतः ( क. च. ) २ अचलश्रेष्ठ (क. च.) ३ नलं नरवरोत्तमम् ( क ) स वै ( च ) ४ स ( क. च. )

कच्चिद्दृष्टोऽचलश्रेष्ठ वनेऽस्मिन्दारुणे नलः ॥ ५३
गजेन्द्रविक्रमो धीमान्दीर्घबाहुरमर्षणः ।
विक्रान्तः सत्त्ववान्वीरो भर्ता मम महायशाः ॥ ५४
निषधानामधिपतिः कच्चिद्दृष्टस्त्वया नलः ।
किं मां विलपतीमेकां पर्वतश्रेष्ठ विह्वलाम् ॥ ५५
गिरा नाश्वासयस्यद्य स्वां सुतामिव दुःखिताम् ।
वीर विक्रान्त धर्मज्ञ सत्यसंध महीपते ॥ ५६
यद्यस्यस्मिन्वने राजन्दर्शयात्मानमात्मना ।
कदा सुस्निग्धगम्भीरां जीमूतस्वनसंनिभाम् ॥ ५७
श्रोष्यामि नैषधस्याहं वाचं तामामृतोपमाम् ।
वैदर्भीत्येव विस्पष्टां शुभां राज्ञो महात्मनः ॥ ५८
आम्नायसारिणीमृद्धां मम शोकविनाशिनीम् ।

नैराकाङ्क्ष्यात् । स आकाश उल्लिखद्भिः घर्षद्भिः अभ्रकषैरित्यर्थः। एतेन च दूरस्थस्यापि दर्शने शक्तिरभिव्यज्यते । दारुणे भयङ्करे । कच्चिदिति प्रश्ने ।

( ५४ ) नल विशिनष्टि गजेन्द्रविक्रम इति । गजेन्द्रविक्रमः गजेन्द्रस्येव विक्रमो गतिर्यस्य तथाभूतः । 'द्विरदेन्द्रगतिश्चकोरनेत्र' इति मृच्छकटिकम् अमर्षणः अभिभवासहिष्णुः । अमर्षश्चावश्यको गुणविशेषो विशेषतो राज्ञाम् । अत एवाह भारविः 'अमर्षशून्येन जनस्य जन्तुना न जातहार्देन न विद्विषादरः' इति । विक्रान्तः पराक्रमशाली सत्त्ववान् बलशाली ।

( ५५ ) निषधानामिति । विलपतीति आगमशास्त्रस्यानित्यत्वान्न नुम् विह्वला व्याकुलाम् । अर्धमिदमुत्तरान्वयि ।

( ५६ ) गिरेति । गिरा वाचा करणभूतया । पुनर्नलमेवोद्दिश्याह वीरेति। अर्धमेतदुत्तरान्वयि । सत्यसन्ध सत्या सन्धा प्रतिज्ञा यस्य तथाभूत । 'सन्धा स्थितिप्रतिज्ञयोः' इति मेदिनी ।

( ५७ ) यदीति । आत्मना स्वयमेव आत्मानं स्व स्वीयां मूर्ति वा। कदेत्याद्यर्धमुत्तरान्वयि। सुस्निग्धगम्भीरा सुतरां स्निग्धा स्नेहवती चासौ गम्भीरा च ताम् । जीमूतस्वनसंनिभाम् मेघध्वनिसदृशीम् ।

( ५८ ) श्रोष्यामीति । नैषधस्य वैदर्भि इति विस्पष्टां वाचं कदा श्रोष्यामीति सम्बन्धः । तां पूर्वमनुभूताम् । अनुभूतार्थकत्वाच्च न यच्छब्दापेक्षा ' प्रक्रान्तप्रसिद्धानुभूतार्थकस्तच्छब्दो यच्छब्द नापेक्षते ' इत्युक्तेः ।

(५९) आम्नायेति । अर्धमेतत्पूर्वपद्यान्वयि । आम्नायसारिणीं आम्नायस्य वेदस्य सार उत्कृष्टांशः अस्त्यस्यां तथाभूतां । वेदतुल्यामित्यर्थः । ऋद्धाम्

१ अरिमन्घोरे वने ( च ) २ वैदर्भ्येहीति ( क ) वैदर्भीत्येककथितां ( च )
३ आत्माभिधायिनीं ( क ) आत्मानुसारिणीं (च)

भीतामाश्वासय च मां नृपते धर्मवत्सल ॥ ५९
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ६०
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननशोभितम् ॥ ६१
वसिष्ठभृग्वत्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ६२
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः ।

सुसमृद्धा अदीनामिति यावत् । आत्माभिधायिनीमित्यादिस्तु पाठ उपेक्ष्यः समयेऽस्मिच्छद्मपदस्य दमयन्त्यात्मनि प्रयोगासम्भवात् । धर्मवत्सल धर्मे वत्सल स्निग्ध ( प्रणयिन् ) ' स्निग्धस्तु वत्सल ' इत्यमरः ।

( ६० ) इतीति । इति एवंप्रकारेण । पर्वत प्रत्येव प्रस्तुते वचने स्मृताद्युपस्थितत्वात्तमुद्दिश्योक्तिप्रधानैवेति गिरिश्रेष्ठमित्येवोक्तम् । पार्थिवनन्दिनी राजपुत्री । भूयः पुनरपि । ततस्तस्मात्प्रदेशात् ।

( ६१ ) सेति । त्रीन् अहोरात्रान् गत्वा अहोरात्रत्रयं यावदविच्छेदेन गमनं कृत्वेत्यर्थः । ' कालाध्वनोरत्यन्तसंयोगे ' इति द्वितीया । परमाङ्गना उत्कृष्टा स्त्री तापसारण्यं तापसानां तपस्विनां अरण्यं दिव्यकाननशोभितं दिव्यस्य दिवि भवस्य काननस्य नन्दनाख्यस्य वनस्येव शोभितं शोभा यस्य तथाभूतम् । दिव्यकाननमिव शोभितमिति वा ।

(६२) काननं विशिनष्टि वसिष्ठेत्यादि । वसिष्ठो भृगुरत्रिश्चेत्येते स्वनामख्याता मुनिप्रवराः । तत्तुल्यैः । नियतैर्नियमवद्भिः । नियमाश्च ' शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ' इति पतञ्जलिना प्रोक्ताः । संयताहारैः संयतो निगृहीतो योगविरुद्धपदार्थवर्जनेन स्वरूपसंकोचमापादित आहारो यैस्तथाभूतैः । अल्पाहारैर्वा ' अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः । जनसंगश्च लौल्यं च षड्भिर्योगो विनश्यति ॥ ' इत्युक्तेः । दमशौचसमन्वितैः दमस्य शौचेन शुद्धतया निर्दुष्टत्वेन समन्वितैः निर्दोषदमशालिभिरित्यर्थः । नह्यत्र दमशौचयोर्द्वन्द्वः । नियमान्तर्भूततया शौचस्य पुनर्वचने पौनरुक्त्यापत्तेरिति ।

( ६३ ) अब्भक्षैरिति । भक्षन्त इति भक्षाः भक्षयितारः । पचाद्यच् । अपां भक्षाः । ' सर्वं वाक्यं सावधारण ' मिति न्यायात् अपामेव भक्षितारो नान्यस्येत्यर्थः । एवमुत्तरत्रापि । पर्णाहारैः पर्णानि वृक्षेभ्यः स्वयं पतितानि आहारो भक्ष्यं येषां ते । ' स्वयं विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसः ' इति कालिदासः । स्वर्गमार्गदिदृक्षुभिः । स्वर्गस्य प्राप्त्युपाय साक्षात् द्रष्टुमिच्छद्भिः । वल्कलाजिनसंवीतैः वल्कलैर्वृक्षत्वचाभिः आजिनैर्मृगचर्मभिश्च संवीतैः

१ नास्तीदं कपुस्तके । २ दर्शितम् ( च )

वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ॥ ६३
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ।
नानामृगगणैर्जुष्टं नानामृगगणायुतम् ॥ ६४
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ।
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ॥ ६५
वर्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना ।
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ॥ ६६
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी ।
साऽभिवाद्य तपोवृद्धान्विनयावनता स्थिता ॥ ६७
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ।
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ॥ ६८

प्रावृतैः । संयतेन्द्रियैः यत यमः । भावे क्तः । सम्यक् यतेषु यमेषु इन्द्रियाणि येषां तैः । यमसक्तेन्द्रियैरित्यर्थः । अर्थान्तराङ्गीकारे तु जितेन्द्रियैरित्यनेन पौनरुक्त्यापत्तिः । यमाश्च 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा' इति पतञ्जलिनोक्ताः । उपशोभितमिति पूर्वस्मात्पद्यादनुकृष्यते ।

( ६४ ) तापसाध्युषितमिति । तापसाध्युषितं तापसैः कृतावासम् । अधिपूर्वाद्वसेर्निष्ठा । यजादित्वात्संप्रसारणम् । आश्रममण्डलं आश्रमप्रदेशम् । जुष्टं सेवितम् । जुषी सेवन इत्यतो निष्ठा । नानामृगगणायुतमित्यत्र शाखामृगगणायुतमित्युचितः पाठः । शाखामृगाश्च वानराः । तेषां गणानामयुतं यस्मिंस्तथाभूतम् ।

( ६५ ) तापसैरिति । सुद्विजानना शोभना द्विजा दन्ता आननं च यस्यास्तथाभूता । शोभना दन्ता यस्मिंस्तथाभूतमाननं यस्याः सा वा । समाश्वसत् सम्यगाश्वासं प्राप्तवती आङ्पूर्वाच्छ्वसेर्लङ् ।

( ६६ ) वर्चस्विनीति । वर्चस्विनी तेजस्विनी । 'अस्मायेत्यादिना' विनिः । सुप्रतिष्ठां सुजघनामिति नीलकण्ठः । शोभना प्रतिष्ठा स्थैर्यं यस्यास्तथाभूतेति तु युक्तम् । स्वसितायतलोचनेत्यत्र 'स्वञ्चितोद्यतगामिनी' ति चतुर्भुजः पठति । व्याचष्टे च स्वञ्चितं मन्दोपक्रमं यथा तथा गन्तुं शीलं यस्यास्तामिति । स्वञ्चितशब्दः पुनः मन्दत्वप्रतिपादने न समर्थः । आश्रमपदं आश्रमप्रदेशम् ।

( ६७ ) योषिदिति । योषित्सु स्त्रीषु रत्नं श्रेष्ठा । तपस्विनी अनुकम्पार्हा । तपोवृद्धान् तपसा वृद्धान् ज्येष्ठान् । तानृषीनित्यर्थः । अभिवाद्य नमस्कृत्य । अभिपूर्वको हि वादयतिः प्रणामे ।

( ६८ ) स्वागतमिति । ते दमयन्त्याः । प्रोक्ता औच्यन्त । यथान्यायं यथायोग्यं पूजा बहुमानम् ।

१ शाखा ( क. न. म. ) अतःपरं 'सा दृष्ट्वैवाश्रमपदं चारुमृगनिषेवितम् । शाखामृगगणैश्चैव तापसैश्च समन्वितम् ।' इत्यधिकं चपुस्तके २ नास्तीदमर्धं चपुस्तके ३ स्वर्चिष्मती सुप्रतिष्ठा स्वञ्चितोद्यतगामिनी ( च ) ४ मनस्विनी ( च ) ५ तापसोत्तमैः ( म. क. च. )

भीतामाश्वासय च मां नृपते धर्मवत्सल ॥ ५९
इति सा तं गिरिश्रेष्ठमुक्त्वा पार्थिवनन्दिनी ।
दमयन्ती ततो भूयो जगाम दिशमुत्तराम् ॥ ६०
सा गत्वा त्रीनहोरात्रान्ददर्श परमाङ्गना ।
तापसारण्यमतुलं दिव्यकाननशोभितम् ॥ ६१
वासिष्ठभृग्वात्रिसमैस्तापसैरुपशोभितम् ।
नियतैः संयताहारैर्दमशौचसमन्वितैः ॥ ६२
अब्भक्षैर्वायुभक्षैश्च पत्राहारैस्तथैव च ।
जितेन्द्रियैर्महाभागैः स्वर्गमार्गदिदृक्षुभिः ।

सुसमृद्धा अदीनामिति यावत् । आत्माभिधायिनीमित्यादिस्तु पाठ उपेक्ष्यः समयेऽस्मिचृद्धपदस्य दमयन्त्यात्मनि प्रयोगासमवात् । धर्मवत्सल धर्मे वत्सल स्निग्ध ( प्रणयिन् ) ' स्निग्धस्तु वत्सल ' इत्यमरः ।

( ६० ) इतीति । इति एवप्रकारेण । पर्वत प्रत्येव प्रस्तुते वचने स्मृतावुपस्थितत्वाचलमुद्दिश्योक्तिरप्रधानैवेति गिरिश्रेष्ठमित्येवोक्तम् । पार्थिवनन्दिनी राजपुत्री । भूयः पुनरपि । ततस्तस्मात्प्रदेशात् ।

( ६१ ) सेति । त्रीन् अहोरात्रान् गत्वा अहोरात्रत्रय यावदविच्छेदेन गमन कृत्वेत्यर्थः । ' कालाध्वनोरत्यन्तसयोग ' इति द्वितीया । परमाङ्गना उत्कृष्टा स्त्री तापसारण्य तापसाना तपस्विना अरण्य दिव्यकाननशोभित दिव्यस्य दिवि भवस्य काननस्य नन्दनाख्यस्य वनस्येव शोभित शोभा यस्य तथाभूतम् । दिव्यकाननमिव शोभितमिति वा ।

(६२) कानन विशिनष्टि वसिष्ठेत्यादिना वसिष्ठो भृगुरत्रिश्चेत्येते स्वनामख्याता मुनिप्रवराः । तत्तुल्यैः । नियतैर्नियमवद्भिः । नियमाश्च ' शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति पतञ्जलिना प्रोक्ताः । सयताहारैः सयतो निगृहीतो योगविरुद्धपदार्थवर्जनेन स्वरूपसकोचमापादित आहारो यैस्तथाभूतैः । अल्पाहारैर्वा ' अत्याहारः प्रयासश्च प्रजल्पो नियमग्रहः । जनसगश्च लौल्य च षड्भिर्योगो विनश्यति ॥ ' इत्युक्तेः । दमशौचसमन्वितैः दमस्य शौचेन शुद्धतया निर्दुष्टत्वेन समन्वितैः निर्दोषदमशालिभिरित्यर्थः । नह्यत्र दमशौचयोर्द्वन्द्वः । नियमान्तर्भूततया शौचस्य पुनर्वचने पौनरुक्त्यापत्तेरिति ।

( ६३ ) अब्भक्षैरिति । भक्षन्त इति भक्षाः भक्षयितारः । पचाद्यच् । अपा भक्षाः । ' सर्वं वाक्य सावधारण ' मिति न्यायात् अपामेव भक्षितारो नान्यस्येत्यर्थः । एवमुत्तरत्रापि । पर्णाहारैः पर्णानि वृक्षेभ्यः स्वय पतितानि आहारो भक्ष्य येषा ते । 'स्वय विशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसः ' इति कालिदासः । स्वर्गमार्गदिदृक्षुभिः । स्वर्गस्य प्राप्त्युपाय साक्षात् द्रष्टुमिच्छद्भिः । वल्कलाजिनसवीतैः वल्कलैर्वृक्षत्वचाभिः आजिनैर्मृगचर्मभिश्च सवीतैः

१ नास्तीदं कपुस्तके । २ दर्शितम् ( च )

वल्कलाजिनसंवीतैर्मुनिभिः संयतेन्द्रियैः ॥ ६३
तापसाध्युषितं रम्यं ददर्शाश्रममण्डलम् ।
नानामृगगणैर्जुष्टं नानामृगगणायुतम् ॥ ६४
तापसैः समुपेतं च सा दृष्ट्वैव समाश्वसत् ।
सुभ्रूः सुकेशी सुश्रोणी सुकुचा सुद्विजानना ॥ ६५
वर्चस्विनी सुप्रतिष्ठा स्वसितायतलोचना ।
सा विवेशाश्रमपदं वीरसेनसुतप्रिया ॥ ६६
योषिद्रत्नं महाभागा दमयन्ती तपस्विनी ।
साऽभिवाद्य तपोवृद्धान्विनयावनता स्थिता ॥ ६७
स्वागतं त इति प्रोक्ता तैः सर्वैस्तापसैश्च सा ।
पूजां चास्या यथान्यायं कृत्वा तत्र तपोधनाः ॥ ६८

प्रावृतैः । संयतेन्द्रियैः यत यमः । भावे क्तः । सम्यक् यतेषु यमेषु इन्द्रियाणि येषां तैः । यमसक्तेन्द्रियैरित्यर्थः । अर्थान्तराङ्गीकारे तु जितेन्द्रियैरित्यनेन पौनरुक्त्यापत्तिः । यमाश्च 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमा' इति पतञ्जलिनोक्ताः । उपशोभितमिति पूर्वस्मात्पद्यादनुकृष्यते ।

( ६४ ) तापसाध्युषितमिति । तापसाध्युषितं तापसैः कृतावासम् । अधिपूर्वाद्वसेर्निष्ठा । यजादित्वात्सम्प्रसारणम् । आश्रममण्डलं आश्रमप्रदेशम् । जुष्टं सेवितम् । जुषी सेवने इत्यतो निष्ठा । नानामृगगणायुतमित्यत्र शाखामृगगणायुतमित्युचितः पाठः । शाखामृगाश्च वानराः । तेषां गणानामयुतं यस्मिंस्तथाभूतम् ।

( ६५ ) तापसैरिति । सुद्विजानना शोभना द्विजा दन्ता आननं च यस्या-स्तथाभूता । शोभना दन्ता यस्मिंस्तथाभूतमाननं यस्याः सा वा । समाश्वसत् सम्यगाश्वासं प्राप्तवती आङ्पूर्वाच्छ्वसेर्लङ् ।

( ६६ ) वर्चस्विनीति । वर्चस्विनी तेजस्विनी । 'अस्मायेत्यादिना' विनिः । सुप्रतिष्ठां सुजघनामिति नीलकण्ठः । शोभना प्रतिष्ठा स्थैर्यं यस्यास्तथाभूतेति तु युक्तम् । स्वसितायतलोचनेत्यत्र 'स्वञ्चितोऽयतगामिनी' ति चतुर्भुजः पठति । व्याचष्टे च स्वञ्चितं मन्दोपक्रमं यथा तथा गन्तुं शीलं यस्यास्तामिति । स्वञ्चितशब्दः पुनः मन्दत्वप्रतिपादने न समर्थः । आश्रमपदं आश्रमप्रदेशम् ।

( ६७ ) योषिदिति । योषित्सु स्त्रीषु रत्नं श्रेष्ठा । तपस्विनी अनुकम्पार्हा । तपोवृद्धान् तपसा वृद्धान् ज्येष्ठान् । तानृषीनित्यर्थः । अभिवाद्य नमस्कृत्य । अभिपूर्वको हि वादयतिः प्रणामे ।

( ६८ ) स्वागतमिति । ते दमयन्त्याः । प्रोक्ता औच्यन्त । यथान्यायं यथायोग्यं पूजा बहुमानम् ।

१ शाखा ( क. म. ग. ) अतःपरं सा दृष्ट्वैवाश्रमपदं चारुमृगनिषेवितम् । शाखामृगगणैश्चैव तापसैश्च समन्वितम् । ' इत्यधिकं चपुस्तके २ नारतादमर्थं चपुस्तके ३ स्वधिष्मती सुप्रतिष्ठा स्वञ्चितायतगामिनी ( च ) ४ मनस्विनी ( च ) ५ तापसोत्तमैः ( म. क. घ. )

आस्यतामित्यथोचुस्ते ब्रूहि किं करवाम हे ।
तानुवाच वरारोहा कच्चिद्भगवतामिह ॥ ६९
तपःस्वग्निषु धर्मेषु मृगपक्षिषु चानघाः ।
कुशलं वो महाभागाः स्वधर्माचरणेषु च ॥ ७०
तैरुक्ता कुशलं भद्रे सर्वत्रेति यशस्विनी ।
ब्रूहि सर्वानवद्याङ्गि का त्वं किं च चिकीर्षसि ॥ ७१
दृष्ट्वैव ते परं रूपं द्युतिं च परमामिह ।
विस्मयो नः समुत्पन्नः समाश्वसिहि मा शुचः ॥ ७२
अस्यारण्यस्य देवी त्वमुताहोऽस्य महीभृतः ।
अस्याश्च नद्याः कल्याणि वद सत्यमनिन्दिते ॥ ७३
साऽब्रवीत्तानृषीन्नाहमरण्यस्यास्य देवता ।
न चाप्यस्य गिरेर्विप्रा नैव नद्याश्च देवता ॥ ७४
मानुषीं मां विजानीत यूयं सर्वे तपोधनाः ।
विस्तरेणाभिधास्यामि तन्मे शृणुत सर्वशः ॥ ७५
विदर्भेषु महीपालो भीमो नाम महीपतिः ।
तस्य मां तनयां सर्वे जानीत द्विजसत्तमाः ॥ ७६

---

( ६९ ) आस्यतामिति । अथ ते, हे इति सम्बुद्धिरियं दमयन्त्याः । आस्यतां उपविश्यताम् । आस्तेः कर्मणि लोट् । त्वयेति शेषः । किं करवाम कुर्याम । करोतेर्लोट् । तानित्युत्तरपद्यान्वयि ।

( ७० ) तपसीति । तपसि तपोविषये । एवमुत्तरत्रापि वैषयिक एवाधारे सप्तमी । कच्चिद्भगवतां कुशलम् इति संबन्धः ।

( ७१ ) तैरिति । सर्वानवद्याङ्गि सर्वाणि अनवद्यानि दूषणानर्हाण्यङ्गानि यस्यास्तथाभूते । चिकीर्षसि कर्तुमिच्छसि । करोतेः सन् ।

( ७२ ) दृष्ट्वेति । परं श्रेष्ठ, नः अस्माकं, विस्मय आश्चर्यं समुत्पन्नः जातः। लोकातिशायित्वात्कान्त्यादीनामिति भावः । मा शुचः शोकं मा कार्षीः । ईशुचिर् पूतीभाव इत्यतो दैवादिकात् 'माङि लुङ्' इति लुङ् । इरित्वादङ् । धातूनामनेकार्थत्वाच्छोके वृत्तिः ।

( ७३ ) अस्येति । त्वं अस्य अरण्यस्य देवी उताहो अथवा अस्य महीभृतः पर्वतस्य । उताहो अस्येति प्रगृह्यत्वाभाव आर्षः । अस्याश्चेति चकारो वार्थः । च अथवेत्यर्थः देवीति प्रश्ने काकुः ।

( ७५ ) मानुषीमिति । हे तपोधनाः। यूयं सर्वे कर्तारः। विजानीत अवगच्छत। विरत्र धात्वर्थानुवर्ती । अभिधास्यामि वक्ष्यामि मे वृत्तमिति शेषः। सर्वशः सर्वम्।

( ७६ ) विदर्भेष्विति । महीपालः महीं पालयति तथाभूतः । महीपतिः राजा । अत्र चैको यौगिकः परश्च रूढः शब्दः। अन्यथा पौनरुक्त्यापत्तेः । जानीत यूयमिति शेषः ।

निषधाधिपतिर्धीमान्नलो नाम महायशाः ।
वीरः संग्रामाजिद्विद्वान्मम भर्ता विशांपतिः ॥ ७७
देवताभ्यर्चनपरो द्विजातिजनवत्सलः ।
गोप्ता निषधवंशस्य महातेजा महाबलः ॥ ७८
सत्यवान्धर्मवित्प्राज्ञः सत्यसंधोऽरिमर्दनः ।
ब्रह्मण्यो दैवतपरः श्रीमान्परपुरंजयः ॥ ७९
नलो नाम नृपश्रेष्ठो देवराजसमद्युतिः ।
मम भर्ता विशालाक्षः पूर्णेन्दुवदनोऽरिहा ॥ ८०
आहर्ता क्रतुमुख्यानां वेदवेदाङ्गपारगः ।
सपत्नानां मृधे हन्ता रविसोमसमप्रभः ॥ ८१
स कैश्चिन्निकृतिप्रज्ञैरनार्यैरकृतात्मभिः ।
आहूय पृथिवीपालः सत्यधर्मपरायणः ॥ ८२

---

( ७७ ) निषधेति । संग्रामाजित् संग्रामेषु युद्धेषु जयति उत्कर्षं प्राप्नोति तथाभूतः । विशांपतिः नरपतिः राजा नलः मम भर्ता ।

( ७८ ) भर्तारमुपवर्णयति द्वाभ्याम् । देवतेति । देवतानामभ्यर्चनमेव परं कार्यान्तरापेक्षया प्रधानं यस्य तथाभूतः । द्विजातिजनवत्सलो ब्राह्मणजनप्रणयी । द्वे जाती जन्मनी येषां ते द्विजातयो ब्राह्मणाः । ' मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनात् । ' इत्युक्तेर्ब्राह्मणानां द्विजन्मता । एष च शब्दो वर्णत्रयसाधारणोऽपि रूढ्या ब्राह्मणेष्वेव प्रयुज्यते । गोप्ता रक्षिता । दैवतपरः दैवतानि पराणि इतरापेक्षया प्रधानानि यस्य स । परित्यज्य कार्यान्तराणि देवानेव सेवमान इत्यर्थः । परपुरंजयः परेषां शत्रूणां पुराणि नगराणि जयति पराभूय गृह्णाति तथाभूतः । संज्ञायां भृतॄवृजीत्यादिना संज्ञायां सिद्धः पुरंजयशब्दो गौण्या लक्षणयाऽन्यत्रापि प्रयुज्यते ।

( ८० ) नल इति । देवराजसमद्युतिः इन्द्रतुल्यकान्तिः । अरिहा अरीन् हन्ति तथाभूतः । हनः क्विप् ।

( ८१ ) आहर्तेति । क्रतुमुख्यानां यज्ञेषु प्रधानानां आहर्ता कर्ता । वेदवेदाङ्गपारगः वेदेषु वेदानामङ्गेषु च पूर्वमुक्तेषु पारगः पारगतः । मृधे युद्धे सपत्नानां शत्रूणां, ते हि सहैकस्मिन्नर्थे पतन्तीति कल्पद्रुमः । सपत्नीव व्रियमाणः सपत्न इति तु भानुदीक्षितः । तन्मते ध्यन् सपत्न इति निर्देशाददन्तत्वम् ।

( ८२ ) स इति । निकृतिप्रज्ञैः शाठ्यकर्मणि पण्डितैः । अनार्यैः असाधुभिः । ' आर्यः साधौ सौविदल्ले ' इति विश्वः । तल्लक्षणं च ' कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य ( वै+आर्य ) इति स्मृतः । ' इति । अकृतात्मभिः कृतं कार्यं, भावे क्तः । अकृतेष्वकार्येष्वात्मा मनो येषां तैः । उत्तरपद्येन सबद्धं पद्यमिदम् । अतस्तत्रापि यानि तृतीयान्तानि तानि कैश्चिदिति पदेन संबध्यन्त इति बोध्यम् ।

देवने कुशलैर्जिह्मैर्जितो राज्यं वसूनि च।
तस्य मामवगच्छध्वं भार्यां राजर्षभस्य वै ॥ ८३
दमयन्तीति विख्यातां भर्तुर्दर्शनलालसाम् ।
सा वनानि गिरींश्चैव सरांसि सरितस्तथा ॥ ८४
पल्वलानि च सर्वाणि तथाऽरण्यानि सर्वशः ।
अन्वेषमाणा भर्तारं नलं रणविशारदम् ॥ ८५
महात्मानं कृतास्त्रं च विचरामीह दुःखिता ।
कच्चिद्भगवतां रम्यं तपोवनमिदं नृपः ॥ ८६
भवेत्प्राप्तो नलो नाम निषधानां जनाधिपः ।
यत्कृतेऽहमिदं दुःखं प्रपन्ना भृशदारुणम् ॥ ८७
वनं प्रतिभयं घोरं शार्दूलमृगसेवितम् ।
यदि कैश्चिदहोरात्रैर्न द्रक्ष्यामि नलं नृपम् ॥ ८८

---

( ८३ ) देवन इति । देवने द्यूतकर्मणि । जिह्मैः कुटिलैः । 'तथापि जिह्मः स भवज्जिगीषया' इति भारविः। राज्यं वसूनि द्रव्याणि च जितः । जयतेर्द्विकर्मकत्वात् राज्यस्य वसूना च नलस्य च (तच्छब्दार्थस्य) कर्मत्वम् । अवगच्छध्वम् अवगच्छत जानीत। अवपूर्वो हि गमिर्ज्ञाने। आर्षमात्मनेपदम्। राजर्षभस्य राजश्रेष्ठस्य । अत.परमूननवतितम पद्य यावदुत्तरोत्तरसंबद्धानि पद्यानि ।

( ८४ ) दमयन्तीति । विख्यातां प्रसिद्धाम् । दर्शनलालसाम् दर्शने लालसा आत्यन्तिकी इच्छा यस्यास्तथाभूताम् । सापेक्ष वेऽपि गमकत्वात्समासः। 'अभिलाषश्च तर्षश्च सोऽत्यर्थं लालसा' इत्यमर.। लालसेति । लसतेर्धातूनामनेकार्थत्वादीप्साया वर्तमानाद्यङन्तादच्। यप् च । सा पूर्वोक्तवृत्ता अहम्।

( ८५ ) पल्वलानि । पल्वलानीति अल्पानि सरांसि । 'पल्वलं चाल्पसर' इत्यमरः । सर्वश' सर्वाणि । रण.विशारद युद्धकर्मणि विद्वांस प्रगल्भ वा । 'विद्वत्सुप्रगल्भौ विशारदौ' इत्यमरः ।

( ८६ ) महात्मानमिति । कृतास्त्र अभ्यस्तास्त्रम् । अन्वेषमाणेति पूर्वेण सबन्धः । कच्चिदिति प्रश्ने । तपोवनमित्यस्य प्राप्त इत्युत्तरेण सबन्ध ।

( ८७ ) भवेदिति । जनाधिपो राजा । ब्रह्मन् ब्राह्मणाः । आर्षमेकवचनम् । प्रपन्ना प्राप्ता । भृशदारुण भृशा' सख्यातिगामिनो दारुणा भयानका भाना यस्मिंस्तथाभूतम् । भृशशब्दस्य द्रव्यवृत्तितया पुस्त्वम् । 'क्लीबे शीघ्राद्यसत्वे स्यात्त्रिष्वेषां सत्वगामि यत्' इत्यमरात् ।

( ८८ ) वनमिति । प्रतिभय स्वरूपत एव भयङ्करम् । घोर घुरन्ति नदन्ति हिंस्रपशुप्रभृतयो यस्मिंस्तत् । घुर भीमार्थशब्दयोरित्यतो घञ् । घोरत्वे हेतुमाह शार्दूलमृगसेवितमिति । यदीत्युत्तरान्वयपर्यमिदम् । यदि कैश्चिदहोरात्रै. साधनभूतै. ।

आत्मानं श्रेयसा योक्ष्ये देहस्यास्य विमोक्षणात् ।
को नु मे जीवितेनार्थस्तमृते पुरुषर्षभम् ॥ ८९
कथं भविष्याम्यद्याहं भर्तृशोकाभिपीडिता ।
तथा विलपतीमेकामरण्ये भीमनन्दिनीम् ॥ ९०
दमयन्तीमथोचुस्ते तापसाः सत्यदर्शिनः ।
उदर्कस्तव कल्याणि कल्याणो भविता शुभे ॥ ९१
वयं पश्यामस्तपसा क्षिप्रं द्रक्ष्यसि नैषधम् ।
निषधानामधिपतिं नलं रिपुनिपातिनम् ॥ ९२
भैमि धर्मभृतां श्रेष्ठं द्रक्ष्यसे विगतज्वरम् ।
विमुक्तं सर्वपापेभ्यः सर्वरत्नसमन्वितम् ॥ ९३

(८९) आत्मानमिति । तर्हीत्यध्याह्रियते यदिशब्दबलात् । अस्य भवता पुरो वर्तमानस्य देहस्य मदीयस्य शरीरस्य विमोक्षणात् त्यागात् । त्याग विधाय । ल्यब्लोपे पञ्चमी । आत्मानं स्व श्रेयसा कल्याणेन योक्ष्ये योजयिष्यामि। युजेरन्तर्भावितण्यर्थाल्लृट् । असति पत्यौ जीवितस्य निरर्थकतया त्यक्त्वेद श्रेयः सपादयिष्यामीति भाव । कुतो जीवितहानिरित्यत्राह क इति । हि यतः त पुरुषर्षभ नरश्रेष्ठ नलमृते विना मे अर्थः प्रयोजन किम् । न कश्चिदर्थ इति भावः । तमृते इति 'ततोऽन्यत्रापि दृश्यते' इति द्वितीया । 'ऋते देवदत्तामिति द्वितीयापीष्टा' इति 'दिगीतरर्तेऽन्यैश्च' ति कलापसूत्रे दुर्गः । विशेषतस्तु प्रागेव प्रपञ्चितम् ।

(९०) कथमिति । भर्त्रिति भर्तु सबन्धिना शोकेन सर्वतः पीडिता । कथ भविष्यामि अवस्थास्ये । नैव मयाऽवस्थातु शक्यमित्यर्थः । तथा तेन प्रकारेण । विलपतीं विलाप कुर्वतीम् । आगमशास्त्रस्यानित्यत्वान्न नुम् । भीमनन्दिनीमित्युत्तरेण सबध्यते ।

(९१) दमयन्तीमिति । सत्यदर्शिन सत्यं द्रष्टु ज्ञातु शीलं येषां ते । सर्वे दृश्यर्था ज्ञानार्था इत्युक्ते । ताच्छील्ये णिनि । वचनमाह उदर्क इति उदर्कः भावि फलम् । 'उदर्क एष्यत्कालीनफले' इति मेदिनी । कल्याणः शुभः भविता । भवतेर्लुट् । हे शुभे क्षेमवति । 'वाच्यवत्क्षेमशालिनि ।' इति शुभशब्दार्थेषु मेदिनी । एतेन क्षेमप्राप्तेरवश्यभाविता द्योत्यते । एवं कल्याणीत्यपि । कल्याणी कल्याणवती ।

(९२) वयमिति । तपसा साधनभूतेन पश्यामो जानीमः । प्रभवन्ति हि तपस्विनो भूत भवद्भावि च विज्ञातुमिति । ज्ञायमानमर्थमाह क्षिप्रमिति । इतीति शेषः । इति पश्याम इति सबन्ध । रिपुनिपातिन रिपून्निपातयितु विनाशयितुमित्यर्थ शील यस्य तथाभूतम् ।

(९३) भैमीति । धर्मभृता धर्म बिभ्रति पुष्णन्ति तेषा मध्ये । भृञः क्विप् । निर्धारणे षष्ठी । विगतज्वर प्रशान्तपीडम् । द्रक्ष्यस इत्यार्षमात्मनेपदम् ।

१ बादिन ( ब )

तदेव नगरं श्रेष्ठं प्रशासतमरिन्दमम् ।
द्विषतां भयकर्तारं सुहृदां शोकनाशनम् ॥ ९४
पतिं द्रक्ष्यसि कल्याणि कल्याणाभिजनं नृपम् ।
एवमुक्त्वा नलस्येष्टां महिषीं पार्थिवात्मजाम् ॥ ९५
अन्तर्हितास्तापसास्ते साग्निहोत्राश्रमास्तथा ।
सा दृष्ट्वा महदाश्चर्यं विस्मिता ह्यभवत्तदा ॥ ९६
दमयन्त्यनवद्याङ्गी वीरसेननृपस्नुषा ।
किंनु स्वप्नो मया दृष्टः कोऽयं विधिरिहाभवत् ॥ ९७
क्व नु ते तापसाः सर्वे क्व तदाश्रममण्डलम् ।
क्व सा पुण्यजला[1] रम्या नदी द्विजनिषेविता ॥ ९८

---

(९४) तदेवेति । प्रशासतमिति । अत्र प्रशासन्तमित्ययुक्तः पाठः । 'जक्षित्यादयः षडि' ति शास्तेरभ्यस्ततया 'नाभ्यस्ताच्छतु' रिति नुमः प्रतिषेधात् । पद्यमिदमुत्तरपद्यान्वयि ।

(९५) पतिमिति । कल्याणाभिजनं कल्याणोऽभिजनः कुलं यस्य तथाभूतम् । 'कुलान्यभिजनान्वयौ' इत्यमरः । एवमित्यर्धमुत्तरपद्यान्वयि । इष्टां प्रियाम् । 'इष्टमाशंसितेऽपि स्यात्पूजिते प्रेयसि त्रिषु' इति मेदिनी । महिषीं पट्टराज्ञीम् ।

(९६) तापसेति । तापसा अन्तर्हिता इति च्छेदः । सन्धिः पुनरार्षः । साग्निहोत्राश्रमाः अग्निहोत्राणि तत्सम्बन्धिनोऽग्नय इति यावत् तानि च आश्रमाश्च तैः सह वर्तमाना । अन्तर्हिता अदर्शनं गताः । आश्चर्यं आश्चर्यहेतुः तददर्शनम् । हिः पादपूरणेऽवधारणे वा । विस्मिता आश्चर्यं प्राप्ता । विपूर्वको हि स्मयतिराश्चर्ये ।

(९७) दमयन्तीति । वीरसेननृपस्नुषेत्यतः परं 'चिन्तयामास वैदर्भी किमेतद्दृष्टवत्यहम् ।' इत्यधिकं पुस्तके । आवश्यकं चैतदर्धम् । चिन्तनस्वरूपमाह किमित्यादिना द्विजनिषेवितेत्यन्तेन । किंन्वित्यव्ययद्वयं वितर्के । 'किंनु प्रश्नवितर्कयोः' इति मेदिनी । स्वप्नः प्रसुप्तेन समनुभूयमानं वृत्तान्तादि । विधिः प्रकारः ।

(९८) क्वेति । नुर्वितर्के । तापसाः क्व नु गता इत्यध्याहियते । तदनुभूतम् आश्रममण्डलम् आश्रमप्रदेशः । अनुभूतार्थकत्वादेवात्र यच्छब्दनिरपेक्षता तच्छब्दस्य । द्विजनिषेविता द्विजैर्हंसकारण्डवादिभिः पक्षिभिर्ब्राह्मणैर्वा निषेविता । अतः परं पद्यमेकमधिकं प्रक्षिप्तत्वादनावश्यकत्वाच्च न व्याख्यायते[3] ।

---

1 पतिमेष्यसि ( क ) 2 अतः परं 'चिन्तयामास वैदर्भी किमेतद्दृष्टवत्यहम् ।' इत्यधिकं पुस्तके । 3 'क्व नु ते द्रुमाः हृद्याः फलपुष्पोपशोभिताः ।' इत्यतः परमधिकं पञ्चकनमपुस्तकेषु । तत परमपि च ' इत्येवं नरशार्दूल विस्मिता कमलेक्षणा । ' इत्यधिकं पुस्तके

ध्यात्वा चिरं भीमसुता दमयन्ती शुचिस्मिता ।
भर्तृशोकपरा दीना विवर्णवदनाऽभवत् ॥ ९९
सा गत्वाऽथापरां भूमिं बाष्पसंदिग्धया गिरा ।
विललापाश्रुपूर्णाक्षी दृष्ट्वाऽशोकतरुं ततः ॥ १००
उपगम्य तरुश्रेष्ठमशोकं पुष्पितं वने ।
पल्लवापीडितं हृद्यं विहङ्गैरनुनादितम् ॥ १०१
अहो बतायमगमः श्रीमानस्मिन्वनान्तरे।
आपीडैर्बहुभिर्भाति श्रीमान्पर्वतराडिव ॥ १०२
विशोकां कुरु मां क्षिप्रमशोक प्रियदर्शन ।

(९९) ध्यात्वेति। चिरं बहुकालपर्यन्तं ध्यात्वा विचार्य। विवर्णवदना विवर्णं कान्तिशून्यं वदनं यस्यास्तथाविधा। तत्र हेतुर्भर्तृशोकपरेति ।

(१००) सेति। परां भूमिं अन्यं प्रदेशम् । बाष्पसन्दिग्धया बाष्पेण कण्ठस्य निरुद्धत्वादस्पष्टया गिरा वाचा विललाप । ततः अशोकतरुं दृष्ट्वेत्यस्योत्तरेण सबन्धः । यद्वा ततः। तस्या भूमौ अशोकतरुं दृष्ट्वा विललाप विलापं कृतवती । पत्युरभावादिति भावः । अशोको हि पञ्चस्वन्यतमः शरो मदनस्य । तत एव च तदालोकनस्य कामोद्दीपकतेति ।

(१०१) उपगम्येति। पुष्पितं विकसितं पुष्पाणां विकसितत्वेन तरौ विकसितत्वोपचारः। पुष्प विकसन इत्यतो निष्ठा । यद्वा सजातानि पुष्पाण्यस्मिंस्तथाभूतम्। तारकादित्वादितच्। पल्लवापीडितं पल्लवानामापीडा गुच्छाः सजाता अस्मिंस्तथाभूतम् । इतच् पूर्ववत्। हृद्यं हृदयस्य प्रियं मनोहरमित्यर्थः। 'हृदयस्य प्रिय' इति यत्। 'हृदयस्य हृल्लेखे'त्यादिना हृदादेशः । विहङ्गैः पक्षिभिः अनुनादितं आत्मनः कूजितैः सशब्दतां नीतम्। इह खलु भवितव्यमेवातः परं केनापि पद्येन। अत्र हि सावशेषं वाक्यम् । उपगमपरभाविन्याः क्रियाया अनिर्देशात्। नैव पुनरेतत्कस्मिन्नपि पुस्तके स्वदृष्टम्। उवाचेत्यध्याहार एव वा स्वीकरणीयः । वचनस्यैवोत्तरत्रोपन्यासात् ।

(१०२) अहो इति । अहोबतेत्याश्चर्ये । श्रीमान् शोभासंपन्नः । अगमो वृक्षः। न ह्यसौ गच्छतीति। गमेः पचाद्यच्। 'पलाशी द्रुद्रुमागमा' इत्यमरः। आपीडैः कुसुमगुच्छैः विशिष्टः पर्वतराट् पर्वतस्य राजेवेत्युत्प्रेक्षा। भाति भानविषयो भवति । अनेकापीडविशिष्टत्वरूपसामान्यधर्मनिर्देशादुपमा वा। आपीडैः पुष्पफलादिरूपैरलङ्कारैरिति नीलकण्ठः। अतःपरमपि 'पृच्छामि त्वावदेनामि' त्याद्यर्थकमावश्यकं वाक्यं, नैव पुनरेतद्दृश्यते क्वापि ।

(१०३) विशोकामिति। प्रियदर्शन प्रियं दर्शनं यस्य तथाभूत। मनोहरेत्यर्थः। अशोकेति विशोककरणे सामर्थ्यमभिद्योतयति। नास्ति शोको यस्मिन्स

१ द्रविण ( च )

वीतशोकभयाबाधं कच्चित्त्वं दृष्टवान्नृपम् ॥ १०३
नलं नामारिदमनं दमयन्त्याः प्रियं पतिम् ।
निषधानामधिपतिं दृष्टवानसि मे प्रियम् ?॥ १०४
एकवस्त्रार्धसंवीतं सुकुमारतनुत्वचम् ।
व्यसनेनार्दितं वीरमरण्यमिदमागतम् ॥ १०५
यथा विशोका गच्छेयमशोकनग तत्कुरु ।
सत्यनामा भवाशोक अशोकः शोकनाशनः ॥ १०६
एवं साऽशोकवृक्षं तमार्ता वै परिगम्य ह ।
जगाम दारुणतरं देशं भैमी वराङ्गना ॥ १०७
सा ददर्श नगान्नैकान्नैकाश्च सरितस्तथा ।
नैकांश्च पर्वतान्रम्यान्नैकांश्च मृगपक्षिण. ॥ १०८
कन्दरांश्च नितम्बांश्च नदीश्चाद्भुतदर्शनाः ।

अशोको भवतीति। विशोका विगतः शोको यस्यास्तथाभूताम्। वीतेति। वीता विगता शोकभययोराबाधा पीडा यस्मात्तथाभूतम् । भयशोकविवर्जितमित्यर्थः । दृष्टवानित्यस्योत्तरपद्यपूर्वार्धेन सबन्धः ।

(१०४) नलमिति । दमयन्त्या मम । नल नाम नृपमिति पूर्वतः सबध्यते। दृष्टवान् असीति शेषः। कच्चिदिति प्रश्ने। उत्तरार्धस्तु पृथग्वाक्यमिति मे प्रियमिति न पौनरुक्त्याय। असीति प्रश्ने काकुः। प्रिय पतिमित्यर्थः ।

( १०५ ) प्रिय विशिनष्टि एकवस्त्रेति। एकवस्त्रार्धसवीत एकेन वस्त्रार्धेन सवीत कृतावरणम्। सुकुमारतनुत्वचम् सुकुमारा मृदुला तनोः शरीरस्य त्वक् चर्म यस्य तथाभूतम्। व्यसनेन दुःखेन अर्दित पीडितम्।

( १०६ ) यथेति। विशोका सती गच्छेय गृह प्रतीत्यर्थात्। अशोकनग अशोकतरो । न गच्छतीति नगः। 'नगोऽप्राणिष्वन्यतरस्यामि' ति निपातनात्साधुः। 'शैलवृक्षौ नगावगौ' इत्यमरः। सत्यनामा सत्य यथार्थ नाम यस्य तथाभूत'। सत्यत्वस्य स्वरूप प्रदर्शयितु नामार्थमाह अशोक इति। अशोक. किल शोकनाशनः शोकस्य नाशयिता भवतीति शेषः। नास्ति शोको यस्मादितिव्युत्पत्तेरिति भाव। अन्यथा धत्तूरस्येव कनक इति विसदृशमेव तेऽशोक इति नामेति भावः। तृतीयतुर्ययोः पादयोः सन्धिरार्षः।

( १०७ ) एवमिति। आर्ता पीडिता सा वराङ्गना श्रेष्ठा स्त्री दमयन्ती अशोकवृक्षं परिगम्य भर्तृप्रवृत्तिविज्ञानायोपगम्य तदनन्तर दारुणतर पूर्वस्मादधिकभयङ्कर देश जगाम।

( १०८ ) सेति। नैकाम् अनेकान्। सुप्सुपेति नशब्देन समासः। मृगपक्षिणः मृगान्पक्षिणश्च ददर्श।

( १०९ ) कन्दरानिति। कन्दरान् दरीः। 'दरी तु कन्दरो वा स्त्री' इत्यमरः। अद्भुतदर्शना आश्चर्यजनकाकारा महत्त्वादिविशिष्टत्वात्। पूर्वत्र

१ त्वमत. ( च ) २ मम शोकविनाशनः ( क. च. )

ददर्श सा भीमसुता पतिमन्वेषती तदा ॥ १०९
गत्वा प्रकृष्टमध्वानं दमयन्ती शुचिस्मिता ।
ददर्शाथ महासार्थं हस्त्यश्वरथसंकुलम् ॥ ११०
उत्तरन्तं नदीं रम्यां प्रसन्नसलिलां शुभाम् ।
सुशान्ततोयां विस्तीर्णां ह्रदिनीं वेतसैर्वृताम् ॥ १११
प्रोद्घुष्टां क्रौञ्चकुररैश्चक्रवाकोपकूजिताम् ।
कूर्मग्राहझषाकीर्णां विपुलद्वीपशोभिताम् ॥ ११२
सा दृष्ट्वैव महासार्थं नलपत्नी यशस्विनी ।
उपसर्प्य वरारोहा जनमध्यं विवेश ह ॥ ११३

---

सरित्सामान्यवचनादत्र च महानदीवच्छन्नात्र पौनरुक्त्यमिति बोध्यम् । नितम्बान् पर्वतकटकान् । 'कटकोऽस्त्री नितम्बोऽद्रे' रित्यमर । अन्वेषती अन्विच्छन्ती।एषृगताविव्यतोऽनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यतया परस्मैपदे लटः शतरि आगमशास्त्रस्यानित्यत्वान्नुमभाव ।

( ११० ) गत्वेति । प्रकृष्ट द्राघीयासमित्यर्थं । गत्वा अतिक्रम्य । हस्त्यश्वरथसकुल हस्तिभिरश्वै रथैश्च सकुल व्याप्तम् । महासार्थं महान्त वणिक्समूहम् । 'सार्थो वणिग्गणे वृन्दे' इति हैम । 'आन्महत समानाधिकरणजातीययो' रिति महत आत्त्वम् ।

( १११ ) महासार्थं विशिनष्टि उत्तरन्तामिति । प्रसन्नसलिला स्वच्छजलाम् । प्रसादो हि कालुष्याभाव इति । सुशान्ततोया सुशान्त सुतरामेवाक्षुब्ध तोय यस्यास्तथाभूताम् । एतेन च गाम्भीर्यातिशय सरितो द्योत्यते । विस्तीर्णा विशालाम् । ह्रदिनी ह्रदा अगाधजलप्रदेशा सन्त्यस्या तथाभूताम् ।

( ११२ ) पुनरपि नदीं विशेषयति प्रोद्घुष्टामिति । क्रौञ्चकुररैः क्रौञ्चाः 'करकुचा' इति महाराष्ट्र्या ख्याता , कुरराश्च उत्क्रोशापरपर्यायाः कुररीतिख्याताः पक्षिविशेषा येषा किल विकलाना नादो नारीणामाक्रन्दितध्वानिमनुहरति । अत एवाह श्रीमान् भवभूतिर्मालतीमाधवे 'नादस्तावद्विकलकुररीकूजितस्निग्धतार'' इति । तैश्च प्रोद्घुष्टा नादिताम् चक्रवाकैः स्वनामख्यातैः पक्षिविशेषैः उपकूजिता शब्दयुक्तत्व नीताम् । कूर्मेति । कूर्मैः ग्राहैर्मकरैः झषैर्मत्स्यैश्च आकीर्णा व्याप्ताम् । विपुलद्वीपशोभिताम् विपुलैर्विस्तीर्णैः द्वीपैर्जलमध्यवर्तिभिः स्थानै शोभिताम् । द्विर्गता आपोऽत्र द्वीपम् । 'ऋक्पूरब्धू.पथामानक्ष' इत्यः समासान्त । 'द्व्यन्तरुपसर्गेभ्योऽप ईत् ।' इतीत् च ।

( ११३ ) सेति । उपसर्प्य समीप गत्वा । सृपेरुपपूर्वाण्णिवृत्तप्रेषणाण्णिचि क्त्वो ल्यप् । जनमध्य सार्थमध्य विवेश आश्रयार्थं प्रविवेश ।

---

१ तान् ( क. च. न. म. ) २ शात ( च. र. न. म. )

उन्मत्तरूपां शोकार्तां तथा वस्त्रार्धसंवृताम् ।
कृशां विवर्णां मलिनां पांसुध्वस्तशिरोरुहाम् ॥ ११४
तां दृष्ट्वा तत्र मनुजाः केचिद्भीताः प्रदुद्रुवुः ।
केचिच्चिन्तां परां जग्मुः केचित्तत्र विचुक्रुशुः ॥ ११५
प्रहसन्ति स्म तां केचिदभ्यसूयन्ति चापरे ।
अकुर्वत दयां केचित्पप्रच्छुश्चापि भारत ॥ ११६
काऽसि कस्यासि कल्याणि किं वा मृगयसे वने ।
त्वां दृष्ट्वा व्यथिताः स्मेह काचित्त्वमसि मानुषी ॥ ११७
वद सत्यं वनस्यास्य पर्वतस्याथवा दिशः ।
देवता त्वं हि कल्याणि त्वां वयं शरणं गताः ॥ ११८
यक्षी वा राक्षसी वा त्वमुताहोऽसि वराङ्गना ।
सर्वथा कुरु नः स्वस्ति रक्ष चास्माननिन्दिते ॥ ११९

( ११४ ) दमयन्तीं विशिनष्टि उन्मत्तेति । उन्मत्तरूपा उन्मत्तवद्रूपं यस्याः सा । भर्तृवियोगवशेनोन्मत्तत्वात् । पांसुध्वस्तशिरोरुहा पांसुभिर्ध्वस्ता आकीर्णा इति यावत् शिरोरुहा मूर्धजा यस्याः सा ।

( ११५ ) तामिति । तत्र सार्थे तां दृष्ट्वा प्रदुद्रुवुः पलायामासुः । अत्र हेतुर्भीता इति । परां अतिशयितां चिन्तां जग्मुः । महाभयसमापातिशङ्कयेति भावः[1] । विचुक्रुशुः विशेषेणाक्रोश कृतवन्तः । अतिमात्रमेव भीतत्वादिति भावः ।

( ११६ ) प्रहसन्ति स्मेति । हे भारत युधिष्ठिर । तां केचित् प्रहसन्ति स्म परिहसन्ति स्म । परिहासविषयीकृतवन्त इत्यर्थः । अभ्यसूयन्ति स्मेत्यनुवर्तते । अभ्यसूयाया विषयं कुर्वन्ति स्मेत्यर्थः । कोपप्रभवत्वाभावादनासूयाया न 'क्रुधद्रुह' त्यादिना चतुर्थी । असूया च गुणेषु दोषारोपः । दयामकुर्वत तस्यामित्यर्थाल्लभ्यते । पप्रच्छुः तामिति मंडूकप्लुत्याऽनुवर्तते । का त्वमित्यादिकं पृष्टवन्त इत्यर्थः ।

( ११७ ) प्रश्नमेवाह केति । मृगयसे अन्वेषयसि । मृग अन्वेषण इत्यस्माच्चौरादिकाल्लट् । स्मेहेति सन्धिरार्षः । स्म इहेति च्छेदः । इहास्मिन् सार्थे त्वां दृष्ट्वा व्यथिताः स्म । काचिदित्यभीष्टप्रश्ने । त्वं मानुष्यसि काचित् ।

( ११८ ) पुनः पृच्छन्ति वदेति[१] हीतिपादपूरणे । शरणं गताः शरणं प्राप्ताः । गमेरनुपसृष्टस्यापि सोपसर्गवदर्थः । तत एव चागता इत्यर्थः ।

( ११९ ) यक्षी वेति । यक्षी यक्षस्त्री । पुंयोगादाख्यायामिति ङीप् । एवमुत्तरत्रापि । उताहोऽसीति सन्धिरार्षः । 'ओदि'ति प्रगृह्यत्वात् । उताहो असीति च्छेदः । नः अस्मभ्यं स्वस्ति क्षेमं कुरु । 'नमःस्वस्ती' त्यादिना चतुर्थी ।

१ चिन्तापरास्तस्थुः ( च. क. ) २ च श्रास्या ( च ) कुर्वन्त्यस्या ( क ) ३ सर्वे ( च ) ४ पन्नगी ( ५ ) सुराङ्गना ( च. क. )

यथाऽयं सर्वथा सार्थः क्षेमी शीघ्रमितो व्रजेत् ।
तथा विधत्स्व कल्याणि यथा श्रेयो हि नो भवेत् ॥ १२०
तथोक्ता तेन सार्थेन दमयन्ती नृपात्मजा ।
प्रत्युवाच ततः साध्वी भर्तृव्यसनपीडिता ॥ १२१
सार्थवाहं च सार्थं च जना ये[1] तत्र केचन ।
युवस्थविरबालाश्च सार्थस्य च पुरोगमाः ॥ १२२
मानुषीं मां विजानीत मनुजाधिपतेः सुताम् ।
नृपस्नुषां राजभार्यां भर्तृदर्शनलालसाम् ॥ १२३
विदर्भराण्मम पिता भर्ता राजा च नैषधः ।
नलो नाम महाभागस्तं मार्गाम्यपराजितम् ॥ १२४
यदि जानीत नृपतिं क्षिप्रं शंसत मे प्रियम् ।
नलं पुरुषशार्दूलममित्रगणसूदनम् ॥ १२५

(१२०) प्रार्थयन्ते । यथेति । क्षेमी कुशलवान् सन् । 'अत इनिठना' विति मत्वर्थ इनिः । इतः अस्मात्प्रदेशाच्छीघ्र व्रजेत् गच्छेत् । तथा विधत्स्व कुरु । अकर्तृगामिन्यपि क्रियाफल आत्मनेपदमार्षम् । यथा नः अस्माकं श्रेयः कल्याण भवेत् ।

(१२१) तथेति । तथा पूर्वोक्तप्रकारेण उक्ता । ततः तदनन्तरम् । भर्तृव्यसनपीडिता भर्तुः सबन्धिना व्यसनेन दुःखेन पीडिता । प्रत्युवाच उत्तर दत्तवती ।

(१२२) कान्प्रत्युवाचेत्याह । सार्थवाह सार्थं वणिक्समूह वहत प्रापयति स्व स्व स्थानमिति सार्थवाहस्त वणिक्समुदायाख्याधिष्ठातारम् । सार्थं च । चकारः किल समुच्चेयाना सार्थस्यान्ते वा प्रतिसमुच्चेय वा परस्तात्प्रयुज्यत इत्यत्रोत्तर एव पक्षः स्वीकृतो भगवता व्यासेन । तत्र तस्मिंस्थाने ये केचन जना आसन् तानिति शेषः । युवस्थविरबालाः यवानः, स्थविरा वृद्धाः, बालाश्च । पुरोगमा अग्रगामिन प्रधाना इत्यर्थः। तान्प्रत्युवाचेत्यर्थः।

(१२३) प्रतिवचनमाह त्रिभिः । मानुषीमिति । मानुषीं मनुष्यजातीय स्त्रियम् । विजानीत अवबुध्यध्वम् । मनुजाधिपते राज्ञः । भर्तृदर्शनलालसां भर्तृदर्शने लालसा अभिलाषातिशयो यस्यास्तथाभूताम् ।

(१२४) राजपुत्रीत्यादिक विवृणोति विदर्भराडिति । विदर्भाणां राट् राजा भीमः । नैषधः निषधानामधिपः । अपराजित नास्ति पराजितं पराजयो यस्य तम् । मार्गामि अन्वेषयामि । मार्ग अन्वेषण इत्यतो लट् । 'अन्वेषणेऽर्थे मृगयेत णौ यौ मार्गैर्भवेन्मार्गति मार्गयेच्च' इति दैवम् ।

(१२५) यदीति । यदि जानीत तर्हीति शेषः । मे प्रियं शंसत कथयत । पुरुषशार्दूलं नरश्रेष्ठम् । 'उपमितं व्याघ्रादिभि' रिति समासः । अमित्रगणसूदन अमित्राणां शत्रूणां गणस्य सूदन नाशयितारम् ।

1 ये चात्र (क. न.) वा येऽत्र (च)

तामुवाचानवद्याङ्गी सार्थस्य महतः प्रभुः ।
सार्थवाहः शुचिर्नाम शृणु कल्याणि मद्वचः ॥ १२६
अहं सार्थस्य नेता वै सार्थवाहः शुचिस्मिते ।
मनुष्यं नलनामानं न पश्यामि यशस्विनि ॥ १२७
कुञ्जरद्वीपिमहिषशार्दूलर्क्षमृगानपि ।
पश्याम्यस्मिन्वने कृत्स्ने ह्यमनुष्यनिषेविते ॥ १२८
ऋते त्वां मानुषीं मर्त्यं न पश्यामि महावने
तथा नो यक्षराडद्य मणिभद्रः प्रसीदतु ॥ १२९
साऽब्रवीद्वणिजः सर्वान्सार्थवाहं च तं ततः ।
क नु यास्यति सार्थोऽयमेतदाख्यातुमर्हसि ॥ १३०

सार्थवाह उवाच—

सार्थोऽयं चेदिराजस्य सुबाहोः सत्यदर्शिनः ।

---

(१२६) तामिति। महतः सार्थस्य प्रभुरधिपतिः शुचिर्नाम शुचिरिति नाम्ना प्रसिद्धः । वचनमाह शृण्विति । हे कल्याणि कल्याणवति दमयन्ति ।

( १२७ ) अहमिति । सार्थवाहः वणिक् । 'वैदेहकः सार्थवाहो नैगमो वणिजो वणिक् । 'इत्यमरः । सार्थस्य वणिक्समूहस्य नेता नायकः । हे शुचिस्मिते शुभ्रहसिते दमयन्ति । न पश्यामि नापश्यामीत्यर्थः ।

( १२८ ) कुञ्जरेति । कुञ्जराः करिणः । महान्तो हि तेषां कुञ्जा हनवो भवन्तीति । 'खमुखकुञ्जेभ्यो र' इति रः । द्वीपिनश्चित्रव्याघ्राः । महिषा वनमहिषाः शार्दूला व्याघ्रा ऋक्षा अच्छभल्ला मृगा हरिणाश्च तान् । कृत्स्ने सकले । अमनुष्यनिषेविते मनुष्यैर्निषेवित न भवति तथाभूते ।

( १२९ ) ऋत इति । त्वा मानुषीं मनुष्यास्त्रियं ऋते विना अपरमित्यर्थात् मर्त्यं मानुषं न पश्यामि । अशक्यसंघटनस्यं च मानुषीदर्शनस्यानिष्टापादकतामाशङ्कमानस्तदुपशमायात्मनो देवताया मणिभद्रस्य नाम यक्षस्य प्रसादमभिप्रार्थयते । तथेति । यक्षराट् यक्षाणामधिपतिः । मणिभद्रः एतन्नामा नः अस्माकम् । शेषे षष्ठी । अस्मास्वित्यर्थः । प्रसीदतु अनुग्रहं करोतु । यथा किमप्यनिष्टं न स्यात् यथा वाऽतःपरं मनुष्यदर्शनं स्यादिति शेषः ।

( १३० ) सेति । आदितः सर्वान् वणिजः अब्रवीत् । ततः परं च तं सार्थवाहम् । नु: प्रश्ने । आख्यातुं कथयितुमर्हसि योग्यो भवसि । कथयेत्यर्थः । शैलीयं विनीतानां प्रार्थनस्य यदप्रयुज्य लोटमर्हतिरेव प्रयुज्यते । सार्थवाहमुद्दिश्यैवोत्तरत्र वचनादर्हसीत्येकवचनम् । पूर्वत्र पुनः अर्हथेति विपरिणमय्य विमर्शि योजनीयम् ।

( १३१ ) सार्थ इति । चेदिराजस्य चेदीनां देशविशेषाणां राज्ञः । चेदिदेशश्च शुक्तिमत्या नाम नद्यास्तीरे विद्यत इति कल्पद्रुमः । सुबाहोः

क्षिप्रं जनपदं गन्ता लाभाय मनुजात्मजे ॥ १३१
इति श्रीमन्महाभारते अरण्यपर्वणि नलोपाख्यानपर्वणि
चतुष्पष्टोऽध्यायः ।

## पञ्चषष्टोऽध्यायः ।



बृहदश्व उवाच—
सा तच्छ्रुत्वाऽनवद्याङ्गी सार्थवाहवचस्तदा ।
जगाम सह तेनैव सार्थेन पतिलालसा ॥ १
अथ काले बहुतिथे वने महति दारुणे ।
तटाकं सर्वतोभद्रं पद्मसौगन्धिकं महत् ॥ २

---

र्तनाम्नः । सत्यदर्शिनः सत्ये द्रष्टु ज्ञातु शील यस्य तथाभूतस्य । जनपदं देश गन्ता । गमेर्लुट् ।

इति श्रीनलोपाख्यानव्याख्याया बालबोधिन्या चतुष्पष्टोऽध्यायः ।

( १ ) सेति । अनवद्यानि अनिन्दितानि दोषशून्यानीत्यर्थः अङ्गानि अवयवा यस्यास्तथाभूता । 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' इति निपातनादवद्यशब्दस्य साधुत्वम् । पतिलालसा पत्यौ विषये लालसाऽभिलाषातिशयो यस्यास्तथाभूता । एष च सार्थेन सह गमने हेतु. ।

( २ ) अथेति । बहुतिथे बहूना पूरणे । अनेकेषु दिवसेषु कस्मिश्चिद्दिवस इत्यर्थः । कालस्यैकत्वेऽपि तदवयवभूताना दिवसाना बहुत्वस्य तस्मिन्नुपचाराद्बहुतिथ इत्युक्तिः । 'बहुपूगगणसघस्य तिथुग्'ति तिथुग् डश्च । सर्वतोभद्र सर्वतः सर्वैः प्रकारैर्भद्र शुभम् । सर्वतोभद्र इति तडागविशेषसंज्ञैव स्यादिति प्रतिभाति । यथा सदनविशेषस्य । न पुनरत्र प्रमाणमुपलब्धम् । पद्मसौगन्धिक शोभनो गन्धोऽस्य सुगन्धि । 'गन्धस्येदुत्पूतिसुसुरभिभ्य' इतीत् । तदेव सौगन्धिकम् । विनयादिभ्यष्ठगिति स्वार्थे ठगिति भानुदीक्षिताः । पद्मैः सौगन्धिक पद्मसौगन्धिकम् । कमलसुगन्धशालीत्यर्थः । पद्मसौगन्धिक 'पद्मैः सुरभीकृत सौगन्धिकैश्च ( कमलविशेषैः ) युतम्' इति चतुर्भुजः । स चायमर्थः सौगन्धिकपदमावर्त्य तत्रैकस्यार्शआद्यजन्तत्वाङ्गीकारे सभवति । पद्मपदस्यैव कमलसामान्यवाचकत्वेन सौगन्धिकविशिष्टत्वस्य पार्थक्येन वचनस्यानावश्यकत्वात्क्लिष्टतमत्वाच्चोपेक्षणीयोऽयम् । नीलकण्ठस्तु 'पद्मैश्च सौगन्धिकैश्च पद्मविशेषैर्युक्तत्वात्पद्मसौगन्धिक नाम सर' इति व्याचक्षाणः सरसोऽस्य संज्ञैवेयमित्याभिप्रैति । अत्रार्थेऽर्शआद्यजन्तः पद्मसौगन्धिकशब्दः । अत्रार्थे पुनः सौगन्धिकस्य पद्मविशेषत्वाङ्गीकारश्चिन्त्यः । पार्थक्येन निर्देशायोगात् कमलसामान्यवाचित्ववत्सूर्यविकासिकमलवाचकत्वाच्च पद्मशब्दस्येति । पद्मसौगन्धि-

---

१ नृवरा—( च ) २ सौगन्धिकायुतम् ( क )

वनगुल्मांश्च धावन्तो निद्रान्धा बहवो भयात् ।
केचिद्दन्तैः करैः केचित्केचित्पद्भ्यां हता गजैः ॥ १२
निहतोष्ट्राश्वबहुलाः पदातिजनसंकुलाः ।
भयादाधावमानाश्च परस्परहतास्तदा ॥ १३
घोरान्नादान्विमुञ्चन्तो निपेतुर्धरणीतले ।
वृक्षेष्वारुह्य संरब्धाः पतिता विषमेषु च ॥ १४
एवंप्रकारैर्बहुभिर्दैवेनाक्रम्य हस्तिभिः ।
राजन्विनिहतं सर्वं समृद्धं सार्थमण्डलम् ॥ १५
आरावः सुमहांश्चासीत्त्रैलोक्यभयकारकः ।
एषोऽग्निरुत्थितः कष्टस्त्रायध्वं धावताऽधुना ॥ १६
रत्नराशिर्विशीर्णोऽयं गृह्णीध्वं किं प्रधावत ।
सामान्यमेतद्द्रविणं न मिथ्या वचनं मम ॥ १७

[1] ( १२ ) वनेति । वनगुल्मान् घनस्य सबान्धिनः प्रकाण्डशून्यास्तरुविशेषान् । 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः । धावन्तः सावेगं गच्छन्तः । सरतेः शीघ्रगतौ पाघ्रेत्यादिना धौरादेशः । ततो लटः शता । महतो भयात् धावने हेतुभूतात् करैः शुण्डाभिः करणभूताभिः । गजैः कर्तृभिः ।

( १३ ) निहतेति । निहता उष्ट्राश्चाश्वाश्च बहुला येषां येषु वा तथाभूताः । पदातिजनसंकुलाः पदाभ्यां अतन्ति सततं गच्छन्ति पदातयस्तैः पादचारिभिः संकुला व्याप्ताः आधावमाना आसमन्ताद्धावनशीलाः । सरतेश्चानश् । परस्परहताः परस्परैर्हताः शत्रुशङ्कयेति भावः ।

( १४ ) घोरामिति । संरब्धाः संरम्भं प्राप्ताः । संरम्भश्च भीत्यादिजन्यो वेगविशेषः । वृक्षेष्विति आरुहेः कर्माविवक्षयाऽकर्मकत्वेनारोहणक्रियाधारतया वृक्षाणामधिकरणत्वम् । विषमेषु सकटेषु प्रदेशेषु ।

( १५ ) एवमिति । हे राजन् युधिष्ठिर ! दैवेन प्रयोजककर्त्रा हस्तिभिः प्रयोज्यैः कर्तृभिः आक्रम्य आक्रमणविषयं कृत्वा । आङ्पूर्वात्क्रमेर्ण्यन्तात् क्त्वो ल्यप् । समृद्धं समृद्धिमत् विपुलमिति वा । सार्थमण्डलं वणिक्समूहः । सार्थशब्दोऽत्र वणिग्वचनः । अवयवावयविनोरभेदोपचारात् । 'कूटं मण्डलं चक्रवाले' ति समूहपर्यायेषु हैमः ।

( १६ ) आराव इति । आरावः शब्दः । त्रैलोक्यभयकारकः त्रयो लोकाः स्वर्गादयस्त्रैलोक्यम् । चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । तस्य भयजनकः । आरावमाह एष इति । त्रायध्वं रक्षत । धावत परित्राणार्थं सत्वरमागच्छत । निरुपसर्गस्यापि सरतेः सोपसर्गवदर्थः ।

( १७ ) रत्नराशिरिति । विशीर्णः स्फुटितः । किं किमर्थम् । एतद्द्रविणं धनं सामान्यम् सर्वसाधारणम् । मम कस्यचिद्वणिजः ।

१ निद्रया महता भयात् ( क ) निद्रान्धा बहवोऽभवन् ( न ) २ आरुह्य संविग्ना. ( च ) आसन्य रामणाः ( क )

एवमेवाभिभाषन्तो विद्रवन्ति भयात्तदा ।
पुनरेवाभिधास्यामि चिन्तयध्वं सुकातराः ॥ १८
तस्मिंस्तथा वर्तमाने दारुणे जनसंक्षये ।
दमयन्ती च बुबुधे भयसंत्रस्तमानसा ॥ १९
अपश्यद्वैशसं तत्र सर्वलोकभयंकरम् ।
अदृष्टपूर्वं तद्दृष्ट्वा बाला पद्मनिभेक्षणा ॥ २०
संसक्तवदनाश्वासा उत्तस्थौ भयविह्वला ।
ये तु तत्र विनिर्मुक्ताः सार्थात्केचिदविक्षताः ॥ २१
तेऽब्रुवन्सहिताः सर्वे कस्येदं कर्मणः फलम् ।
नूनं न पूजितोऽस्माभिर्मणिभद्रो महायशाः ॥ २२
तथा यक्षाधिपः श्रीमान्न वै वैश्रवणः प्रभुः ।
न पूजा विघ्नकर्तॄणामथवा प्रथमं कृता ॥ २३
शकुनानां फलं वाऽथ विपरीतमिदं ध्रुवम् ।

(१८) एवमेवेति । व्यत्यासेन योजनीये पूर्वापरार्धे अभिधास्यामि गृह्णीध्व द्रव्यमिति वक्ष्यामि । सकातराः सभयाः कातरशब्दो ह्यत्र भावप्रधानः कातर्यवाची । कातर्यं च भीतिरिति । सुकातरा इति पाठस्तु साधुतरः । सुतरां कातरा भीता इत्यर्थः । विद्रवन्ति धावन्ति स्म ।

(१९) तस्मिन्निति । दारुणे भयकरे जनसंक्षये जनानां नाशे वर्तमाने सति । भयसंत्रस्तमानसा भीत्या पीडितहृदया सती दमयन्ती च अपि बुबुधे जागरं प्राप्ता ।

(२०) अपश्यदिति । वैशसं महाव्यसनमित्युत्तरचरितव्याख्यायां वीरराघवः । विशसति हिनस्तीति विशसम् । पचाद्यच् । तदेव वैशसं प्रज्ञादित्वादण् स्वार्थे । हिंसा चात्र मरणप्राया पीडा । अदृष्टपूर्वं पूर्वं न दृष्टम् । भूतपूर्वे चरडिति निर्देशात्पूर्वस्य पूर्वनिपातः ।

(२१) संसक्तेति । पूर्वार्धस्य पूर्वेण संबन्धः । संसक्ताः प्रसक्ताः प्रवृत्ता इति यावत् वदनस्य संबन्धिन आश्वासा निःश्वासा यस्याः तथाभूता । ये-त्वित्यर्धमुत्तरपद्यान्वयि । सार्थात् विनिर्मुक्ता अवशिष्टा इति यावत् । अविक्षता अप्राप्तव्रणाः । आसन्निति शेषः ।

(२२) त इति । सहिता एकत्र मीलिताः सन्तः । वचनमाह नूनमित्यादिभिः सप्तभिः । मणिभद्रो यक्षेषु प्रधानः ।

(२३) नेति । वैश्रवणः कुबेरः । स हि विश्रवसः पुत्रः । शिवादित्वादण् विश्रवसो विश्रवणरवणाविति गणसूत्राद्विश्रवणादेशश्च । विघ्नकर्तॄणां देवताविशेषाणाम् ।

(२४) शकुनानामिति । शक्नोति शुभाशुभमवगन्तुं यैस्ते शकुनाश्चापजटिलदर्शनादयः तेषाम् । 'शुभाशुभज्ञानविनिर्णयाय हेतुर्नृणां यः शकुनः

ग्रहा न विपरीतास्तु किमन्यदिदमागतम् ॥ २४
अपरे त्वब्रुवन्दीना ज्ञातिद्रव्यविनाकृता ।
याऽसावद्य महासार्थे नारी ह्युन्मत्तदर्शना ॥ २५
प्रविष्टा विकृताकारा कृत्वा रूपममानुषम् ।
तयैवं विहिता पूर्वं माया परमदारुणा ॥ २६
राक्षसी वा ध्रुवं यक्षी पिशाची वा भयंकरी ।
तस्याः सर्वमिदं पापं नात्र कार्या विचारणा ॥ २७
यदि पश्याम तां पापां सार्थघ्नीं नैकदुःखदाम् ।
लोष्टुभिः पांसुभिश्चैव तृणैः काष्ठैश्च मुष्टिभिः ॥ २८
अवश्यमेव हन्याम सार्थस्य किल कृत्यकाम् ।
दमयन्ती तु तच्छ्रुत्वा वाक्यं तेषां सुदारुणम् ॥ २९

---

स उक्त ।' इति वसन्तराजशाकुन ध्रुव अवश्यम्भावि । ग्रहा रव्यादयो नव विपरीता अनिष्टस्थानस्थित्याऽशुभफलदायिन । नेति प्रश्ने काकु । अपि न स्युरिति भावः । अन्यद्यादिष्यते तस्माद्भिन्न वैशसरूपम् । किं कस्मात्कारणात् ।

( २५ ) अपर इति । दीना दैन्यवति । ज्ञातिद्रव्यविनाकृता ज्ञातिभिः सगोत्रादिभि सबान्धिभि द्रव्येण च विनाकृता विरहिता । नारीत्यस्य प्रविष्टेत्युत्तरेण सबन्ध ।

( २६ ) प्रविष्टेति । विकृताकारा विकृतो बीभत्स आकार आकृति र्यस्यास्तथाभूता । 'विकृत त्रिषु बीभत्स' इति मेदिनी ।। अमानुष रूप कृत्वा गृहीत्वेत्यर्थः । पूर्वं प्रथमम् । द्वितीयवार पुन किं करिष्यसीति न शायत इति भाव । माया इन्द्रजालसदृशघटितघटना ।

( २७ ) राक्षसीति । राक्षसी वा साऽस्तीति शेष । पाप दुष्ट कर्म । अत्र अस्मिन् विषये विचारणा तस्या एवेद कर्म न वेति विचार । नात्र सदेग्धव्य निश्चितत्वादस्यार्थस्येति भाव ।

( २८ ) यदीति । उत्तरपद्यगतेन पूर्वार्धेन सबद्ध पद्यमिदम् । सार्थघ्नीं सार्थस्य हन्त्रीम् । पश्याम पश्येमेत्यर्थ । दृशेर्लोट् । तर्हीति यादिशब्दबलात्सबध्यते । लोष्टुभि मृदः खण्डै । यानि किल कृष्यमाणादेर्भुवो निष्पद्यन्ते । 'लोष्टे लोष्टुर्दलेर्लेष्टु' रिति हैम ।

( २९ )कृत्यका कृत्याम् । कृत्याशब्दात्स्वार्थे कानि 'केण' इति ह्रस्वस्तत टाप् । क्षिपकादित्वान्नेत् । कृत्या चोग्रो देवताविशेषः । या किल 'कोपाज्ज्वलन्तीं ज्वलन वमन्ती सृष्टिं दहन्तीं दितिज ग्रसन्तीम् । भीम नदन्तीं प्रणमामि कृत्या चौरूयमाणा क्षुधयोग्रकालीम्' इति तान्त्रिका ध्यायन्ति । तत्सादृश्या । कृत्यात्वम् । यद्वा कृत्या कुपिता । 'देवतायां कृत्या स्त्री कुपिते त्रिषु' इति नानार्थरत्नमाला ।

ह्रीता भीता च संविग्ना प्राद्रवद्यत्र काननम् ।
आशङ्कमाना तत्पापमात्मानं पर्यदेवयत् ॥ ३०
अहो ममोपरि विधेः संरम्भो दारुणो महान् ।
नानुबध्नाति कुशलं कस्येदं कर्मणः फलम् ? ॥ ३१
न स्मराम्यशुभं किंचित्कृतं कस्यचिदण्वपि ।
कर्मणा मनसा वाचा कस्येदं कर्मणः फलम् ३२
नूनं जन्मान्तरकृतं पापमापतितं महत् ।
अपश्चिमामिमां कष्टामापदं प्राप्तवत्यहम् ॥ ३३
भर्तृराज्यापहरणं स्वजनाच्च पराजयः ।
भर्त्रा सह वियोगश्च तनयाभ्यां च विच्युतिः ॥ ३४
निर्नाथता वने वासो बहुव्यालनिषेविते ।
अथापरेद्यु· संप्राप्ते हतशिष्टा जनास्तदा ॥ ३५
देशात्तस्माद्विनिष्क्रम्य ह्यशोचन् वैशसं कृतम ।

---

( ३० ) ह्रीतेति । ह्रीता लज्जिता । संविग्ना विषण्णा । यत्र कानन तत्रेति शेषः । प्राद्रवत् अधावत् । तत् सार्थोक्त हन्याम इति पाप दुष्कृत्य आशङ्कमाना भवेदिति सम्भावयन्ती आत्मान स्व पर्यदेवयत् शुशोच । निवृत्तप्रेषणाद्देवतेर्णिच् ।

( ३१ ) शोचनमाह अहो इति । विधे· दैवस्य सरम्भ कोपः । न अनुबध्नाति न सातत्येन प्रवर्तयति । विधिरिति तृतीयपदमत्राध्याहार्यम् । इद कुशलस्याननुबन्धनम् ।

( ३२ ) नेति । अण्वपि अल्पमपि कस्यापि अशुभ कृत मयेति शेषः । कर्मादित्रयमत्र करणभूतम् ।

( ३३ ) नूनमिति । पूर्वार्धार्थे हेतुमाह अपश्चिमामिति । नास्ति पश्चिमा परभाविनी यस्यास्तथाभूता चरमा कोटिमनुप्राप्तामित्यर्थ । कष्टा दुरसहाम् आपदम् । अतो निश्चीयते जन्मान्तरपापापातिरिति भाव· ।

( ३४ ) आपद विवृणोति भर्त्रिति । स्वजनाद्देवृरूपात् । तनयाभ्या कन्या पुत्राभ्याम् । तनयश्च तनया चेत्येकशेष· । विच्युतिः विभ्रंशो दूरीभवनं वियोग इत्यर्थः ।

( ३५ ) निर्नाथतेति । निर्नाथता अनाथता । बहुव्यालनिषेविते बहुभिर्व्यालैर्दुष्टश्वापदैर्निषेविते वने । 'श्वापदे नाऽप्यवत्खले' इति व्यालशब्दार्थेषु मेदिनी । अपरेद्युः परस्मिन्दिवसे । 'सद्यः परुत्परारी' त्यादिना निपातनात्साधु । सम्प्राप्ते सति । हतशिष्टा हतेभ्योऽवशिष्टाः । अशोचन्नित्युत्तरेण सम्बन्ध· ।

( ३६ ) देशादिति । निष्क्रम्य निर्गत्य कृत करिभिरिति शेषः । वैशस घातम् । उत्पातित महाव्यसनं वा । नराधिप राजन्युधिष्ठिर ! भ्रातरं पितर·

१ वनगुल्माद्विनिष्क्रम्य (क) २ शोचन्त ( क, च, म. ) शोचन्तो (न)

मन्ये स्वयवरकृते लोकपाला समागता ॥ ४१
प्रत्याख्याता मया तत्र नलस्यार्थाय देवता ।
नूनं तेषा प्रभावेन वियोगं प्राप्तवत्यहम् ॥ ४२
एवमादीनि दुःखार्ता सा विलप्य वराङ्गना ।
प्रलापानि तदा तानि दमयन्ती पतिव्रता ॥ ४३
हतशेषै सह तत्र ब्राह्मणैर्वेदपारगै ।
अगच्छद्राजशार्दूल चन्द्रलेखेव शारदी ॥ ४४
गच्छन्ती सा चिराद्बाला पुरमासादयन्महत् ।
सायाह्ने चेदिराजस्य सुबाहो सत्यदर्शिन² ॥ ४५

व्ययेन सह समासो न प्रतिषिद्ध । अत एव च ' अनेकमन्यपदार्थे ' इति सूत्रे ' सर्वपश्चात् , इति भाष्यप्रयोग इत्याहु । प्रयुक्ते चैवमनेके ऽन्यत्र । कैयटहरदत्तौ तु अव्ययसामान्यमेव निषेधविषय इत्याचक्षते । तन्मते कृत् इति कार्यार्थक शब्द । सपदादित्वात्क्विप् । स्वयवरस्य कृते कार्यायेत्यर्थ ।

( ४२ ) प्रत्याख्याता इति । तत्र तस्मिन्स्वयवरे मया नलस्यार्थाय नलार्थम् नलप्राप्त्यर्थमिति भाव । देवता इन्द्रादय ' देवात्तल् ' इति देवशब्दात्स्वार्थे तल् । ' तलन्त ' इति नित्य स्त्रीत्वम् । प्रत्याख्याता निराकृता । तेषा देवानाम् । देवताशब्दप्रतिपाद्यस्यार्थस्य ... सामान्य तश्च तस्य पुस्त्वेन पुसैव तच्छब्देन परामश । वस्तुतस्तु तासा प्रभावेणेत्येव वक्तव्यम् । प्रभावेनेत्यत्र णत्वाभावस्तु प्रामादिक । णत्वस्यावश्यम्भावित्वात् ।

( ४३ ) एवमिति । दु खार्ता पतिव्रता वराङ्गना श्रेष्ठा सा दमयन्ती तदा एवमादीनि एव पूर्वोक्तप्रकाराणि आदौ येषा तानि । तानि प्रलापानि निरर्थकानि वचनानि कर्मभूतानि । निरर्थकवचनोपपत्तय एवोक्त दु खार्तेति । विलप्य विलापे विषयीकृत्य । अगच्छदित्युत्तरेण सबन्ध । प्रलापशब्दस्यार्षं क्लीबत्वम् । लिङ्गमनियत लोकाश्रयत्वाल्लिङ्गस्येति भाष्योक्तेर्वा ।

( ४४ ) हतशेषैरिति । हतेभ्य शेषा अवशिष्टास्तत्रानन्तरं सह । एतेन ब्राह्मणानामपि केषाचित्तदा सार्थेन सह गमन प्रतीयते । वेदपारगैरिति सह गमनार्हत्वमभिद्योतयति । शारदी शरदि भवा । शरच्चन्द्रकान्तितुल्यकान्तिरेखा । ' सन्धिवेलाद्यृतुनक्षत्रेभ्योऽण् ' इत्यण् । ' टिड्ढाणञ ' इत्यादिना ङीप् । चन्द्रलेखा चन्द्रस्य कलेव वर्तमाना । एतेन काश्य च नैसर्गिकमान्तिमत्त्व च द्योत्यते । अत्र तु दशोक रायणेति क पुस्तकपाठोऽपि साधुतर ।

( ४५ ) गच्छन्तीति । बाला सुन्दरीति यावत् । आसादयत् । उपजगाम । सायाह्ने अह्नो दिनस्य सायेऽन्ते । चेदिराजस्येत्यादि व्याख्यात पूर्वाध्यायान्ते । अत पर प्रक्षिप्तमर्थ नास्मदयनमिति न व्याख्यायते ।

१ दु खशोकपरायणा ( क ) २ सत्यवादिन ( क ) ३ अत पर सा तु तच्चारसर्वाङ्गी सुबाहोस्तुङ्गगोपुरम् ' इत्यधिक कपुस्तके ।

अथ वस्त्रार्धसंवीता प्रविवेश पुरोत्तमम् ।
तां विह्वलां कृशां दीनां मुक्तकेशीममार्जिताम् ॥ ४६
उन्मत्तामिव गच्छन्तीं ददृशुः पुरवासिनः ।
प्रविशन्तीं तु तां दृष्ट्वा चेदिराजपुरीं तदा ॥ ४७
अनुजग्मुस्तत्र बाला ग्रामिपुत्राः कुतूहलात् ।
सा तैः परिवृताऽगच्छत्समीपं राजवेश्मनः ॥ ४८
तां प्रासादगताऽपश्यद्राजमाता जनैर्वृताम् ।
धात्रीमुवाच चैवैनामानयेह ममान्तिकम् ॥ ४९
जनेन क्लिश्यते बाला दुःखिता शरणार्थिनी ।
यादृग्रूपं च पश्यामि विद्योतयति मे गृहम् ॥ ५०
उन्मत्तवेशा कल्याणी श्रीरिवायतलोचना ।

(४६) अथेति । अथ नगरोपगमनानन्तरं वस्त्रार्धसंवीता वस्त्रस्यार्धेन प्रावृता दमयन्ती । तामित्यस्योत्तरपद्यगतेन पूर्वार्धेन संबन्धः । अमार्जितां अकृतमार्जनाम् । मार्जनं च आर्द्रवस्त्रादिना गात्रादीनां निर्मलीकरणम् । मृजूशौचालङ्कारयोरित्यतो निष्ठा । अस्नातामित्यर्थः । अनलङ्कृतामिति वा । धूसरवेणीमिति तु भ्रान्तिर्नीलकण्ठस्य । मुक्तकेशीमित्युक्ते वेण्या एवासंभवात् ।

(४७) उन्मत्तामिति । उत्तरार्धमुत्तरपद्यान्वयि ।

(४८) अनुजग्मुरिति । ग्रामिपुत्राः ग्रामिणो ग्रामवासिनः । तेषां हि ग्रामो निवासतया भवतीति । तेषां पुत्राः । कुतूहलात् कौतुकात् । कौतुकं च जघन्यायां दशायां विद्यमानायां अलौकिकं लावण्यमिति । सैर्वोऽ ।

(४९) तामिति । प्रासादगता प्रासादपदं प्रासादोपरिप्रदेशं लक्षयति तत्र गता प्रासादतले विद्यमानेत्यर्थः । 'एनां दमयन्तीं मम अन्तिकं समीपं आनय' इति धात्रीमुपमातरं उवाच । चैवेति च्वार्थे ।

(५०) पुनर्वचनान्तरमाह जनेनेति । जनेन लोकसमूहेन क्लिश्यते क्लेशं प्राप्यते । क्लिश्यतिरन्तर्भावितण्यर्थः । यद्वा जनेनेति हेतौ तृतीया । क्लिश्यते तप्यते क्लेशमनुभवतीत्यर्थः । 'दिवादेरुपतापेऽर्थे तङि स्यात्क्लिश्यते पदम् ।' इति दैवम् । बालेत्यादिकमनुकम्पार्हतां द्योतयति । ननु किमनयोन्मत्तयेति चेत्तत्राह यादृगिति । यादृक् यादृशं रूपं सौन्दर्यं अस्याः पश्यामीति शेषः । तेनेति शेषः । मे गृहं द्योतयति प्रकाशयिष्यतीत्यर्थः । अत्र च कल्याणीत्युत्तरपद्यगतं कर्तृपदं संबध्यते ।

(५१) उन्मत्तवेशेति । उन्मत्तवेशा उन्मत्तस्येव वेशो यस्यास्तथाभूता । आयतलोचना आयते दीर्घे लोचने यस्यास्तथाभूता । कल्याणी कल्याणहेतुः श्रीरिव एषा द्योतयतीति पूर्वेण संबन्धः । आकृतिः किलास्या गुणाननुमापयतीति भावः । सा राजमाता तां दमयन्तीं परिवृण्वन्तं जनसमूहं वारयित्वा दूरी

१ वस्त्रार्धेन च (क) २ गच्छेना—(क म) ३ तादृग (क च, ग म)

सा जनं वारयित्वा तं प्रासादतलमुत्तमम् ॥ ५१
आरोप्य विस्मिता राजन्दमयन्तीमपृच्छत ।
एवमप्यसुखाविष्टा बिभर्षि परमं वपुः ॥ ५२
भासि विद्युदिवाभ्रेषु शंस मे काऽसि कस्य वा ।
न हि ते मानुषं रूपं भूषणैरपि वर्जितम् ॥ ५३
असहाया नरेभ्यश्च नोद्विजस्यमरप्रभे ! ।
तच्छ्रुत्वा वचनं तस्या भैमी वचनमब्रवीत् ॥ ५४
मानुषीं मां विजानीहि भर्तारं समनुव्रताम् ।
सैरन्ध्रीं जातिसंपन्नां भुजिष्यां कामवासिनीम् ॥ ५५
फलमूलाशनामेकां यत्रसायंप्रतिश्रयाम् ।

---

कृत्यं । प्रासादतलं प्रासादस्योपरिभागं 'गच्ची' तिमहाराष्ट्रेषु ख्यातम् । आरोप्येत्युत्तरेण सबन्धः ।

( ५२ ) आरोप्येति । विस्मिता विस्मय प्राप्ता लोकातिशायिनीमाकृति-मालोक्येति भावः । राजन् युधिष्ठिर । अपृच्छतेत्यार्षमात्मनेपदम् । एवं असुखेनाविष्टाऽपि परम उत्कृष्टं लावण्यशालीत्यर्थः । वपुः शरीर बिभर्षि ।

( ५३ ) भासीति । अभ्रेषु मेघेषु विद्युदिव भासि । अभ्राणामसुखानां च विद्युतो दमयन्त्याश्चोपमानोपमेयभाव' । मे मह्य शस कथय । कथनी-यमर्थमाह काऽसीऽति । कुतोऽयं प्रश्न इति चेत्तत्राह नेति । हि यतः भूषणै-र्वर्जितमपि ते रूप मानुष मनुष्यसबन्धि न । अलौकिक विद्यत इत्यर्थः । अतोऽस्ति प्रश्नावकाश इति भावः ।

( ५४ ) रूपस्यालौकिकता प्रदर्श्य सत्त्वस्यापि लोकातिशायितामाह असहायेति । अमरप्रभे अमराणा देवानामिव प्रभा कान्तिर्यस्यास्तथाभूते । नोद्विजासि न बिभेषि । ओविजी भयचलनयोरित्यलो लट् । अनुदात्तेत्त्व लक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् ।

( ५५ ) मानुषीति । मा भर्तार पतिं समनुव्रता सम्यगनुगतामिति यावत् । सैरन्ध्री स्वैर स्वाच्छन्द्य चरतीति तथाभूतेति शब्दकल्पद्रुमः । ताम् पृषोद-रादित्वात्साधुः । गौरादित्वान् ङीप् । 'सीरा' प्रतिसीराः ( जवनिकः ) तासा समूहं सैर धारयित्री नेपथ्यधारिणीमन्तःपुरचरीमित्यर्थः । ' इति नीलकण्ठः । 'चतुष्षष्टिकलाभिज्ञा शीलरूपादिसेविनी । प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता ॥ ' इति कात्यः । जातिसंपन्ना जात्या जन्मना कुलज त्वेनेत्यर्थः संपन्नां । युक्ताम् । भुजिष्यां भुङ्क्ते स्वामिदत्त वेतनामिति तथा भूतां दासीमित्यर्थः । रुचिभुजिभ्यां किष्यन् ' इत्यौणादिकः किष्यन् । ' भुजिष्यपरिचारकाः ' इत्यमरः । कामवासिनीं कामेन स्वेच्छया वस्तु शील यस्यास्तथाभूताम् । ताच्छील्यको णिनिः । स्वेच्छया यत्र क्वापि वसन्तीमित्यर्थः ।

( ५६ ) एवमात्मनः सार्वादिक स्वरूपमभिधाय सांप्रातिकीं वृत्तिमाह

असङ्ख्येयगुणो भर्ता मा च नित्यमनुव्रत ॥ ५६
भक्ताऽहमपि त वीर छायेवानुगता पथि ।
तस्य दैवात्प्रसङ्गोऽभूदतिमात्र सुदेवने ॥ ५७
द्यूते स निर्जितश्चैव वनमेक उपेयिवान् ।
तमेकवसन वीरमुन्मत्तमिव विह्वलम् ॥ ५८
आश्वासयन्ती भर्तारमहमप्यगम वनम् ।
स कदाचिद्वने वीर कस्मिंश्चित्कारणान्तरे ॥ ५९
क्षुत्परीतस्तु विमनास्तदप्येक न्यसर्जयत् ।
तमेकवसना नग्नमुन्मत्तवदचेतसम् ॥ ६०
अनुव्रजन्ती बहुला न स्वपामि निशा सदा ।
ततो बहुतिथे काले सुप्तामुत्सृज्य मा क्वचित् ॥ ६१

फलेत । य १ मायप्रतिश्रया यत्र यस्मिन्प्रदशे साय दिनान्त स प्रतिश्रय, आश्रयस्थान यस्यास्तथाभूताम । सचरन्त्या यत्र सायान्हो भवति तत्र निवसन्तीमित्यर्थ । सुप्सुपेन समास । एकामित्यनेन सूचितस्य भर्तृविरहस्य कारण माख्यातुकामा तमुपवर्णयति । असख्येति । असख्येया सख्यातु ( गणयितुम् ) अशक्या गुणा यस्य तथाभूत । मामनुव्रत अनुगत ।

( ५७ ) भक्तेति । भक्ता पूज्ये भर्तर्यनुरागिणी । पूज्येषु ह्यनुरागो भक्ति । पथि छायेव अनुगता । 'छायेव ता भूपतिरन्वगच्छत् ।' इति कालिदास । तस्य दैवात् दैववशादित्यर्थ । सुदेवने द्यूते । सुशब्दोऽत्र निरर्थक । अतिमात्र अत्यन्त प्रसङ्ग आसक्ति अभूत् ।

( ५८ ) द्यूत इति । एक आत्मोचितपरिवारशून्य सन् । उपेयिवान् उपजगाम । इण् गतावित्यतो लिट क्वसु । 'उपेयिवाननाश्वाननूचानश्चे'ति निपातनात्साधु । तमित्याद्यर्धमुत्तरान्वयि ।

( ५९ ) आश्वासयन्तीति । आश्वासयन्ती सान्त्वयन्तीत्यर्थ । कारणान्तरे कारणविशेषे सति ।

( ६० ) क्षुदिति । क्षुत्परीत क्षुधा व्याप्त । तत एव च विमना विगत चित्त । विगत विविध वा मनो यस्य स विमना इति महेश्वर । व्याकुल चित्त इत्यर्थ । तदप्येक वस्त्रमिति शेष । न्यसर्जयत् अपहारयामासेत्यर्थ । तत्याजेति वा । तमित्याद्यर्धमुत्तरान्वयि ।

( ६१ ) अनुव्रजन्तीति । अनुव्रजन्ती अनुगच्छन्ती सती बहुला अनेका निशा रात्री । 'कालाध्वनोरत्यन्तसयोग' इति द्वितीया । न स्वपामि न सुप्तवती अहमिति शेष । गतकार्यस्यानित्यत्वात्स्वपे लट् । भूतकालिकत्व तु स्पष्टमेव । चतगाप्रयोगस्तु तस्या अवस्थाया स्मृतावुपस्थितत्वात्प्रत्यक्षायमाणत्वं द्योतयति । ता इत्यर्धमुत्तरान्वयि ।

१ वनवसनम् ( — ) २ वस्त्रमेव ( ग ) वासन्ध ( म )

वाससोऽर्धं परिच्छिद्य त्यक्तवान्मामनागसम् ।
तं मार्गमाणा भर्तारं दह्यमाना दिवानिशम् ॥ ६२
साऽहं कमलगर्भाभमपश्यन्ती हृदि प्रियम् ।
न विन्दाम्यमरप्रख्यं प्रियं प्राणेश्वरं प्रभुम् ॥ ६३
तामश्रुपरिपूर्णाक्षीं विलपन्तीं तथा बहु ।
राजमाताऽब्रवीदार्ता भैमीमार्तस्वरां स्वयम् ॥ ६४
वस त्वमयि कल्याणि प्रीतिर्मे परमा त्वयि ।
मृगयिष्यन्ति ते भद्रे भर्तारं पुरुषा मम ॥ ६५
अपि वा स्वयमागच्छेत्परिधावन्नितस्ततः ।
इहैव वसती भद्रे भर्तारमुपलप्स्यसे ॥ ६६
राजमातुर्वचः श्रुत्वा दमयन्ती वचोऽब्रवीत् ।
समयेनोत्सहे वस्तुं त्वयि वीरप्रजायिनि ॥ ६७
उच्छिष्टं नैव भुञ्जीयां न कुर्यां पादधावनम् ।

---

( ६२ ) वासस इति । वाससो मदीयस्य वस्त्रस्य अर्धं परिच्छिद्य छित्वा छेदनक्रियया पृथक्कृत्येत्यर्थः । परिरत्र धात्वर्थानुवर्ती । अनागसं निरपराधाम् । मार्गमाणा अन्वेषयन्ती । दह्यमाना वियोगवह्निनेति भावः । दिवानिशं रात्रिन्दिवं तं मार्गमाणा आसम् ।

( ६३ ) सेति । कमलगर्भाभं कमलगर्भतुल्यं सुकुमारं गौरं च हृदि आत्मनो हृदये प्रियं प्रेम्णो विषयीभूतं अपश्यन्ती सा मार्गमाणाऽहं तं प्रभुं समर्थं प्राणेश्वरं मत्प्राणानां स्वामिनं प्रियं पतिं न विन्दामि न प्राप्नोमि । अतः परं प्रक्षिप्तमेकं पद्यं स्पष्टार्थम् ।

( ६४ ) तामिति । आर्तस्वरा आर्तः शोकवशाद्व्याकुलीभूतः स्वरो यस्यास्ताम् ।

( ६५ ) वसस्वेति । आर्षमात्मनेपदम् । मयि मत्सकाशे इत्यर्थः । परमा आत्यन्तिकी । मम पुरुषा दूताः ते भर्तारं मृगयिष्यन्ति अन्वेषयिष्यन्ति । मृग अन्वेषणे इत्यतश्चौरादिकाण्णिजन्तप्रेषणात्पुनर्णिचि परस्मैपदम् । अन्यथा पुनरागर्वीयत्वादात्मनेपदम् स्यात् ।

(६६) अपि वेति । अपिवेत्यथवेत्यर्थः । आगच्छेदिति सम्भावनायां लिङ् । वसतीति आगमशास्त्रस्यानित्यान्नुमभावः । उपलप्स्यसे साक्षात्करिष्यसि ।

( ६७ ) राजेति । हे वीरप्रजायिनि वीरान् प्रजायते प्रसूते तथाभूते वीरमातः । त्वयि त्वत्समीपे समयेन नियमेन कमपि नियमं पुरस्कृत्येत्यर्थः । वस्तुमुत्सहे ।

( ६८ ) समयमाह उच्छिष्टमिति । उच्छिष्टं भुक्तावशिष्टमन्नं न भुञ्जीयां न

---

अतः परं ' इत्युक्ता साऽनवद्याङ्गी राजमातरमप्युत । स्थिताऽश्रुपरिपूर्णाक्षी वेपमाना सुदुःखिता ॥ ' इत्यधिकं कपुस्तके २ त्वमिह ( क )

न चाहं पुरुषानन्यान्प्रभाषेयं कथंचन ॥ ६८
प्रार्थयेद्यदि मां कश्चिद्दण्ड्यस्ते स पुमान्भवेत् ।
वध्यश्च ते सकृन्मन्द इति मे व्रतमाहितम् ॥ ६९
भर्तुरन्वेषणार्थं तु पश्येयं ब्राह्मणानहम् ।
यद्येवमिह वत्स्यामि त्वत्सकाशे न संशयः ॥ ७०
अतोऽन्यथा न मे वासो वर्तते हृदये कचित् ।
तां प्रहृष्टेन मनसा राजमातेदमब्रवीत् ॥ ७१
सर्वमेतत्करिष्यामि दिष्ट्या ते व्रतमीदृशम् ।
एवमुक्त्वा ततो भैमीं राजमाता विशांपते ॥ ७२
उवाचेदं दुहितरं सुनन्दां नाम भारत ।
सैरन्ध्रीमभिजानीष्व सुनन्दे देवरूपिणीम् ॥ ७३
वयसा तुल्यतां प्राप्ता सखी तव भवत्वियम् ।

भक्षयिष्यामीत्यर्थः । आर्षं परस्मैपदम् । ' भुजोऽनवने ' इत्यात्मनेपदविधानात् । पदधावन पादयोः प्रक्षालनम् । प्रभाषेयम् । आर्षं परस्मैपदम् । कथंचन केनापि प्रकारेण ।

( ६९ ) प्रार्थयेदिति । मां प्रार्थयेत् इच्छेत् । अर्थयतेर्निवृत्तप्रेषणात्पुनर्णिचि परस्मैपदम् । ते त्वया दण्ड्यः दण्डनीयः । ते तव दण्ड्यो दण्डमर्हति तथाभूतो वा । ' दण्डादिभ्यो यत् ' इति यत् । एतच्च सकृत्प्रार्थने । असकृत्प्रार्थने पुनराह वध्य इति । च किंच असकृत् वारं वारं मां यदि प्रार्थयेत् तदा स मन्दो मूर्खः ते तव वध्यः वधार्हः भवेदिति शेषः । व्रत नियमः आहितं निश्चितम् ।

( ७० ) भर्तुरिति । तुकारोऽवधारणार्थः । केवलं भर्तुरन्वेषणार्थमित्यर्थः । यदि एवं ईदृशः समयः स्यात्तदेत्यर्थात्सनध्यते । वत्स्यामि वासं करिष्यामि ।

( ७१ ) अत इति । अतः अस्मात् अन्यथा अन्यप्रकारः कश्चित् क्वापि वासः मे हृदये न वर्तते नास्ति । मे मनसे न रोचत इत्यर्थः । प्रहृष्टेन मनसा उपलक्षिता । उपलक्षणे तृतीया ।

( ७२ ) सर्वमिति । व्रत नियम दिष्ट्या ज्ञात्वा । व्रतस्य ज्ञातत्वादित्यर्थः । विशांपते राजन् युधिष्ठिर ।

( ७३ ) उवाचेति । सैरन्ध्रीं दमयन्तीम् । दमयन्त्यां हि सैरन्ध्रीत्येवात्मा निर्दिष्ट इति । अभिजानीष्व जानीहीत्यर्थः । अभिरत्र धात्वर्थानुवर्ती । देवरूपिणीं देवाना रूपमरूपस्यास्तथाभूताम् ।

( ७४ ) वयसेति । निरुद्विग्नमनाः निर्गत उद्विग्न उद्वेगो यस्मात्तथाभूतं मनो यस्यास्तथाभूता सती । एतया सह मोदस्व आनन्दं प्राप्नुहि ।

१ इत्युक्ता दमयन्त्या तु ( क ) २ दिष्ट्या ( क १, न, म. )

एतया सह मोदस्व निरुद्विग्नमनाः सदा ॥ ७४
ततः परमसंहृष्टा सुनन्दा गृहमागमत् ।
दमयन्तीमुपादाय सखीभिः परिवारिता ॥ ७५
सा तत्र पूज्यमाना वै दमयन्ती व्यनन्दत ।
सर्वकामैः सुविहितैर्निरुद्वेगाऽवसत्तदा ॥ ७६
इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
पञ्चषष्टितमोऽध्यायः ।

## षट्षष्टितमोऽध्यायः ।



बृहदश्व उवाच—
उत्सृज्य दमयन्तीं तु नलो राजा विशांपते ।
ददर्श दावं दह्यन्तं महान्तं गहने वने ॥ १
तत्र शुश्राव शब्दं वै मध्ये भूतस्य कस्यचित् ।
अभिधाव नलेत्युच्चैः पुण्यश्लोकेति चासकृत् ॥ २

( ७५ ) तत इति । तत तस्मान्मातुर्वचनात् तदनन्तर वा । परमसहृष्टा परम अत्यन्त सहृष्टा प्रमुदिता । सखीभि परिवारिता सती गृह स्वीय भवनम् ।

( ७६ ) सेति । पूज्यमाना बहुमानेन योज्यमाना । व्यनन्दत विशेषेण आनन्द प्रापत् । आर्षमात्मनेपदम् । सुविहितै सुष्ठु कृतै. सम्यक्पूरितैरित्यर्थः सर्वकामैः सर्वाभिरिच्छाभि हेतुभूतै निरुद्वेगा उद्वेगशून्या सती ।

इति श्रीनलोपाख्यानव्याख्याया बालबोधिन्या पञ्चषष्ठोऽध्यायः ।

( १ ) उत्सृज्येति । विशापते राजन् युधिष्ठिर । उत्सृज्य त्यक्त्वा । दमयन्तीत्यागानन्तरमित्यर्थः । गहने निबिडे दह्यन्त प्रज्वलन्तमिति यावत् । दह्यन्तमिति दिवादेराकृतिगणत्वात् साधु । दाव वनाग्निम् । वनवह्निर्दवो दाव ' इति हलायुधः ।

( २ ) तत्रेति । तत्र दावाग्नौ मध्ये मध्यप्रदेशे । भूतस्य प्राणिनः । शब्दमाह अभिधावेति । पुण्यश्लोक नल अभिधाव सत्वरमागच्छ इति उच्चैः महान्त शब्दम् । ' अल्पे नीचैर्महत्युच्चैः ' इत्यमरः । अभिधावेति अभिपूर्वात्सृ गताविस्यतो लोट् । शीघ्रगतौ च धौरादेशः । असकृद्वारंवारं शुश्राव ।

१ अतः पर चपुस्तके ' ततः सुनन्दा राजेन्द्र सप्रहृष्टमना सती । सैरन्ध्रीसहिताऽगच्छ स्वमेवावसथ तदा । तत सुनन्दया सार्धं दमयन्त्यवसत्सुखम् । सर्वकामै. समुदिता पतिदर्शनलालसा ॥ ' इत्येव पद्यद्वय दृश्यतेऽध्यायस्यास्यान्तिमम् । २ अनेदं कपुस्तके पद्यम् ' सहसा न्यवसद्राजन्राजपुत्र्या सुनन्दया ॥ चिन्तयन्ती नलं वीरमनिशं वामलोचना ॥ '

मा भैरिति नलश्चोक्त्वा मध्यमग्नेः प्रविश्य तम् ।
ददर्श नागराजानं शयानं कुण्डलीकृतम् ॥ ३
स नागः प्राञ्जलिर्भूत्वा वेपमानो नलं तदा ।
उवाच मां विद्धि राजन्नागं कर्कोटकं नृप ॥ ४
मया प्रलब्धो महर्षिर्नारदः सुमहातपाः ।
तेन मन्युपरीतेन शप्तोऽस्मि मनुजाधिप ॥ ५
तिष्ठ त्वं स्थावर इव यावदेव नलः क्वचित् ।
इतो नेता तत्र हि त्वं शापान्मोक्ष्यसि मत्कृतात् ॥ ६
तस्य शापान्न शक्नोमि पदाद्विचलितुं पदम् ।
उपदेक्ष्यामि ते श्रेयस्त्रातुमर्हति मां भवान् ॥ ७

---

( ३ ) मेति । मा भैः भीतिं मा वहेति उक्त्वा । मा भैरिति भियो लुङ् । आगमशास्त्रस्यानित्यत्वात् 'अस्तिसिचोऽपृक्त' इतीटोऽप्रवृत्तौ 'हल्ङ्याभ्य' इति सिलोपे सिचो विसर्जनीये च रूपम् । केचित्तु 'गातिस्थाघुपाभूभ्य' इत्यत्र भूधातोः परं भीधातोर्ग्रहणमिच्छन्ति भूम्य इति च सौत्रं पञ्चम्येकवचनमाचक्षते । तेषां मते सिचो लुकि रूपम् । एतत्पक्षे च 'मा भैषीरि' त्यस्याशुद्धतापत्तिर्दुर्वारा । तं भूतं शयानं भूमौ पृष्ठं संयोज्य पतितमित्यर्थः । कुण्डलीकृतं वलयीभूतं । वह्निना तथा कृतमिति वा । नागराजानं नागानां सर्पविशेषाणां राजानं कर्कोटकम् नाम । समासान्तविधेरनित्यत्वान्न टच् ।

( ४ ) स इति । प्राञ्जलिर्बद्धाञ्जलिः । एतेनास्य मानुषस्वरूपावलम्बनं प्रतीयते । बद्धाञ्जलिसदृशोऽत्यन्तं विनत इति वाऽर्थः । वेपमानः कम्पमानः । मरणभयादिति भावः । नृप नॄन् पाति तथाभूत । राजन् । यद्वा नृपेति बृहदश्वकृता युधिष्ठिरसम्बुद्धिः ।

( ५ ) मयेति । प्रलब्धः प्रतारितः । प्रपूर्वको हि लभिर्विप्रपूर्वकलभिसमानार्थः । विप्रलम्भश्च प्रतारणम् । 'शशिकरवीचिषु विप्रलब्धजिह्वः' इति श्रीकण्ठचरितम् । 'प्रलब्धव्या न ते वयम् ।' इति तूत्तरत्र ( अ. ७१ प. १६ ) । मन्युपरीतेन कोपव्याप्तेन । 'मन्युर्दैन्ये क्रतौ क्रुधि' त्यमरः ।

( ६ ) शापमाह तिष्ठेति । स्थावरो वृक्षपाषाणादिरिव । स हि स्थानशीलो भवतीति । नैव पुनः स्थानात्स्थानान्तरं व्रजतीति । 'स्थेशभासे' त्यादिना वरच् । यावदेव नलः (त्वामिति शेषः) इतः क्वचित् प्रदेशे नेता । तावदिति यावत्पदबलाल्लभ्यम् । तत्र यत्र प्रदेशे स नेष्यति तस्मिन्प्रदेशे । मोक्ष्यसि मुक्तो भविष्यसि । मुञ्चतेः प्रेरणाया विनिवृत्तावयमर्थः सिद्धः । नेतेति नयतेर्लुट् ।

( ७ ) तस्येति । तस्य नारदस्य शापात् हेतुभूतात् । पदात् अवस्थानप्रदेशात् पदं पदमानमपि प्रदेशं विचलितुं गन्तुं न शक्नोऽस्मि । ते तुभ्यं श्रेयः श्रेयसः साधनभूतमर्थम् । श्रेयः कल्याणम् । हेतुहेतुमतोरभेदः ।

---

१ महर्षिर्नागा. ( क ) २ यावदेति ( क ) ३ नेताऽसि तस्य त्व (क)

सखा च ते भविष्यामि मत्समो नास्ति पन्नगः।
लघुश्च ते भविष्यामि शीघ्रमादाय गच्छ माम् ॥ ८
एवमुक्त्वा स नागेन्द्रो बभूवाङ्गुष्ठमात्रकः ।
तं गृहीत्वा नलः प्रायाद्देशं दावविवर्जितम् ॥ ९
आकाशदेशमासाद्य विमुक्तं कृष्णवर्त्मना ।
उत्स्रष्टुकामं तं नागः पुनः कर्कोटकोऽब्रवीत् ॥ १०
पदानि गणयन्गच्छ स्वानि नैषध कानिचित् ।
तत्र तेऽहं महाबाहो श्रेयो धास्यामि यत्परम् ॥ ११
ततः संख्यातुमारब्धमदशद्दशमे पदे ।
तस्य दष्टस्य तद्रूपं क्षिप्रमन्तरधीयत ॥ १२

---

(८) सखेति । किं ते सख्येनेत्यत्राह मत्सम इति । पन्नगः सर्पः त्वं च नरेष्वहं च पन्नगेष्वद्वितीय इत्युचितमुभयोः सौहार्दमिति भावः । ते त्वदर्थमित्यर्थः । लघुः स्वल्पोन्मानः भविष्यामि। एतेनादाय गमने सौकर्यं चोत्यते ।

(९) इतीति । सः नागेन्द्रः सर्पश्रेष्ठः कर्कोटकः । अङ्गुष्ठमात्रकः अङ्गुष्ठः प्रमाणमस्य तथाभूत । अङ्गुष्ठपरिमिताकार इत्यर्थः । प्रमाणे मात्रच् । स्वार्थे कन् । दावविवर्जितं वनाग्निना रहितम् ।

(१०) आकाशेति । आसमन्तात् काशतेऽनावृततया शोभतेऽसावाकाशः स चासौ प्रदेशः, तम् । अनावृतं देशम् । कृष्णवर्त्मना अग्निना । तस्य हि वर्त्म कृष्णं भवति । विमुक्तं विवर्जितमित्यर्थः । उत्स्रष्टुकामं त्युक्तुमिच्छन्तं तं नलम् ।

(११) पदानीति । कानिचित् कियन्तिचिदित्यर्थः । स्वानि स्वीयानि पदानि पदन्यासानित्यर्थः । गणयन् एकं द्वे त्रीणीत्यादिसंख्याया विषयीकुर्वन् गच्छ । गणनादेशोऽयं दशनाभ्यनुज्ञोपगमार्थः । गणयता हि यदा दशेत्युच्यते तदा तत्संख्यावाचीव दशतेर्लोडन्तस्यापि रूपं सम्पन्नं इति यथाकथमप्यनुज्ञामादाय दक्ष्यामीति। तत्र गणनायाम् । ते यत्परं उत्कृष्टं श्रेयः कल्याणं तत् धास्यामि विधास्यामि ( करिष्यामि ) ।

(१२) तत इति । संख्यातुं पदानि गणयितुम् । आरब्धं कृतारम्भम् । आङ्पूर्वाद्रभेरविवक्षितकर्मतयाऽकर्मकत्वात् 'गत्यर्थाकर्मके' त्यादिना कर्तरि क्तः । यद्वा आरब्धमारम्भः । नपुंसके भावे क्तः । तदस्त्यस्यारब्धः । अर्श आद्यच् । तम् । दशमे पदे अदशत् दष्टवान् । तत्र हि दशेति गणनाङ्कः । तस्य च दशतेर्लोटि द्वौ च समानं रूपमिति दशं कुर्वित्यर्थः । नागाः किल विनाऽभ्यनुज्ञां न दशन्तीति प्रसिद्धिः । तस्य नलस्य तत् रूपं सौन्दर्यं क्षिप्रं सत्वरं अन्तरधीयत अन्तर्हितमभूत् । अन्तःपूर्वाद्धातेस्तिरोधानार्थात्कर्मकर्तरि लङ् । विकृत आसीदाकारस्तस्येति भावः ।

स दृष्ट्वा विस्मितस्तस्थावात्मानं विकृतं नलः ।
स्वरूपधारिणं नागं ददर्श स महीपतिः ॥ १३
ततः कर्कोटको नागः सान्त्वयन्नलमब्रवीत् ।
मया तेऽन्तर्हितं रूपं न त्वां विद्युर्जना इति ॥ १४
यत्कृते चासि निकृतो दुःखेन महता नल ।
विषेण स मदीयेन त्वयि दुःखं निवत्स्यति ॥ १५
विषेण संवृतैर्गात्रैर्यावत्त्वां न विमोक्ष्यति ।
तावत्त्वयि महाराज दुःखं वै स निवत्स्यति ॥ १६
अनागा येन निकृतस्त्वमनर्हो जनाधिप ।
क्रोधादसूययित्वा तं रक्षा मे भवतः कृता ॥ १७
न ते भयं नरव्याघ्र दंष्ट्रिभ्यः शत्रुतोऽपि वा ।
ब्रह्मविद्भ्यश्च भविता मत्प्रसादान्नराधिप ॥ १८

(१३) स इति । आत्मान विकृत विरूपतामापन्नं दृष्ट्वा । स्वरूपधारिण स्वस्य रूप धारयति तथाभूत स्वीकृतपूर्वस्वरूपमित्यर्थः ।

(१४) तत इति । सान्त्वयन् सान्त्व कुर्वन् । सान्त्व चात्र मधुरया चोपपन्नया चोक्त्या विषादापनयनम् । रूपतिरोधाने कारणमाह मयेति । त्वा जना न विद्युर्न जानीयुरिति हेतोः मया ते रूप अन्तर्हितं तिरोभावं प्रापितम् । अन्तर्हितमित्यन्तर्भावितण्यर्थाद्धातेर्निष्ठा । एतेन नार्थे रूपस्यात्यन्तो विनाश इति द्योत्यते ।

(१५) यत्कृत इति । कृतेशब्दोऽव्यय निमित्तवचनः । यन्निमित्तमित्यर्थः । येन निमित्तभूतेनेति यावत् । महता दुःखेन निकृतोऽभिभूतः । स कलिरित्यर्थः । मदीयेन विषेण हेतुभूतेन त्वयि दुःख यथा तथा निवत्स्यति ।

(१६) विषेणेति । स कलिः यावत् त्वा न विमोक्ष्यति तावत् विषेण सवृतैर्व्याप्तैर्गात्रैरवयवैर्विशिष्टः सन् । विशेषणे तृतीया ।

(१७) अनागा इति । हे जनाधिप राजन् नल । अनागा नास्ति आगोऽपराधो यस्य तथाभूतः । 'आगोऽपराधो मन्तुश्चे' त्यमरः । आगः शब्दः क्लीबे । 'अनागसि प्रेयसि केन हेतुने' ति कालिदासः । अनर्हः निकृतेरयोग्यः । येन निकृतः अभिभूतः । निपूर्वः करोतिर्वञ्चन इत्येके । त असूययित्वा असूयाविषय कृत्वा । असूयाशब्दात्प्रातिपदिकाद्धात्वर्थ इति णिचि क्त्वा । असूया चात्र लक्षणया द्वेषः । मे मया भवतो रक्षा रक्षणम् ।

(१८) नेति । ते तव दंष्ट्रिभ्यो दंष्ट्राविशिष्टेभ्यः सर्पव्याघ्रादिभ्यः । ब्रह्मविद्भ्यो ब्रह्मज्ञेभ्यो ब्रह्मर्षिभ्योऽपीत्यर्थः । अस्ति च ब्रह्मर्षिभ्यश्चेत्यपि पाठान्तरम् । ब्रह्मवित्त्वमिति पाठे ब्रह्मज्ञत्वमित्यर्थः । नैव पाठः साधुः सर्वेनानुगतस्य तत्र एकनैव परित्यागायोगात् । भवति च ब्रह्मविभ्यः शापभयमिति । मत्प्रसादात्ममानुग्रहात् ।

१ 'तावत्तु त्वा महाराज दुःखेऽस्मिन् स नियोक्ष्यति' (क.) २ ब्रह्मवित्त्वं च (क.) ब्रह्मर्षिभ्यश्च (च.)

राजन्विषनिमित्ता च न ते पीडा भविष्यति ।
संग्रामेषु न राजेन्द्र शश्वज्जयमवाप्स्यसि ॥ १९
गच्छ राजन्नितः सूतो बाहुकोऽहमिति ब्रुवन् ।
समीपमृतुपर्णस्य स हि चैवाक्षनैपुणः ॥ २०
अयोध्यां नगरीं रम्यामद्य वै निषधेश्वर ।
स तेऽक्षहृदयं दाता राजाऽश्वहृदयेन वै ॥ २१
इक्ष्वाकुकुलजः श्रीमान्मित्रं चैव भविष्यति ।
भविष्यसि यदाऽक्षज्ञः श्रेयसा योक्ष्यसे तदा ॥ २२
समेष्यसि दारैस्त्वं मा स्म शोके मनः कृथाः ।
राज्येन तनयाभ्यां च सत्यमेतद्ब्रवीमि ते ॥ २३

( १९ ) राजन्निति । विषनिमित्ता विष निमित्त यस्या तथाभुता विषजन्येत्यर्थः । शश्वत् वार वार सदा वा । 'सदार्थे च पुनरर्थे च दृश्यते' इति शश्वत्पदार्थेषु मेदिनी ।

( २० ) गच्छेति । इतोऽस्मात्प्रदेशात् । अह नलः बाहुक इति सशेयम् । बाहुभ्यां कायति शोभते तथाभूतः इति च तदर्थः । वीरत्वाच्च बाहुशालित्वम् । ऋतुपर्णस्य एतत्सशस्यायोध्याधिपतेः । किमर्थं तत्र गमनमित्यत्राह स इति । हि यतः सः अक्षनैपुणः अक्षेषु अक्षक्रीडाया नैपुण निपुणता यस्य तथाभूतः । अक्षशब्दो निरूढलक्षणया द्यूतमाचष्टे । अत एव 'मृगयाक्षा दिवास्वप्न' इत्यादि प्रयुञ्जते मन्वादयः । पाठान्तर तु साधुतरम् ।

( २१ ) कुत्र वायमृतुपर्ण इत्याकाङ्क्षाया गन्तव्य नगरमाह अयोध्यामिति । अयोध्या योधयितुमशक्या रिपुभिः । सशेय नगर्याः । स ऋतुपर्णः अक्षहृदय अक्षाणा द्यूतविद्याया हृदय रहस्य दाता दास्यतीत्यर्थः । ददातेर्लुट् । कथमित्याह । अश्वहृदयेन अश्वशब्दोऽश्वविद्याया लाक्षणिकः तस्य हृदयेन रहस्येन विनिमियभूतेन । स किल परिवृत्त्या त्वत्तोऽश्वहृदय गृहीत्वा अक्षरहस्य ते दास्यतीत्यर्थः। दान चात्र शिक्षणम्। नलश्चाश्वहृदयज्ञ इति प्रसिद्धः। लभ्यते हि विद्यया विद्येति सुघटोऽयमर्थ इति भावः ।

( २२ ) इक्ष्वाविति । इक्ष्वाकुकुलजः इक्ष्वाकोर्नाम राज्ञः कुले जायते तथाभूतः । इक्ष्वाकुश्च सूर्यवंश्यो भूपः । यदा अक्षज्ञः द्यूतज्ञः भविष्यसि तदा श्रेयसा कल्याणेन योक्ष्यसे युक्तो भविष्यसि । स्वरितेत्त्वादात्मनेपदम् ।

( २३ ) समेमिति । दारैर्भार्यया दमयन्त्या सम सह एष्यसि सगस्यस इत्यर्थः । 'दाराः पुंभूम्नि' इत्यमरः । 'दारान पद्मभुवस्त्रिलोकजननी' मिति विद्यानाथः । समेष्यसि चेति पाठस्तु साधुतमः । 'सयोक्ष्यसे स्वदारै' रित्यप्येवम् । शोके मनः मा स्म कृथाः मा समर्पय । 'स्मोत्तरे लङ्चे'ति लुङ् । राज्येन तनयाभ्यां च समेष्यसीति सबन्धः ।

१ स हि चैवाक्षनैपुणम् ( क. च. न. ) २ संयोक्ष्यसे स्व-( क. ) समेष्यसि च ( च )

स्वं रूपं च यदा द्रष्टुमिच्छेथास्त्वं नराधिप ।
संस्मर्तव्यस्तदा तेऽहं वासश्चेदं निवासयेः ॥ २४
अनेन वाससा च्छन्नः स्वं रूपं प्रतिपत्स्यसे ।
इत्युक्त्वा प्रददौ तस्मै दिव्यं वासोयुगं तदा ॥ २५
एवं नलं च संदिश्य वासो दत्त्वा च कौरव ।
नागराजस्ततो राजंस्तत्रैवान्तरधीयत ॥ २६
इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि
पट्षष्टितमोऽध्यायः ।

## सप्तषष्टोऽध्यायः ।



बृहदश्व उवाच—
तस्मिन्नन्तर्हिते नागे प्रययौ नैषधो नलः ।
ऋतुपर्णस्य नगरं प्राविशद्दशमेऽहनि ॥ १
स राजानमुपातिष्ठद्बाहुकोऽहमिति ब्रुवन् ।
अश्वानां वाहने युक्तः पृथिव्यां नास्ति मत्समः ॥ २

( २४ ) स्वमिति । स्व स्वीय रूप सौन्दर्यमाकार वा । इच्छेथाः इच्छेः । आर्षमात्मनेपदम् । अभिलषिष्यसीत्यर्थः । तदा ते त्वया । इद मया-दीयमान वासो वस्त्र निवासयेः परिधत्स्व । वस आच्छादन इत्यत आदादि-कान्निवृत्तप्रेषणाण्णिचि प्रार्थनाया लिङ् ।

( २५ ) अनेनेति । आच्छन्न. प्रावृत्तः । स्वरूप स्वस्य स्व वा रूप प्रतिपत्स्यसे प्राप्स्यसि । दिव्य दिवि भव वासोयुग वाससोर्युग्मम् ।

( २६ ) एवमिति । सदिश्य उक्त्वेत्यर्थः ।'दिशिरुच्चारणक्रिय' इत्युक्तेः । हे कौरव कुरोर्गोत्रापत्य ( कुरुकुलोद्भव ) राजन् युधिष्ठिर । अन्तरधीयत अन्तर्धान प्राप । दिवादेरपरिसमाप्तत्वात्साधु ।

इति श्रीनलोपाख्यानव्याख्याया बालबोधिन्या पट्षष्टोऽध्यायः ।

( १ ) तस्मिन्निति । नागे सर्पे कर्कोटके अन्तर्हिते सति । नैषधो निष-धानामीश्वरः नलः प्रययौ तस्माद्देशात्प्रयाण कृतवान् । दशमेऽहनि दिवसे ।

( २ ) स इति । स कृतनगरप्रवेशो नलः । राजानमृतुपर्ण उपातिष्ठत् उपजगाम । अह बाहुक एतन्नामा इति ब्रुवन् । वचनान्तर चाह अश्वाना-मित्यादिना सार्धद्वितयेन । अश्वाना वाहने चोदने युक्तो योग्यः । पृथिव्या मत्समो मत्सदृशः नास्ति ।

अर्थकृच्छ्रेषु चैवाहं प्रष्टव्यो नैपुणेषु च ।
अन्नसंस्कारमपि च जानाम्यन्यैर्विशेषतः ॥ ३
यानि शिल्पानि लोकेऽस्मिन्यच्चैवान्यत्सुदुष्करम् ।
सर्वं यतिष्ये तत्कर्तुमृतुपर्ण भरस्व माम् ॥ ४

[2]ऋतुपर्ण उवाच ।

वस बाहुक भद्रं ते सर्वमेतत्करिष्यसि ।
शीघ्रयाने सदा बुद्धिर्ध्रियते मे विशेषतः ॥ ५
स त्वमातिष्ठ योगं तं येन शीघ्रा हया मम ।
भवेयुरश्वाध्यक्षोऽसि वेतनं ते [3]शतं शताः ॥ ६
त्वामुपस्थास्यतश्चैव नित्यं वार्ष्णेयजीवलौ ।

( ३ ) अर्थेति । अर्थकृच्छ्रेषु अर्थस्य द्रव्यस्य संबन्धिषु कृच्छ्रेषु संकटेषु अहं प्रष्टव्यः तन्निराकरणोपायमिति शेषः । एतेनार्थशास्त्रे प्रावीण्यं द्योत्यते । किंच नैपुणेषु निपुणभावेषु विषये । कः कस्मिन्विषये निपुण इत्यस्मिन्विषय इत्यर्थः । प्रष्टव्य इत्यनुषज्यते । अन्नसंस्कार अन्नस्य गुणविशेषेण योजनं सम्यङ्निष्पादनमित्यर्थः । समः करोतेः सुट् । नलः किल पाकनिष्पादने नितान्त निष्णातः । अस्ति खल्वेतेन प्रणीत पाकशास्त्रम् । अन्यैरित्यार्षत्वात्पञ्चम्यर्थे तृतीया । अन्येभ्य इत्यर्थः । विशेषतो विशेषेण ।

( ४ ) यानीति । अस्मिन् लोके यानि शिल्पानि कलाश्च नृत्यादयः कारुकर्माणि च स्वर्णकारादिकर्मादीनि । सुदुष्कर सुतरां दुःखेन कर्तुं शक्यम् । मां भरस्व पुषाण । भ्वादेराकृतिगणत्वात्साधुः । अतः पर प्रक्षिप्तमेक पद्यं नात्यन्तमावश्यकमिति न व्याख्यायते ।

( ५ ) वसेति । बाहुक ते तव भद्र कल्याण भवत्विति शेषः । वस अत्र मद्गृह इत्यर्थात् । एतत्त्वयोक्त सर्वं करिष्यसि कुर्वित्यर्थः । प्रयुञ्जते ह्येवं कवयः । मे बुद्धिः सदा शीघ्रयाने सत्वरगमने विशेषतः ध्रियते अवतिष्ठते तत्रैव सलग्ना भवतीत्यर्थः । धृङ् अवस्थान इत्यतो लट् ।

(६) स इति । सः अश्ववाहने कुशलः त्व, येन मे हयाः शीघ्राः सत्वरगामिनः भवेयुः तं योगं उपायं आतिष्ठ अवलम्बस्व । 'द्रव्योपायसन्नहनेष्वपि । इति योगशब्दार्थेषु मेदिनी । अश्वाध्यक्षः अश्वेषु अधिकृतः। 'अध्यक्षोऽधिकृते' पुंसि इति मेदिनी। स हि व्यवस्थावलोकनार्थमश्वानध्यक्षयतीति। ते वेतन भृतिः शतं शताः। दशसहस्रसमितास्तदानीन्तन्यो मुद्रा इत्यर्थः । आर्षं पुंस्त्वं शतशब्दस्य । शत शता इति पाठे तु शता शतानीत्यर्थः। छान्दसो डाप्रत्ययः। छान्दसा अपि क्वाचित्काभाषायां प्रयुज्यन्त इति तत्प्रयोगः। शतं शतमितिपाठस्तु साधुतमः अक्लिष्टत्वात्।

( ७ ) त्वामिति । वार्ष्णेयजीवलौ वार्ष्णेयो जीवलश्चेत्येतदाख्यौ पुरुषौ

अतः परं 'इत्युक्तः स नलेनाथ ऋतुपर्णो नराधिपः । उवाच सुप्रीतमनास्तं प्रेक्ष्य च महीपते ।' इत्यधिक कपुस्तके पद्यम् । २ एतत्कपुस्तके नास्ति । ३ शतं शतम् ( क. च. ) शतं शता ( म )

एताभ्यां रंस्यसे सार्धं वस वै मयि बाहुक ॥ ७

बृहदश्व उवाच ।

एवमुक्तो नलस्तेन न्यवसत्तत्र पूजितः ।
ऋतुपर्णस्य नगरे सहवार्ष्णेयजीवलः ॥ ८
स वै तत्रावसद्राजा वैदर्भीमनुचिन्तयन् ।
सायं सायं सदा चेमं श्लोकमेकं जगाद ह ॥ ९
क नु सा क्षुत्पिपासार्ता श्रान्ता शेते तपस्विनी ।
स्मरन्ती तस्य मन्दस्य कं वा साऽद्योपातिष्ठति ॥ १०
एवं ब्रुवन्तं राजानं निशायां जीवलोऽब्रवीत् ।
कामेनां शोचसे नित्यं श्रोतुमिच्छामि बाहुक ॥ ११
आयुष्मन्कस्य वा नारी यामेवमनुशोचसि ।
तमुवाच नलो राजा मन्दप्रज्ञस्य कस्यचित् ॥ १२

---

उपरस्थास्यतः सेविष्येते । एताभ्यां सार्धं सह रस्यसे आनन्दं प्राप्स्यसि । वै निश्चये । मयि मत्समीपे इत्यर्थः ।

( ८ ) एवमिति । पूजितः बहुमतः । सहवार्ष्णेयजीवलः वार्ष्णेयजीवलाभ्यां सह वर्तमानः । 'वोपसर्जनस्ये' ति सहस्य समासविकल्पः ।

( ९ ) स इति । सायं सायं प्रतिसायाह्नमित्यर्थः । वीप्सया द्विर्वचनम् । इमं वक्ष्यमाणं श्लोकं पद्यम् । यद्यपि श्लोकशब्दः पद्यसामान्यवचनः 'श्लोको यशसि पद्ये चे' ति कोशात् तथापि सोऽयमष्टाक्षरपादं पद्यविशेषमेवाह । अत एव लक्षितं कालिदासेन ' श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ।' इति ।

( १० ) श्लोकमाह क्वेति । नुर्वितर्के क्षुत्पिपासार्ता क्षुधा बुभुक्षया पिपासया पातुमिच्छया ( तृष्णया ) च आर्ता पीडिता तपस्विनी अनुकम्पनीया सा स्त्री तस्य मन्दस्य मूर्खस्य स्मरन्ती । तं मूर्खं स्मरन्तीत्यर्थः । 'अधीगर्थदयेशां' मिति षष्ठी । अत्र तच्छब्दः स्त्रीलिङ्गो दमयन्तीं पुमांश्च नलमाचष्टे । क नु शेते । अद्य संप्रतीत्यर्थः सा कं वा उपातिष्ठति उपगच्छति। वाकारो नुसमानार्थः । आत्मनो वृत्तस्य प्रच्छादयितुमिष्टत्वात्तच्छब्देनैव सामान्यतो निर्देशः ।

( ११ ) एवमिति । राजानं नलम् । एनां श्लोके निर्दिश्यमानां कां शोचसे विलापविषयीकरोषि । 'गन्धनावक्षेपण' ... इत्यात्मनेपदम् ' इति कविकल्पद्रुमव्याख्यायां दुर्गादासविद्यावागीशः ।

( १२ ) आयुष्मन्निति । आयुष्मन् भूयिष्ठमायुरस्त्यस्य तथाभूत । भूरि मतुप् । यामेवमनुशोचसि शोकस्य विषयीकरोषि सा । वाकारः प्रश्नार्थः । नलस्य वचनमाह मन्देत्यादिना । मन्दप्रज्ञस्य मन्दाऽल्पा प्रज्ञा बुद्धिर्यस्य तथाभूतस्य । अर्धमेतद्दुष्करेणान्वेति ।

आसीद्बहुमता नारी तस्या दृढतरं वचः।
स वै केनचिदर्थेन तया मन्दो व्ययुज्यत ॥ १३
विप्रयुक्तः स मन्दात्मा भ्रमत्यसुखपीडितः।
दह्यमानः स शोकेन दिवारात्रमतन्द्रितः ॥ १४
निशाकाले स्मरंस्तस्याः श्लोकमेवं स्म गायति।
स विभ्रमन्महीं सर्वां क्वचिदासाद्य किंचन ॥ १५
वसत्यनर्हस्तद्दुःखं भूय एवानुसंस्मरन्।
सा तु तं पुरुषं नारी कृच्छ्रेऽप्यनुगता वने ॥ १६
त्यक्ता तेनाल्पपुण्येन दुष्करं यदि जीवति।

---

(१३) आसीदिति। आसीदित्यस्तेर्लङ्। अस्तिसिच इतीट्। बहुमता अत्यन्तं मान्या। तस्या वचः दृढतर अतिशयेन दृढमविचलम्। आत्मोक्तिं कदाचिदप्यपरिवर्तयन्तीत्यर्थः। केनचित् अर्थेन कर्मणा हेतुभूतेन। व्ययुज्यत वियोग प्रापत्।

(१४) विप्रयुक्त इति। मन्दात्मा मूढमतिः। मनोवचन आत्मशब्दो बुद्धौ लाक्षणिकः। असुखपीडितः दुःखपीडितः। दिवारात्रं दिवा च रात्रौ च। 'अहः सर्वैकदेशे' त्यत्र चकारेण संख्याव्ययादेरप्युपसग्रहादव्ययपूर्वाद्रात्रेरच्। अत्यन्तसयोगे द्वितीया। अतन्द्रितः तन्द्रा निद्रागमसूचकमालस्य अस्त्यस्मिंस्तथा न भवति तथाभूतः। तारकादित्वादितच्। शोकेन कर्त्रा दह्यमान इत्युत्तरान्वयि।

(१५) निशेति। तस्याः स्मरस्ता स्मरन्। 'अधीगर्थे' त्यादिना षष्ठी। एवं उक्तप्रकार श्लोकम्। सर्वां महीं विभ्रमन् स क्वचित् प्रदेशे किंचन आश्रयस्थान आसाद्य प्राप्य।

(१६) वसतीति। अनर्हः दुःखानुभवायोग्यः। भूयः पुनः पुनः। अनुस्मरन् स्मरन्। षष्ठ्या विकल्पाद् द्वितीया। 'मामनुस्मर युध्य चे' ति गीता। उपसर्गावत्र धात्वर्थानुवर्तिनौ। तस्याः पुनर्भार्याः किंवा सवृत्ताभित्याह सेति। अर्धमेतदुत्तरपद्यान्वयि। कृच्छ्रे व्यसनेऽपि तं पुरुष अनुगता।

(१७) त्यक्तेति। अल्पपुण्येन। संभाव्यते खलु तस्याल्पपुण्यत्वमन्यथैवमसंभवादिति भावः। तेन वने त्यक्ता यदि जीवति तदा तत् दुष्करं दुःखकरमित्यर्थः। दुःशब्दो दुःखवाच्यव्ययम् करोतीति करामिति च पचाद्यच्। सुप्सुपेति समासः। यद्वा दुष्करमिति पृथगेव। येन केनापि त्यागरूपं कर्मेदं दुःखेनैव कर्तुं शक्यमित्यर्थः। करोते 'रीषद्दुःसुष्वि' त्यादिना खल्। यदिशब्द आशङ्कायाम्। यदि जीवति जीवति वा न वेति सन्देह एवेत्यर्थः। एकेत्युत्तरान्वयि। एका असहाया बाला नयनलोभनीयेन वयसोपगतेत्यर्थः।

---

१ दृढतरश्च सः (क.) दृढतरं च सः (च) २ मेक (क. च. म. न.) ३ अल्पभाग्येन (क)

एका बालाऽनभिज्ञा च मार्गमाणाऽतथोचिता ॥ १७
क्षुत्पिपासापरीताङ्गी दुष्करं यदि जीवति ।
श्वापदाचरिते नित्यं वने महति दारुणे ॥ १८
त्यक्ता तेनाल्पभाग्येन मन्दप्रज्ञेन मारिष ।
इत्येवं नैषधो राजा दमयन्तीमनुस्मरन् ।
अज्ञातवासं न्यवसद्राज्ञस्तस्य निवेशने ॥ १९

इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि सप्तपष्टोऽध्यायः ।

---

## अष्टषष्टोऽध्यायः ।



बृहदश्व उवाच—
हृतराज्ये नले भीमः सभार्ये प्रेष्यतां गते[1] ।

---

मार्गिणां अनभिज्ञा अविज्ञात्री । एतेन विपदामवश्योपनिपातित्व ध्वन्यते । अतथोचिता तथा तस्य प्रकारस्य उचिता योग्या न भवति तथाभूता ।

(१८)क्षुदिति। श्वापदेत्याद्यर्धमुत्तरान्वयि। नित्य श्वापदाचरिते श्वापदैर्हिंस्रैः पशुभिः आ सर्वतः चरिते कृतसचारे । हे मारिष आर्य । स हि मर्षणशीलो भवति । पृषोदरादित्वासाधुः । ' आर्ये मारिषमार्षकौ ' इति शब्दार्णवः । एष च शब्दो नाट्योक्तावेव प्रयुज्यत इति केचित् । तन्न समञ्जसम् । लोकेष्वप्रयुज्यमानस्य नाट्ये प्रयोगानर्हत्वात् । नाट्य हि नामायमादर्श एवावि-परीततया लौकिकस्य प्रदर्शयितेति । नाट्यवर्गे मारिषशब्दपाठस्तु नाट्ये बहुल दर्शनादिति । इत्येवमिति युधिष्ठिर प्रति बृहदश्वोक्तिः । तस्य राज्ञ ऋतुपर्णस्य निवेशने गृहे अज्ञातवास न ज्ञातो वास आत्मनो वासक्रिया यस्मिन्कर्मणि तद्यथा तथा न्यवसत् । अज्ञात वास वा न्यवसत् अकरोत् । वासशब्दस्य पार्थक्येन निर्देशाद्वसेः करणार्थकता ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां सप्तषष्टोऽध्यायः ।

---

( १ ) एतावता नलस्य च दमयन्त्याश्च वृत्तमुपवर्ण्य सप्रति विदर्भनगर-गत वृत्तमुपवर्णयति । हृतेति । सभार्ये भार्यया सह सहवर्तमाने प्रेष्यता दासताम् । दमयन्ती हि सैरन्ध्रीभूयावस्थिता नलश्चाश्वाध्यक्षो भूत्वेति । गते

---

१ सभार्येऽदर्शन ( क ) सभार्ये च वन ( च ) अतः परं ' चिन्त-यामास बहुशः सहामात्यैर्नराधिपः ॥ समाहूय द्विजान्सर्वानिदं वचनमब्रवीत् । अग्रहारं च दास्यामि ग्रामं नगरसंमितम् । दमयन्तीं नल चैव पर्यन्वेषति यो द्विज । गवां शतसहस्राणि दाता तस्मै द्विजातये ॥ इत्युक्त्वा ब्राह्मणान्स-र्वान्समाहूय द्विजोत्तमान् । प्रस्थापयामास तदा तयोर्दर्शनकाङ्क्षया ॥' इत्यधिकं ख पुस्तके ।

द्विजान्प्रस्थापयामास नलदर्शनकाङ्क्षया ॥ १
संदिदेश च तान्भीमो वसु दत्त्वा च पुष्कलम् ।
मृगयध्वं नलं चैव दमयन्तीं च मे सुताम् ॥ २
अस्मिन्कर्मणि संपन्ने विज्ञाते निषधाधिपे ।
गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ॥ ३
अग्रहारांश्च दास्यामि ग्रामं नगरसंमितम् ।
न चेच्छक्याविहानेतुं दमयन्ती नलोऽपि वा ॥ ४
ज्ञातमात्रेऽपि दास्यामि गवां दशशतं धनम् ।
इत्युक्तास्ते ययुर्हृष्टा ब्राह्मणाः सर्वतोदिशम् ॥ ५
पुरराष्ट्राणि चिन्वन्तो नैषधं सह भार्यया ।
नैव क्वापि प्रपश्यन्ति नलं वा भीमपुत्रिकाम् ॥ ६

सति । अतः परं सार्धश्लोकत्रयमधिकं कपुस्तक उत्तरार्धेन पौनरुक्त्यापादकमित्युपेक्षणीयम् । प्रस्थापयामास प्रेषयामास ।

(२) संदिदेशेति । पुष्कलं बहुलं । वसु द्रव्यं दत्त्वा संदिदेश उक्तवान् । वचनमाह मृगयध्वमिति । मृग अन्वेषणे । आगर्वीयत्वादात्मनेपदम् ।

(३) अस्मिन्निति । अस्मिन्नन्वेषणरूपे कर्मणि संपन्ने परिसमाप्ते । अस्मिन् मदभीष्टे दमयन्तीनलाधिगमरूपे कर्मणि कार्ये संपन्ने घटिते सतीति वार्थः । एतत्पक्षे विज्ञात इत्यादि स्पष्टीकरणमात्रार्थम् । निषधाधिपे नले । एतच्च दमयन्त्या अप्युपलक्षणम् । वः युष्माकं मध्ये । निर्धारणे षष्ठी । यः तौ दमयन्तीनलौ आनयिष्यति आनेष्यतीत्यर्थः । आर्ष इट् । तस्मै इति शेषः ।

(४) अग्रहारानिति । अग्रं ब्राह्मणभोजनं तदर्थं ह्रियन्ते राजधनात्पृथक्क्रियन्त इत्यग्रहाराः क्षेत्रादयः इति नीलकण्ठः । अग्रहाराः शासनमिति चतुर्भुजः । शब्दः पुनरयं ग्रामविशेष एव रूढो दृष्टः । यस्मात्किल निवर्तते राजशासनम् । नगरसंमितं नगरसदृशं महान्तम् । इतःपरमधिकमर्धं प्रक्षिप्तम् । नेति । अर्धमेतदुत्तरान्वयि । वाकारश्चार्थः । अन्यथा द्विवचनायोगात् ।

(५) ज्ञातमात्र इति । ज्ञातं ज्ञानं तस्मिन्नेव सति । तयोः केवलं ज्ञानेऽपि सतीत्यर्थः । नपुंसके भावे क्तः । निष्ठायां तु द्विवचनमावश्यकम् । दशशतं दशगुणितं शतम् । शाकपार्थिवादित्वात्समासः । धनं धनतुल्यमित्यर्थः । सर्वतोदिशं सर्वासु दिक्ष्वित्यर्थः । आर्षोऽव्ययीभावः । शरदादित्वात् टच् ।

(६) परेति । भार्यया पत्न्या दमयन्त्या सह नैषधं विचिन्वन्तोऽन्विच्छन्तः । पराणि अन्यनृपायत्तानि राष्ट्राणि ययुरिति पूर्वेण सम्बन्धः । प्रपश्यन्ति ददृशुरित्यर्थः ।

१ नास्तीदमर्धं कपुस्तके । २ निष्पन्ने (क) ३ अतः परं 'हिरण्यं च सुवर्णं च दासीदासं तथैव च ॥' इत्यधिकं कपुस्तके ।

ततश्चेदिपुरीं रम्यां सुदेवो नाम वै द्विजः ।
विचिन्वानोऽथ वैदर्भीमपश्यद्राजवेश्मनि[1] ॥ ७
पुण्याहवाचने राज्ञः सुनन्दासहितां स्थिताम् ।
मन्दं प्रख्यायमानेन रूपेणाप्रतिमेन ताम् ॥ ८
निबद्धां धूमजालेन प्रभामिव विभावसोः ।
तां समीक्ष्य विशालाक्षीमधिकं मलिनां कृशाम् ।
तर्कयामास भैमीति कारणैरुपपादयन् ॥ ९

सुदेव उवाच—

यथेयं मे पुरा दृष्टा तथारूपेयमङ्गना ।
कृतार्थोऽस्म्यद्य दृष्ट्वेमां लोककान्तामिव श्रियं ।
पूर्णचन्द्राननां श्यामां चारुवृत्तपयोधराम् ॥ १०
कुर्वन्तीं प्रभया देवीं सर्वा वितिमिरा दिशः ।

---

( ७ ) तत इति । चेदिपुरीं चेदिदेशस्य राजधानीम् । सुदेवो नाम द्विजः ययाविति शेषः । विचिन्वानः अन्वेषयन् । अतःपरं पद्यमेक प्रक्षिप्त नावश्यकमिति न व्याख्यायते ।

( ८ ) पुण्येति । राज्ञः पुण्याहवाचने पुण्याह वाच्यतेऽस्मिन्ब्राह्मणैरिति पुण्याहवाचन नाम कर्मविशेषः । तत्र हि ' पुण्याह भवन्तो ब्रुवन्तु ' इति प्रार्थिता ब्राह्मणा ' ॐ पुण्याहम् , इति त्रिः पठन्ति । मन्द- अल्प यथा तथा प्रख्यायमानेन प्रकाशमानेन ।प्रपूर्वको हि ख्यातिः प्रकाशने । दिवादेराकृतिगणत्वाच्छ्यन् । निबद्धामित्युत्तरेण सम्बन्धः ।

( ९ ) निबद्धामिति । निबद्धा व्याप्तां युक्तामिति यावत् । विभावसोरग्नेः प्रभामिव स्थितामितिपूर्वेण सबन्धः । कारणैर्भैमीत्वसाधकैर्लक्षणादिभिः उपपादयन् समर्थयन् इय भैमीति तर्कयामास ।

( १० ) यथेति । मे मया इय अङ्गना यथा पुरा दृष्टा तथारूपा तादृशाकारा । लोककान्ता लोकैरभीष्टा लोकेषु कान्ता कान्तिमती वा । पूर्णचन्द्रनिभा पूर्णस्य चन्द्रस्य सदृशीम् । श्यामा ' शीते सुखोष्णसर्वाङ्गी ग्रीष्मे तु सुखशीतला । तप्तकाञ्चनवर्णाभा सा स्त्री श्यामेति कथ्यते ॥ ' इति भट्टिव्याख्याया भरतमल्लिकेनोक्तम् । चारुवृत्तपयोधरा चारू मनोहरौ वृत्तौ च पयोधरौ स्तनौ यस्यास्तथाभूता ।

( ११ ) अतः पर पञ्चविंश पद्य यावद्दमयन्तीमुपवर्णयाति । कुर्वन्तीमिति । देवीं दीव्यन्तीमित्यर्थः । राज्ञीं दमयन्तीमिति वा । प्रभया शरीरकान्त्या सर्वा दिशो वितिमिरा विगत तिमिर तमो याभ्यस्तथाभूताः कुर्वन्तीम् । आर्षो नुम् । कुर्वतीमिति शक्य पठितुम् । चार्विति । पद्मपदमत्र

---

[1] अत. पर ' तथैव राजमाता च ब्राह्मणान्पर्यवेषयत । भोजनार्थे सुदेवोऽपि तत्रैव प्रविवेश–ह ॥ कृशां विवर्णां मलिनां भर्तृशोकपरायणाम् । ' इत्यधिकं कपुस्तके ।

चारुपद्मविशालाक्षीं मन्मथस्य रतीमिव ॥ ११
इष्टां समस्तलोकस्य पूर्णचन्द्रप्रभामिव ।
विदर्भसरसस्तस्माद्दैवदोषादिवोद्धृताम् ॥ १२
मलपङ्कानुलिप्ताङ्गीं मृणालीमिव चोद्धृताम् ।
पौर्णमासीमिव निशां राहुग्रस्तनिशाकराम् ॥ १३
पतिशोकाकुलां दीनां शुष्कस्रोतां नदीमिव ।

पद्मपत्रे लाक्षणिकम्। चारुणी पद्मे इव विशाले अक्षिणी यस्यास्तथाभूताम्। मन्मथस्य मदनस्य रतीमिव एतत्सञ्ज्ञां भार्यामिव वर्तमानाम्। एतेन नलस्यापि लोकातिशायिस्वरूपमभिधीयते। रतिशब्दस्य क्तिन्नन्तत्वेऽपि ङीपार्षः।

(१२) इष्टामिति। पूर्णचन्द्रप्रभामिव समस्तलोकस्य सर्वस्य लोकस्य इष्टां प्रियाम्। विदर्भसरसः विदर्भदेशरूपात्सरोवरात् दैवदोषात् दैवस्य दोषात् दुष्टादैवाद्धेतुभूतादित्यर्थः उद्धृतामुत्पाटिताम्। एतेन दमयन्त्यां कमलिनीत्वारोपः सूच्यते ततश्च सौकुमार्यहृदयाह्लादकत्वादयो धर्मा अभिव्यज्यन्ते।

(१३) मलेति। मलस्य पङ्केनानुलिप्तं अङ्गं यस्यास्तथाभूताम्। विरहिणीदशायां शरीरसंस्कारस्य प्रियपरितोषमात्रहेतुकस्योपेक्षणादिति भावः। अशेषमपि हि प्रियार्थमेव साध्वीनाम्। मृणालीपक्षे तु मलो मालिन्यः पङ्कस्तेनानुलिप्तमङ्गं यस्या इत्यर्थः। प्रम्लाना नलिनीमिवेति पाठे तु नैष साधारणो धर्मः। मृणाली मृणालम्। पौर्णमासीं पूर्णो मासोऽस्मिंस्तादिनं पूर्णमास तत्सम्बन्धिनीम्। तस्येदमित्यणि टिड्ढाणञित्यादिना ङीप्। चान्द्रः किल मासः पूर्णिमान्तश्चामान्तश्चेति द्विविधः। तत्रादिमः पूर्णिमायामेव परिसमाप्यत इति। राहुग्रस्तनिशाकरा राहुणा च्छायाग्रहविशेषेण ग्रस्तः कवलितः सछन्न इति यावत् निशाकरश्चन्द्रो यस्या तथाभूता। राहुश्च क्रान्तिविषुवद्वृत्तयोः सपातविशेषो यस्य किल विलोमा गतिर्भवति। एतत्सान्निध्यमन्तरा च ग्रहणानिष्पत्तेरस्मिन् ग्रहणकर्तृत्वमारोप्यते। एतत्सान्निध्यजन्यया च भुवश्चन्द्रमसोऽपि वा छायया चन्द्रमसः सूर्यस्य वा कवलितस्येव सदर्शनाद्ग्रासकर्तृत्वमेतस्मिन्नारोप्यते आरोप्यते च ग्रहे ग्रासत्वम्। वस्तुतस्तु ग्रहणं नाम राहुसान्निध्यजन्यतया राहुणा कृतत्वेनोपवर्ण्यमानश्छायाकरणको वेध इति प्रतीयते। अत एव 'यत्त्वा सूर्य स्वर्भानुस्तमसाऽविध्यदासुर' इति श्रुतौ स्वर्भानोः कर्तृत्वमिव तमसः (छायायाः) करणत्वमुपनिबध्यमानं सङ्गच्छते। विशेषः पुनरस्मिन्विषयेऽस्माभिः प्रकाशिते ग्रहणशीर्षके प्रबन्धे द्रष्टव्यः। अत्र दमयन्तीनिशयो राहुमलपङ्कयोरनुलेपग्रासयोरङ्गनिशाकरयोश्चोपमानोपमेयभावः।

(१४) पतीति। पत्युःसम्बन्धिना शोकेन दुःखानुभवेन आकुलां व्याकुलीभूताम्। शुष्कस्रोतां शुष्कं दीनजलत्वमापन्नं स्रोत स्रोतः प्रवाहो

१ प्रम्लानां नलिनीमिव (क) मृणालीमिव तां भृशम् (च) २ इष्टा (क)

विध्वस्तपर्णकमलां वित्रासितविहंगमाम् ॥ १४
हस्तिहस्तपरिक्लिष्टां व्याकुलामिव पद्मिनीम् ।
सुकुमारीं सुजाताङ्गीं रत्नगर्भगृहोचिताम् ॥ १५
दह्यमानामिवार्केण मृणालीमिव चोद्धृताम् ।
रूपौदार्यगुणोपेतां मण्डनार्हाममण्डिताम् ॥ १६
चन्द्रलेखामिव नवां व्योम्नि नीलाभ्रसंवृताम् ।
कामभोगैः प्रियैर्हीनां हीनां बन्धुजनेन च ॥ १७
देहं धारयतीं दीनां भर्तृदर्शनकाङ्क्षया ।
भर्ता नाम परं नार्या भूषणं भूषणैर्विना ॥ १८

---

यस्यास्तथाभूताम् । स्रोतमित्यकारान्तोऽपीत्यमरटीकायां भरतः । विध्वस्तेति । विध्वस्तानि विनष्टानि पर्णानि येषां तथाभूतानि कमलानि यस्यां तथाभूता । वित्रासितविहङ्गमा वित्रासिताः संजातविनाशा विहङ्गमा हंसादयः पक्षिणो यस्यास्तथाभूताम् । वित्रासश्च विशिष्टा भीतिः । अत्र च स्रोतसश्च लावण्यस्य च, नद्याश्च दमयन्त्याश्च, कमलानां च गात्राणां च, विहङ्गमानां चालङ्करणानां चोपमानोपमेयभावो गम्यते ।

(१५) हस्तीति । हस्तिहस्तपरामृष्टां हस्तिनो गजस्य हस्तेन शुण्डया परामृष्टां स्पृष्टां तत एव च व्याकुलां क्लेशमनुभवन्तीम् । पद्मिनीं कमलिनीमिव । दुर्दैवमत्र हस्तिहस्तोपमेयम् । सुजातानि शोभनं जात प्रकारो येषां तथाभूतानि अङ्गानि यस्यास्ताम् । शोभनजातीयाङ्गवतीमित्यर्थः। रत्नगर्भगृहोचितां रत्नानां गर्भगृहोचिता गर्भगृहस्य उचितां योग्याम् । गर्भगृहामिति राजदन्तादित्वात्परनिपातः। गृहस्य गर्भ इत्यर्थः।रत्नमये गर्भगृहे स्थातुं योग्यामित्यर्थः।

( १६ ) दह्यमानामिति । अर्केण दह्यमानामुद्धृतां मृणालीमिवेत्यर्थः । एकः पुनरधिकोऽत्रेवकार आर्षत्वात्सोढव्यः । रूपेति । रूपस्य सौन्दर्यस्य औदार्येण महत्तया उत्कर्षेणेत्यर्थः । गुणैश्च उपेतां युक्ताम् । मण्डनार्हामलङ्करण योग्याम् । अमण्डितामनलङ्कृताम् । पतिविरहादिति भावः । 'उदारो दातृमहतो' रिति मेदिनी ।

( १७ ) चन्द्रलेखामिति । नवां प्रातिपदिकीम् । एतेन कार्शीमातिशयो द्योत्यते । चन्द्रलेखा चन्द्रस्य कलाम् । एतेन च निसर्गत एवाल्हादककान्तिविशिष्टत्वमाभिव्यज्यते । व्योम्नीति निरालम्बत्व ध्वन्यते । नीलाभ्रसवृताम् नीलैर्मेघैश्छन्नाम् । एतेन म्लानिविशेषो गम्यते । प्रियैरभीष्टैः कामभोगैः कामानामभीष्टवस्तूनां भोगैरासेवनैः हीनां शून्याम् ।

( १८ ) देहामिति । धारयतीमित्यागमशास्त्रस्यानित्यत्वान्न नुम् । भर्तृदर्शनकाङ्क्षया पतिदर्शनप्रत्याशया धारयन्तीम् । भूषणैर्विनापि वर्तमानाया नार्या भर्ता नाम पर श्रेष्ठ भूषणम् । उत्तरान्वयीदमर्धम् । भर्त्रा हि विशिष्टा एता अमण्डिता अपि मण्डिताभ्योऽपि भर्तृहीनाभ्यः सविशेष शोभन्त इत्यर्थः ।

एषा हि रहिता तेन शोभमाना न शोभते ।
दुष्करं कुरुतेऽत्यन्तं हीनो यदनया नलः ॥ १९
धारयत्यात्मनो देहं न शोकेनापि सीदति ।
इमामसितकेशान्तां शतपत्रायतेक्षणाम् ॥ २०
सुखार्हां दुःखितां दृष्ट्वा ममापि व्यथते मनः ।
कदा नु खलु दुःखस्य पारं यास्यति वै शुभा ॥ २१
भर्तुः समागमात्साध्वी रोहिणी शशिनो यथा ।
अस्या नूनं पुनर्लाभान्नैषधः प्रीतिमेष्यति ॥ २२
राजा राज्यपरिभ्रष्टः पुनर्लब्ध्वा च मेदिनीम् ।
तुल्यशीलवयोयुक्तां तुल्याभिजनसंवृताम् ॥ २३
नैषधोऽर्हति वैदर्भी तं चेयमसितेक्षणा ।
युक्तं तस्याप्रमेयस्य वीर्यसत्त्ववतो मया ॥ २४
समाश्वासयितुं भार्यां पतिदर्शनलालसाम् ।

( १९ ) एषेति । हि यतः तेन भर्त्रा । शोभमाना अपीति गम्यते । प्रकृत्या शोभावत्यपि शोभां नावहतीत्यर्थः । दुष्करमित्युत्तरान्वय्यर्धम् ।

( २० ) धारयतीति । यत् अनया हीनो नलः आत्मनो देहं धारयति जीवतीत्यर्थः । यच्च शोकेन नावसीदति न शीर्णो भवति तदेतदत्यर्थमत्यन्त दुष्कर अन्यैर्दुःखेन कर्तुं शक्य अशक्यकरण वा कुरुते । इमामित्यर्धमुत्तरान्वयि । असितकेशान्ता कृष्णकेशपाशाम् । शतपत्रायतेक्षणा शतमनेकानीत्यर्थः पत्राणि दलानि यस्य तत्कमलमिव आयते ईक्षणे नेत्रे यस्यास्ताम् । ' कमल शतपत्रं कुशेशय ' मित्यमरः ।

( २१) सुखार्हामिति । कदेत्यर्धमुत्तरान्वयि । दुःखस्य पार परतीर परिसमाप्तिमित्यर्थः । पारपद च दुःखेऽम्बुधित्वारोप गमयति ।

( २२ ) भर्तुरिति । रोहिणी नक्षत्रविशेषः । सा हि रोहित (रक्त) वर्णा भवतीति । रोहितशब्दात् ' वर्णादनुदात्तात्तोपधात्तो न ' इति ङीप् नश्च । अरिमश्च । नक्षत्रे पञ्च तारका भवन्ति । शकटतुल्यश्चाकार एतस्य । उक्तं हि रत्नमालायां नक्षत्रतारकानिर्देशे ' वह्निस्त्रिर्त्र्यृतुबाणेषु ' इति क्रमेण नक्षत्रतारा यस्थानम् । आकारोऽपि तत्रैव ' तुरंगमुखसदृश योनिरूप क्षुराभ शकटसमं मथैणस्योत्तमाङ्गेन तुल्यम् । ' इति । रोहिणी च शशिनः सहधर्मिणीति प्राचां समयः । अस्या इत्यर्धमुत्तरान्वयि ।

( २३ ) राजेति । तुल्येत्यर्धमुत्तरान्वयि । तुल्येति । तुल्येन शीलेन वयसा च युक्ताम् । तुल्याभिजनसंवृताम् तुल्येन अभिजनेन कुलेन संवृतां सम्यक्स्वीकृतां युक्तामित्यर्थः

( २४ ) नैषध इति । असितेक्षणा नीललोचना । युक्तमित्यर्धमुत्तरान्वयि । मया तस्य भार्यां समाश्वासयितुं युक्तमिति सम्बन्धः। अप्रमेयस्य

१ लब्ध्वेव ( क. च. )

अहमाश्वासयाम्येनां पूर्णचन्द्रनिभाननाम् ।
अदृष्टदुःखां दुःखार्तां ध्यानतत्परायणपरसम् ॥ २५

बृहदश्व उवाच ।

एवं विमृश्य विविधैः कारणैर्लक्षणैश्च ताम् ।
उपगम्य ततो भैमीं सुदेवो ब्राह्मणोऽब्रवीत् ॥ २६
अहं सुदेवो वैदर्भि भ्रातुस्ते दयितः सखा ।
भीमस्य वचनाद्राज्ञस्त्वामन्वेष्टुमिहागतः ॥ २७
कुशली ते पिता राज्ञि जननी भ्रातरश्च ते[1] ।
आयुष्मन्तौ कुशलिनौ तत्रस्थौ दारकौ च तौ ॥ २८
त्वत्कृते बन्धुवर्गाश्च गतसत्त्वा इवासते ।
अन्वेष्टारो ब्राह्मणाश्च भ्रमन्ति शतशो महीम् ॥ २९

बृहदश्व उवाच ।

अभिज्ञाय सुदेवं तं दमयन्ती युधिष्ठिर ।

---

प्रमातु तत्त्वतो विज्ञातुमशक्यस्य । लोकातिशयित्वाद्दुर्विज्ञेयस्वरूपस्येत्यर्थः । वीर्यसत्त्ववतः शौर्यधैर्यविशिष्टस्य ।

( २५ ) समाश्वासयितुमिति । समाश्वासयितु पित्रादिवृत्तनिवेदनेन धैर्येण योजयितुम् । दुःखस्येति शेषे षष्ठी । दुःखेनेत्यर्थः । अदृष्टपूर्वा पूर्व न दृष्टाम् । अस्या अवस्थिते' प्रागस्पृष्टदुःखामित्यर्थः । दुःखानर्हामिति भावः । ध्यानतत्परा चिन्ताया प्रसक्ताम् ।

( २६ ) एवमिति । एवमुक्तप्रकारेण कारणैर्भैमीत्वसाधकैः ' यथेय मे पुरा दृष्टे ' त्यादिभिः । लक्षणैर्दमयन्तीत्वनिश्चायकैश्चिह्नैः एतानि चाध्यायेऽस्मिन्ननुक्तप्रायाण्यध्यायान्तरे वक्ष्यन्ते ' अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तम ' इत्यादीनि । ता विमृश्य विचार्य ज्ञात्वेत्यर्थः ।

(२७) अहमिति ! दयितः प्रिय' सखा मित्रम् । वचनात् प्रार्थनारूपात् ।

( २८ ) कुशलीति । हे राज्ञि राजभार्ये दमयन्ति । भ्रातरः कुशलिन इति वचनविपरिणामेन सबन्ध. । आयुष्मन्तौ दीर्घायुषौ । एतच्च वृद्धैः कनीयस्सु प्रयोक्तव्यमुपपदम् । दारकौ दारकश्च दारिका च कन्याकुमारावित्यर्थः । तौ हि पितृगृहे प्रहितावनयेति ।

( २९ ) त्वत्कृत इति । त्वत्कृते त्वदर्थम् बन्धुवर्गो बान्धवाना समूहाः । गतसत्त्वा गतप्राणा गतधैर्या अपगतबला इव वा आसते सन्तीत्यर्थः । प्रयुञ्जते किल धातूनामनेकार्थत्वात्सत्तायामास्तिं कवयः । अन्वेष्टारस्त्वदन्वेषणकर्तारः । शतशोऽसंख्याता इत्यर्थः ।

( ३० ) अभिज्ञायेति । त ब्राह्मण सुदेव अभिज्ञाय तद्वचननादिना ज्ञात्वा । अभिज्ञान हि दृष्टपूर्वस्य लक्षणादिना ज्ञानम् । तान् अनुभूतपूर्वान्

---

[1] ते ( क च. )

पर्यपृच्छत तान्सर्वान्क्रमेण सुहृदः स्वकान् ।
रुरोद च भृशं राजन्वैदर्भी शोककर्षिता ॥ ३०
दृष्ट्वा सुदेवं सहसा भ्रातुरिष्टं द्विजोत्तमम् ।
ततो रुदन्ती तां दृष्ट्वा सुनन्दा शोककर्षिता ॥ ३१
सुदेवेन सहैकान्ते कथयन्ती च भारत ।
जनित्र्याः कथयामास सैरन्ध्री रुदते भृशम् ॥ ३२[1]
ब्राह्मणेन सहागम्य तां विद्धि यदि मन्यसे ।
अथ चेदिपतेर्माता राज्ञश्चान्तःपुरात्तदा ॥ ३३
जगाम यत्र सा बाला ब्राह्मणेन सहाभवत् ।
ततः सुदेवमानाय्य राजमाता विशांपते ॥ ३४
पप्रच्छ भार्या कस्येयं सुता वा कस्य भाविनी ।
कथं च नष्टा ज्ञातिभ्यो भर्तुर्वा वामलोचना ॥ ३५

स्वकान् सुहृदो मित्राणि पर्यपृच्छत पृष्टवती । आर्षमात्मनेपदम् । कथमयं ? कथं सः? इत्यादि स्वीयमित्रविषये पृष्टवतीत्यर्थः । शोककर्षिता शोकेनाकृष्टा भृशमत्यन्तम् । इत आरभ्य प्रायेणाध्यायान्तं यावदुत्तरोत्तरपद्यान्वयि पूर्वपूर्वपद्योत्तरार्धम् ।

( ३१ ) रोदने कारणमाह दृष्ट्वेति । ' स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते । ' इति भावः । भ्रातुः इष्ट प्रियम् । रुदन्तीमित्यार्षो नुम् । सुनन्दा चेदिराजपुत्री । ता दमयन्तीं रुदन्तीम् ।

( ३२ ) सुदेवेनेति । च किंच एकान्ते सुदेवेन सह कथयन्तीं कथां कुर्वतीं दृष्ट्वा । जनित्र्याः मातुः । शेषे षष्ठी । मातु इत्यर्थः । कथनमाह सैरन्ध्रीति।

( ३३ ) ब्राह्मणेनेति । ब्राह्मणेन सहागम्य समागता भूत्वा । भृश रुदती आस्त इति सशेषेण पूर्वेण सम्बन्धः । यदि मन्यसे तर्हीति शेषः । तां वेद जानीहि । गणकार्यस्यानित्यत्वाच्छप् । अथेति । राज्ञः चेदिपतेः चेदिदेशाधीशस्य माता अन्तःपुरात् निर्गम्येति शेषः ।

( ३४ ) जगामेति । यत्र सा बाला दमयन्ती । तत्रेति शेषः। जगाम । अस्याश्चागमनतः प्रागेव सुदेवस्य दमयन्तीतः प्रतिगमन प्रतीयते । अत एवोक्तं ततः सुदेवमानाय्येति । आनाय्य दूतादिभिराहूय समीपमानीयेत्यर्थः ।

( ३५ ) पप्रच्छेति । प्रश्नमाह भार्येति । इय भाविनी प्रेमवती स्त्री दमयन्ती । ज्ञातिभ्यो बान्धवेभ्यः नष्टा प्रभ्रष्टा वियोग प्राप्तेत्यर्थः । ज्ञातीन्विहाय अदर्शनं गतेति वा । ल्यब्लोपे पञ्चमी । वामलोचना वामे मनोहरे लोचने यस्यास्तथाभूता ।भर्तुर्वा कथं नष्टेति सबन्धः ।

[1] प्रेषयामास ( क ) जनिर्त्र्यै प्रेषयामास ( च ) जनित्र्या कथयामास ( क

त्वया च विदिता विप्र कथमेवंगता सती ।
एतदिच्छाम्यहं श्रोतुं त्वत्तः सर्वमशेषतः ॥ ३६
तत्त्वेन हि ममाचक्ष्व पृच्छन्त्या देवरूपिणीम् ।
एवमुक्तस्तया राजन्सुदेवो द्विजसत्तमः ।
सुखोपविष्ट आचष्ट दमयन्त्या यथातथम् ॥ ३७
इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
अष्टषष्टितमोऽध्यायः ।

## एकोनसप्ततितमोऽध्यायः ।

सुदेव उवाच ।
विदर्भराजो धर्मात्मा भीमो भीमपराक्रमः ।
सुतेयं तस्य कल्याणी दमयन्तीति विश्रुता ॥ १
राजा तु नैषधो नाम वीरसेनसुतो नलः ।
भार्येयं तस्य कल्याणी पुण्यश्लोकस्य धीमतः ॥ २
स द्यूतेन जितो भ्रात्रा हृतराज्यो महीपतिः ।
दमयन्त्या गतः सार्धं न प्राज्ञायत कस्यचित् ॥ ३
ते वयं दमयन्त्यर्थे चरामः पृथिवीमिमाम् ।

(३६) त्वयेति । एवंगता एवमस्मिन्प्रकारे अस्या दशायामित्यर्थः गता विद्यमाना सती त्वया कथं विदिता ज्ञाता । त्वत्तस्तव सकाशात् । अशेषतः साकल्येन ।

(३७) तत्त्वेनेति पृच्छन्त्या मम पृच्छन्त्यै मह्यमित्यर्थः । तत्त्वेन यथार्थतया देवरूपिणीं देवतुल्यरूपशालिनीं दमयन्तीं आचक्ष्व कथय अस्याः पारमार्थिकं स्वरूपं कथयेत्यर्थः । सुखोपविष्टः सुखेनोपविष्टः यथातथं तथा पारमार्थिकं स्वरूपमनतिक्रम्य वर्तते तथाभूतम् । वृत्तमिति शेषः । आचष्ट कथितवान् । आङ्पूर्वाच्चक्षिङो लङ् ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यामष्टषष्टोऽध्यायः ।

(१) विदर्भराज इति । धर्मात्मा धर्म एवात्मा जीवो यस्य तथाभूतः । धर्मे आत्मा मनो यस्येति वा । भीमो नाम भीम इति प्रसिद्धः । विश्रुता प्रसिद्धा । इयं कल्याणी दमयन्तीति विश्रुता तस्य सुतेति सम्बन्धः ।

(२) राजेति । नामेति नल इत्यस्मादुत्तरं योज्यम् । नलो नामेत्यर्थः । नैषधो निषधानामीश्वरः । धीमतो ज्ञानिनः ।

(३) स इति । द्यूतेन करणभूतेन भ्रात्रा पुष्कराख्येन कर्त्रा । दमयन्त्या सार्धं सह गतः सन् । कस्यापि केनापि । शेषे षष्ठी । न प्राज्ञायत न विज्ञातः ।

(४) त इति । ते अविज्ञातवन्तः । शैलीयं संस्कृतभाषाविदां यदेते

1 महामनाः (क)

सेयमासादिता बाला तव पुत्रनिवेशने ॥ ४
अस्या रूपेण सदृशी मानुषी न हि विद्यते ।
अस्या ह्येष भ्रुवोर्मध्ये सहजः पिप्लुरुत्तमः ॥ ५
श्यामायाः पद्मसंकाशो लक्षितोऽन्तर्हितो मया ।
मलेन संवृतो ह्यस्याश्छन्नोऽभ्रेणेव चन्द्रमाः ॥ ६
चिह्नभूतो विभूत्यर्थमयं धात्रा विनिर्मितः ।
प्रतिपत्कलुषेस्येन्दोर्लेखा नातिविराजते ॥ ७
न चास्या दृश्यते रूपं वपुर्मलसमाचितम् ।

हेतौ वक्तव्ये तच्छब्देनैव कानिद्विशेषयन्ति कर्तारम् । अत एव चैवंविधेषु स्थलेषु तस्मादित्यवसेयोऽर्थः । एवं चात्रापि तस्माद्वयमित्यर्थः । तव पुत्रनिवेशने पुत्रस्य गृहे पुत्रस्यैवाधीश्वरत्वात्स्वाम्येन निर्देशः ।

(५) अत्रापि पुनः कथमिय विज्ञातेत्याह । अस्या इति । रूपेण सौन्दर्येण । प्रकृत्यादित्वात्तृतीया । अस्या दमयन्त्याः सदृशी तुल्या । नहि नैव । 'हि हेतावधारणे' इत्यमरः । अतोऽसौ विज्ञातेत्यर्थः । अभिज्ञानान्तरमाह अस्या इति । एष मया दृश्यमानः । सहजः सह जातः नैसर्गिक इत्यर्थः । पिप्लुः कालकापरपर्यायो 'लासे' इति महाराष्ट्र्यां ख्यातश्चिह्नविशेषः । रक्तवर्णतिलाकृतिश्चिह्नविशेष इति नीलकण्ठः । तिलकालक इति चतुर्भुजः । 'जडुलः कालकः पिप्लु' रित्यमरः । उत्तमः । शुभसूचकत्वात्तस्येति भावः । अस्य च लक्षित इत्युत्तरेण सम्बन्धः ।

( ६ ) श्यामाया इति । श्यामायाः सुन्दर्याः । पद्मसकाशः पद्मस्य सदृशः। आरक्तवर्ण इत्यर्थः । अन्तर्हितो मलच्छन्नत्वात्तिरोभूतः । लक्षितो दृष्टः । अस्या इत्यस्य चिह्नभूत इत्यनेनोत्तरेण सम्बन्धः ।

( ७ ) चिह्नभूत इति । चिह्नभूतो लक्षणभूतः । लक्षण चात्र ' खुण ' इति महाराष्ट्र्यां ख्यात ज्ञानसाधनम् । विभूत्यर्थं ऐश्वर्यार्थम् । ऐश्वर्यप्रदानार्थमित्यर्थः । ' भ्रुवोरन्ते ललाटे वा ( स्त्रीणां ) मशको राजसूचकः । ' इति सामुद्रिकम् । मशकश्च पिप्लुः । भ्रुवोरन्ते भ्रूमध्ये । धात्रा ब्रह्मणा । प्रतिपदित्याद्यर्धमुत्तरान्वयि । प्रतिपदा मासारम्भतिथ्या । प्रतिपद्यत उपक्रम्यतेऽनया मासः ( पक्षो वा ) प्रतिपत् । करणे क्विप् बाहुलकात् । कलुषस्य कलुषवदाविस्पष्टस्वरूपप्रकाशस्य । ' कलुष त्वाविले पापे ' इति मेदिनी । इन्दोर्लेखा चन्द्रस्य कला नातिविराजते नात्यन्त शोभते ।

( ८ ) नेति । अस्याश्च । रूपं न दृश्यते न स्वयमेव दृशोर्विषयीभवति । अविस्पष्टत्वादिति भावः । एव च नात्यन्त प्रकाशत इत्यर्थः । दृशेः कर्मकर्तरि लट् । अत्र च वाक्ययोः साम्यस्य गम्यत्वादेकस्यैव च विराजनरूपस्य धर्मस्य पार्थक्येन निर्देशात्प्रतिवस्तूपमालङ्कारः । ' प्रति-

१ दीप ( क ) २ नश्यते ( क )

असंस्कृतमपि व्यक्तं भाति काञ्चनसन्निभम् ॥ ८
अनेन वपुषा बाला पिप्लुनाऽनेन सूचिता ।
लक्षितेयं मया देवी पिहितोऽग्निरिवोष्मणा ॥ ९
तच्छ्रुत्वा वचनं तस्य सुदेवस्य विशांपते ।
सुनन्दा शोधयामास पिप्लुप्रच्छादनं मलम् ॥ १०
स मलेनापकृष्टेन पिप्लुस्तस्या व्यरोचत ।
दमयन्त्या यथा व्यभ्रे नभसीव निशाकरः ॥ ११
पिप्लुं दृष्ट्वा सुनन्दा च राजमाता च भारत ।
रुदन्त्यौ तां परिष्वज्य मुहूर्तमिव तस्थतुः ॥ १२
उत्सृज्य बाष्पं शनकै राजमातेदमब्रवीत् ।
भगिन्या दुहिता मेऽसि पिप्लुनानेन सूचिता ॥ १३
अहं च तव माता च राजन्यस्य महात्मनः ।

---

वस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः । एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक् ।' इति लक्षणात् । मलसमाचितं मलेन व्याप्तं वपुः शरीरं कर्तृ असंस्कृतं निर्मलीकरणादिसंस्कारशून्यमपि व्यक्तं स्पष्टं यथा तथा काञ्चनसन्निभं सुवर्णतुल्यं भाति ।

( ९ ) उपसंहरति अनेनेति । निभृतो भस्मादिषु निगूढः ऊष्मणा सूचितः अग्निरिव । अनेन वपुषा अनेन पिप्लुना च कर्तृभूतेन सूचिता ज्ञापिता इयं देवी राज्ञी दमयन्ती । लक्षिता ज्ञातेत्यर्थः ।

( १० ) तदिति । विशांपते राजन्युधिष्ठिर । पिप्लुप्रच्छादनं पिप्लुप्रच्छादयन्तं मलं शोधयामास दूरीचकारेत्यर्थः ।

( ११ ) स इति । अपकृष्टेन क्षीणतामापन्ने[1] । मलस्यापकर्षणादित्यर्थः । शैलीय भाषाया यत्क्रियाया हेतुत्वे वक्तव्ये निष्ठान्तमेव हेतुगर्भतया विधेयविशेषणतामापाद्यत इति । व्यरोचत विशेषेण प्राकाशत । व्यभ्रे विगतान्यभ्राणि मेघाः यस्मात्तथाभूते ।

( १२ ) पिप्लुमिति । रुदन्त्याविति । आत्मनः संनिकृष्टसंबन्धित्वावगमाद्दमयन्त्या इति भावः । परिष्वज्य आलिङ्ग्य । मुहूर्तमिव क्षणमिव ।

( १३ ) उत्सृज्येति । बाष्पं उत्सृज्य बाष्पोत्सर्गानन्तरम् । शनकैः शनैः । 'अव्ययसर्वनाम्नामकच् प्राक्टेः' रित्यकच् । इदं वक्ष्यमाणम् । वचनमेवाह भगिन्या इति । अनेन पिप्लुना सूचिता त्वं मे भगिन्या दुहिताऽसीति सम्बन्धः ।

( १४ ) उक्तमर्थं विवृणोति । अहमिति । सुदाम्नः सुदामसंज्ञकस्य दशार्णाधिपतेः दशार्णसंज्ञकदेशाधिनायस्य राज्ञः सुते दुहितरौ । हे चारुदर्शने मनोहरस्वरूपे दमयन्ति । दश ऋणानि जलानि दुर्गाणि वा यस्मि-

---

[1] अत्र परं 'बृहदश्व उवाच' इति क्वचित्पुस्तके ।

सुते दशार्णाधिपतेः सुदाम्नश्चारुदर्शने ॥ १४
भीमस्य राज्ञः सा दत्ता वीरबाहोरहं पुनः ।
त्वं तु जाता मया दृष्टा दशार्णेषु पितुर्गृहे ॥ १५
यथैव ते पितुर्गेहं तथेदमपि भाविनि ।
यथैव च ममैश्वर्यं दमयन्ति तथा तव ॥ १६
तां प्रहृष्टेन मनसा दमयन्ती विशांपते ।
प्रणम्य मातुर्भगिनीमिदं वचनमब्रवीत् ॥ १७
अज्ञायमानाऽपि सती सुखमस्म्युषिता त्वयि ।
सर्वकामैः सुविहिता रक्ष्यमाणा सदा त्वया ॥ १८
सुखात्सुखतरो वासो भविष्यति न संशयः ।

---

न्स दशार्णो देशः । ऋणशब्दो दुर्गं च जलं चाचष्टे । 'प्रवत्सतरे' त्यादिना वृद्धिः । दशार्णाख्यश्च देशो मध्यभारतवर्ती । निर्दिष्टश्चैष मेघसंदेशे कालिदासेन । ' संपत्स्यन्ते कतिपयदिनस्थायिहंसा दशार्णा ' इति । यक्षः किल मेघायालकाया मार्गं निर्दिशन्नादितो रेवा ( नर्मदा ) ततः कांश्चित्पर्वतास्ततश्च परं दशार्णान्निर्दिशति । उदीचीनदेशगामी चायं मार्गः । ततश्च प्रतीयते नर्मदामुत्तरेण केचिच्छैला (विन्ध्यच्छेदा ) तानपि चोत्तरेण दशार्णा इति । येषां किल राजधानी विदिशा नाम वेत्रवत्या नाम सरितस्तीरे विनिविष्टा । निस्पष्टीकृतं चैतन्मेघसंदेशे कालिदासेन । यथा तेषां ( दशार्णाना ) दिक्षु प्रथितविदिशालक्षणां राजधानीं गत्वा सद्यः फलमविकलं कामुकत्वस्य लब्धा । तीरोपान्तस्तनितसुभगं पास्यसि स्वादु यस्मात्सभ्रूभङ्गं मुखमिव पयो वेत्रवत्याश्चलोर्मि ॥ ' । इति । विदिशासंनिहितश्च नीचैर्नाम गिरिः । स चायं प्रदेशो मालवसंनिहित इत्यर्वाचीनाः ।

( १५ ) भीमस्येति । सा त्वन्माता भीमस्य राज्ञः राज्ञे भीमाय शेषे षष्ठी । वीरबाहोः चेदिदेशाधिपतये । तस्मै इत्यर्थः । शेषे षष्ठी । दशार्णेषु-दशार्णदेशे पितुः मदीयस्य तातस्य । जाता जातमात्रेत्यर्थः । ततः प्रभृत्यद्य-यावदर्शनात्परिचयाभाव इति भावः ।

( १६ ) यथैवेति । ते तव यथा पितुर्गेहं तथैव मम । यथा च ऐश्वर्यमेतद्वैभवं मम तथा तव । अत्र गेहे चैश्वर्ये च यादृशो मे स्वाम्यं तादृशमेव तवापि दुहितृस्थानीयत्वात्तवेति भावः ।

( १७ ) तामिति । तां मातुर्भगिनीं प्रणम्य नमस्कृत्य । इदं वक्ष्यमाणम् ।

( १८ ) वचनमाह । अज्ञायमानेति । त्वयेति शेषः । त्वयि त्वत्समीपे सुखं यथा तथा उषिता कृतवासा अस्मि । यतः सर्वकामैः सर्वैरभीष्टवस्तुभिः सुविहिता सम्यक् संयोजिता ।

( १९ ) गमनाभ्यनुज्ञां प्रार्थयितुमुपक्रमते । सुखादिति । सुखात्पूर्वमनुभूतात् सुखविशिष्टात्सुखहेतोर्वा वासात् सुखतरः अत्यन्तं सुखविशिष्टः सुख-

चिरविप्रोषितां मातर्मामनुज्ञातुमर्हसि ॥ १९
दारकौ च हि मे नीतौ वसतस्तत्र बालकौ ।
पित्रा विहीनौ शोकार्तौ मया चैव कथं नु तौ ॥ २०
यदि चापि प्रियं किंचिन्मयि कर्तुमिहेच्छसि ।
विदर्भान्यातुमिच्छामि शीघ्रं मे यानमादिश ॥ २१
बाढमित्येव तामुक्त्वा हृष्टा मातृष्वसा नृप ।
गुप्तां बलेन महता पुत्रस्यानुमते ततः ॥ २२
प्रास्थापयद्राजमाता श्रीमतीं नरवाहिना ।
यानेन भरतश्रेष्ठ स्वन्नपानपरिच्छदाम् ॥ २३
ततः सा नचिरादेव विदर्भानगमत्पुनः ।
तां तु बन्धुजनः सर्वः प्रहृष्टः समपूजयत् ॥ २४

---

हेतुर्वा वासः इतःपरभावी भविष्यति । सम्बन्धस्य विज्ञातत्वादिति भावः । तथापि हे मातः मातृष्वसः । तस्या अपि मातृतुल्यत्वान्मातृत्वनिर्देशः । चिरविप्रोषिता चिरमेव कृतप्रवासाम् । विप्रपूर्वाद्वसतेः कर्तरि निष्ठा । अथ मनुज्ञाप्रदाने हेतुः ।

( २० ) नन्विदमात्मीयमेव ते सदन तत्किमितो गमनेनेति चेत्तत्राह दारकाविति । मे दारकौ कन्यापुत्रौ बालकौ अत्यन्तं बालभावे वर्तमानौ तत्र मत्पितुर्गृहे नीतौ तौ पित्रा मया च विहीनौ कथ नु वसतः । वत्स्यत इत्यर्थः। अतोऽवश्यं मया गन्तव्यामिति भावः ।

( २१ ) यदीति । इह अत्र गृहे मयि मद्विषये । यदि इच्छसि तर्हीति शेषः। यानं प्रयाणसाधन वाहन आदिश दीयतामित्याज्ञापय। एतदेव हि मे प्रियं न पुनर्वास इति भावः ।

(२२) बाढमिति । बाढमिति स्वीकारे। ततः पुत्रस्यानुमते सति अनुज्ञाया सत्याम्। तृतीयार्थे वा सप्तमी। प्रयुज्यते ह्येवमसावत्रानेकेषु स्थलेष्विति। अनुमते वर्तमानेति वा। महता बलेन सैन्येन गुप्ता रक्षिता प्रास्थापयदित्युत्तरेण संबन्धः ।

( २३ ) प्रास्थापयदिति । स्वन्नपानपरिच्छदां शोभनमन्न पान परिच्छदा परिवारश्च यस्यास्तथाभूतां कृत्वेति शेषः । श्रीमतीं शोभासपन्नां दमयन्तीम् । नरवाहिना नरा एव वाहा वोढारस्ते सन्त्यस्य तथाभूतेन मनुष्यवाह्येनेत्यर्थः । मत्वर्थ इनिः । यानेन । एतच्च 'पालखी, मेणा' इति वा ख्यातम् । ' मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ' इति कालिदासः। प्रास्थापयत्प्रेषयामास ।

( २४ ) तत इति । नचिरात् अचिरेण । प्रहृष्टस्तद्दर्शनेनेति भावः । समपूजयत् सभावयामास सत्कारेत्यर्थः।

---

१ शुभा ( क. च. )

सर्वान्कुशलिनो दृष्ट्वा बान्धवान्दारकौ च तौ ।
मातरं पितरं चोभौ सर्वं चैव सखीजनम् ॥ २५
देवताः पूजयामास ब्राह्मणांश्च यशस्विनी ।
परेण विधिना देवी दमयन्ती विशांपते ॥ २६
अतर्पयत्सुदेवं च गोसहस्रेण पार्थिवः ।
प्रीतो दृष्ट्वैव तनयां ग्रामेण द्रविणेन च ॥ २७
सा व्युष्टा रजनीं तत्र पितुर्वेश्मनि भाविनी ।
विश्रान्ता मातरं राजन्निदं वचनमब्रवीत् ॥ २८

दमयन्त्युवाच ।

मां चेदिच्छसि जीवन्तीं मातः सत्यं ब्रवीमि ते ।
[2]नरवीरस्य वै तस्य नलस्यानयने यत ॥ २९
दमयन्त्या तथोक्ता तु सा देवी भृशदुःखिता ।

---

( २५ ) सर्वानिति । सर्वान् बान्धवान् कुशलिनः कुशलवतो दृष्ट्वा । तौ आत्मीयौ दारकौ । दृष्ट्वेत्यस्योत्तरेण सम्बन्धः ।

( २६ ) देवता इति । यशस्विनी प्रशस्तयशःशालिनी देवी राज्ञी दमयन्ती परेण उत्कृष्टेन विधिना विधानेन देवता ब्राह्मणांश्च पूजयामास । एतेषामेव हि प्रसादेन कुशलं भवतीति । विशांपते नरेश्वर युधिष्ठिर ।

( २७ ) अतर्पयदिति । पार्थिवो राजा भीमः । गोसहस्रेण करणभूतेन अतर्पयत् तृप्तं कृतवान् । तदस्मै समर्पयामासेत्यर्थः । 'गवां सहस्रं दास्यामि यो वस्तावानयिष्यति ।' इति प्राक्प्रतिज्ञातत्वादिति भावः । ग्रामेण द्रविणेन च करणभूतेन अतर्पयदिति सम्बन्धः । 'अग्रहारांश्च दास्यामि ग्रामं नगरसम्मित' मिति प्रतिश्रवणादिति भावः । धनं पुनः पुरस्कारार्थमप्रतिश्रुतमपि प्रादायि । तत्र हेतुः । तनयां दृष्ट्वैवेति । प्रीतः प्रमुदितः ।

( २८ ) सेति । सा भाविनी दमयन्ती तत्र पितुर्वेश्मनि रजनीं समग्रायां रात्रौ । अत्यन्तसंयोगे द्वितीया । व्युष्टा कृतवसतिः । एष विश्रान्तत्वे हेतुः । विपूर्वाद्वसे क्तः । आगमशास्त्रस्यानित्यत्वात् ' वसतिक्षुधोरिट् 'इतीण्न भवति आर्षत्वाद्वा । विश्रान्ता लब्धविश्रमा । राजन् युधिष्ठिर । अत्रैव विच्छेदयन्ति केचिदध्यायम् । नैव पुनरेतद्युक्तमविच्छेदार्हत्वात्कथायाः[1] ।

( २९ ) वचनमाह मामिति । आनयने आनयनविषये यत प्रयत्नं कुरु । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् ।

( ३० ) दमयन्त्येति । सा देवी राज्ञी दमयन्त्या जननी । भृशदुःखिता अत्यन्त दुःखिता बाष्पेण अपिहिता आच्छन्ना । सावेग प्रवृत्तस्य गात्रे प्रसर्पणादिदिति भावः। एतेन दुःखातिशयो व्यज्यते । किंचिदुत्तरं नाब्रवीत् ।

---

१ अत्र. परमेवाध्यायस्य विच्छेदो दमयन्त्युवाचेत्युत्तराध्यायारम्भश्च कचपुस्तकयोः
२ नलस्य नरवीरस्य यतस्वानयने पुनः ( क )

बाष्पेणापिहिता राज्ञी नोत्तरं किंचिदब्रवीत् ॥ ३०
तदवस्थां तु तां दृष्ट्वा सर्वमन्तःपुरं तदा ।
हाहाभूतमतीवासीद्भृशं च प्ररुरोद ह ॥ ३१
ततो भीमं महाराज भार्या वचनमब्रवीत् ।
दमयन्ती त्वां भृशं भर्तारमनुशोचति ॥ ३२
अपकृष्य च लज्जां सा स्वयमुक्तवती विभो ।
प्रयतन्तु तत्र प्रेष्याः पुण्यश्लोकस्य मार्गणे ॥ ३३
तया प्रदेशितो राजा ब्राह्मणान्वशवर्तिनः ।
प्रास्थापयद्दिशः सर्वा यतध्वं नलमार्गणे ॥ ३४
ततो विदर्भाधिपतेर्नियोगाद्ब्राह्मणास्तदा ।
दमयन्तीमथो गत्वा प्रस्थितास्ते तथाऽब्रुवन् ॥ ३५
अथ तानब्रवीद्वैमी सर्वराष्ट्रेष्विदं वचः ।

---

बाष्पनिरुद्धत्वेन कण्ठस्य वक्तुमशक्यत्वादिति भावः । ' मृते हि दुःख मातृणां कन्याः पितृविनाकृताः । ' इति भावः ।

( ३१ ) तदवस्थामिति । तां राज्ञीं । तदवस्थां सा अवस्था यस्यास्तथाभूतां दृष्ट्वा अन्तःपुरं अन्तःपुरवासिजनवृन्दम् । तात्स्थ्यात्तदुपचारः । मञ्चाः क्रोशन्तीतिवत् । हाहाभूतं हाहाकारात्मतामिव प्राप्तम् । सर्वत एव हाहारवस्य प्रवृत्तत्वादिति भावः । हकारः पादपूरणे ।

( ३२ ) तत इति । महाराज युधिष्ठिर महाराजमिति पाठे तु भीमविशेषणमेतत् । वचनमाह दमयन्तीति ।

( ३३ ) अपकृष्येति । लज्जां अपकृष्य न्यूनीकृत्य स्वयं उक्तवती । एतेन विरहजन्यस्य दुःखस्यासहनीयतमत्वं द्योत्यते । तत्र प्रेष्याः दूताः पुण्यश्लोकस्य नलस्य मार्गणे अन्वेषणे प्रयतन्तु प्रयतन्तामित्यर्थः । अनुदात्तेत्त्वानिमित्तकस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । अतः परं बृहदश्व उवाचेत्यधिकं पुस्तके । न पुनरेतदावश्यकं प्रकरणादेव तथावगतेः ।

( ३४ ) तयेति । प्रदेशितः उक्तः निवृत्तप्रेषणात्मपूर्वाद्दिशेरुच्चारणार्थकाण्णिचि क्तः । नलमार्गणे नलस्यान्वेषणे यतध्वमित्यभिधायेति शेषः । सर्वा दिशः प्रति प्रास्थापयत् प्रेरितवान् ।

( ३५ ) तत इति । विदर्भाधिपतेर्भीमस्य नियोगात् आज्ञया प्रस्थितास्ते ब्राह्मणाः । दमयन्तीं गत्वा उपगम्य । अनुपसृष्टस्यापि सोपसर्गवदर्थं उपसर्गाणां द्योतकत्वात् । तथा भीमोक्तप्रकारम् । भीमेनात्मन उक्तं निवेदयामासुरित्यर्थः ।

( ३६ ) अथेति । सर्वराष्ट्रेषु सर्वेषु राष्ट्रेषु इदं वक्ष्यमाणं वचः तत्र तत्र तासु तासु जनसंसत्सु लोकसमुदायेषु । संसच्छब्दः सभावचनः समुदाय

---

१ मृत ( क ) २ दर्शने ( क ) ३ इत पूर्वं ' बृहदश्व उवाच ' इत्यधिकं क्पुस्तके । ४ प्रमोदितो ( क ) ५ यथापृच्छ्य ( क )

श्रूयास्ते जनसंसत्सु तत्र तत्र पुनः पुनः ॥ ३६
क्व नु त्वं कितव च्छित्वा वस्त्रार्धं प्रस्थितो मम।
उत्सृज्य विपिने सुप्तामनुरक्तां प्रियां प्रिय ॥ ३७
सा वै यथा त्वया दृष्टा तथाऽस्ते त्वत्प्रतीक्षिणी।
दह्यमाना भृशं बाला वस्त्रार्धेनाभिसंवृता ॥ ३८
तस्या रुदन्त्याः सततं तेन शोकेन पार्थिव।
प्रसादं कुरु वै वीरं प्रतिवाक्यं वदस्व च ॥ ३९
एवमन्यच्च वक्तव्यं कृपां कुर्याद्यथा मयि।

---

लक्षयति। श्रूयास्त। यूयमिति शेषः। आशिषि लिङ्। अस्ति मे प्रत्याशा यद्‌ब्रूयासुर्भवन्तो वक्ष्यमाणेन प्रकारेणेति भावः।

(३७) वचनमाह सप्तभिः। क्वेति। कितव शठ। विस्रब्धाया भार्याया वञ्चनात्कितवत्वम्। मम वस्त्रार्धं छित्वा क्व नु प्रस्थितः प्रयातः। कितवत्वं विवृणोति उत्सृज्येति। विपिने अरण्य इति निर्दयत्वमभिद्योतयति। अनुरक्तां अनुरागवतीम्। एतेन त्यागानर्हत्वं द्योत्यते। प्रियामिति तदुक्त्यनुवादात्कपटकापटिकत्वं द्योत्यते। प्रियेति। एवमपि विद्यत एव त्वयि मे प्रणय इति भावः।

(३८) सेति। सा बाला भृशं दह्यमाना दाहसदृशीं पीडामनुभवन्ती कर्मकर्तरि लटः शानच्। दिवादेराकृतिगणत्वाद्वा श्यन्। त्वत्प्रतीक्षिणी त्वत्प्रतीक्षणशीला सती त्वया यथा दिष्टा उक्ता तथैवास्ते। दृष्टेत्येवात्र रमणीयतमः पाठः। यथा त्वया दृष्टा तथैवास्ते। तामेव दशामनुभवतीत्यर्थः।

(३९) तस्या इति। तेन शोकेन दुःखानुभवेन। रुदन्त्या इति नुमार्षः। शेषे षष्ठी। तस्यामित्यर्थः। प्रसादमनुग्रहम्। प्रतिवाक्यं प्रतिवचनम् (उत्तरम्) वदस्व वदेत्यर्थः। आर्षमात्मनेपदम्। नीलकण्ठस्तु भासनोपसम्भाषेत्यादिनात्मनेपदमाह। चिन्त्यमिदं भासनादीनामत्र स्वरसतोऽसंभवात्।

(४०) न केवलमेतावत् अन्यदपि च वक्तव्यं, समुद्दीप्यमाना हि मानसी वृत्तिः स्वभावं प्रकाशयतीत्याह। एवमिति। एवं वक्ष्यमाणप्रकारं अन्यत् अर्थान्तरमित्यर्थः। वक्तव्यं यथा स मयि कृपां कुर्यात्। ननु भोः कथमनेन वचनेनैव त्वयि कृपां कुर्यादिति चेत्तत्राह वायुनेति। हि यतः वायुना धूयमान आधूय सर्वतश्चाल्यमान इत्यर्थः। पावकः अग्निः वनं दहति। दाहकस्वरूपमात्मनः स्वभावं प्रकाशयतीत्यर्थः। यथा तेजोमयोऽपि पावको वायुना भूयो धूयमान एव वनं दहति एवं तेजस्वितया पावकोपमो नलो वायुसदृशैः प्रकम्पजनकैर्मदीयैर्वृत्तान्तैः प्रबुद्धो गहनतमतया काननायमानं मदीयं दुःखं विनाशलक्षणं दाहं प्रापयिष्यतीत्यर्थः। स च दाहस्तत्कृपैक-

---

१ ब्रूत वै जनसंसत्सु (क) ब्रुवेयुः राजसंसत्सु (च) २ देव (क)

वायुना धूयमानो हि वनं दहति पावकः ॥ ४०
भर्तव्या रक्षणीया च पत्नी [1]हि पतिना सदा ।
तन्नष्टमुभयं कस्माद्धर्मज्ञस्य सतस्तव ॥ ४१
ख्यातः प्राज्ञः कुलीनश्च सानुक्रोशो भवान्सदा ।
संवृत्तो निरनुक्रोशः शङ्के मद्भाग्यसंक्षयात् ॥ ४२
तत्कुरुष्व नरव्याघ्र दयां मयि नरर्षभ ।
आनृशंस्यं परो धर्मस्त्वत्त एव हि मे श्रुतः ॥ ४३
एवं ब्रुवाणान्यदि वः प्रतिब्रूयाद्धि कश्चन ।
स नरः सर्वथा ज्ञेयः कश्चासौ क्व नु वर्तते ॥ ४४
यश्चैवं वचनं श्रुत्वा ब्रूयात्प्रतिवचो नरः ।
तदादाय वचस्तस्य ममावेद्यं द्विजोत्तमाः ॥ ४५

साध्य इति यदिष्यत एवात' कुर्वेतस्यैति भावः । नीलकण्ठस्तु ' शोकाग्निः कालवायुना दिने दिने वर्धमानो दमयन्तीशरीरवनं धक्ष्यतीति रूपकेणोक्तम् ' इत्याह । अस्य पुनः साधुत्वासाधुत्वयोः सहृदया एव प्रमाणम् ।

( ४१ ) वक्तव्यमर्थमाह भर्तव्येति । हिकारोऽवधारणार्थः । भर्तव्यैवेत्यादिरर्थः पतिना पतिरित्याख्यायमानेन पुरुषेण भर्त्रेत्यर्थः । पतिशब्दादाख्यातणिजन्तात् कर्मणि 'अच इ' रित्यौणादिक इप्रत्ययः । गौणश्चाय पतिशब्दः पतिः समास एवेत्यस्या घिसंज्ञाया विषयो न भवति । गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् । स्मर्यते हि 'वृद्धौ च मातापितरौ साध्वी भार्या शिशुः सुतः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ ' इति । ' स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च । स्वं च धर्मं प्रयत्नेन जायां रक्षन् हि रक्षति ।' इति च । तत् उभयं भरणरक्षणलक्षणं धर्मद्वयम् ।

( ४२ ) ख्यात इति । प्राज्ञः कुलीनश्च भवान् सदा सानुक्रोशः सदयः । 'दयाऽनुकम्पा स्यादनुक्रोश' इत्यमरः । ख्यातः प्रसिद्धः । तथापि मद्भाग्यसंक्षयात् मे दैवस्य क्षीणत्वात् निरनुक्रोशो निर्दयः संवृत्त इति मन्ये संभावयामि । नाय ते दोषः किन्तु मे भाग्यस्यैवेत्यर्थः ।

( ४३ ) तदिति । हे नरव्याघ्र हे नरर्षभेत्यनुनयातिशये । तत एव च न पौनरुक्त्यम् । आनृशंस्यं अनृशंसत्वं दया । भावे ष्यञ् । नॄन् शंसति हन्तीति नृशंसो घातुकः तद्विरुद्धोऽनृशंसः सदयः । विरोधे नञ् । ' नृशंसो घातुकः क्रूर ' इत्यमरः । दयालक्षणः परः श्रेष्ठो धर्मः । मे मया ।

(४४) इत्थं वक्तव्यमाख्याय पुनः कर्तव्यमुपदिशति । एवमिति । प्रति ब्रूयात् उत्तरं दद्यात् । तदीति शेषः । सर्वथा सर्वैः प्रकारैः ज्ञेयः । ज्ञानस्वरूपमाह क इति ।

( ४५ ) य इति । एवं मदुपदिष्टप्रकारम् । तत्तस्य वचः आदाय मनसि धृत्वेत्यर्थः । मम मह्यम् । शेषे षष्ठी । आवेद्यं कथनीयमित्यर्थः । आह पूर्वोद्दिदेण्यन्तात्यत् ।

1 पत्या हि नित्यश ( क )

यथा च वो न जानीयाद्ब्रुवतो मम शासनात् ।
पुनरागमनं चेह तथा कार्यमतन्द्रितैः ॥ ४६
यदि वाऽसौ समृद्धः स्याद्यपि वाऽप्यधनो भवेत् ।
यदिऽवाप्यसमर्थः स्याज्ज्ञेयमस्य चिकीर्षितम् ॥ ४७
एवमुक्तास्त्वगच्छंस्ते ब्राह्मणाः सर्वतोदिशम् ।
नलं मृगयितुं राजंस्तदा व्यसनिनं तथा ॥ ४८
ते पुराणि सराष्ट्राणि ग्रामान्घोषांस्तथाऽश्रमान् ।
अन्वेषन्तो नलं राजन्नाधिजग्मुर्द्विजातयः ॥ ४९
तच्च वाक्यं तथा सर्वे तत्र तत्र विशांपते ।
श्रावयाञ्चक्रिरे विप्रा दमयन्त्या यथेरितम् ॥ ५०
इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
नलान्वेषण एकोनसप्ततितमोऽध्यायः ।

## सप्ततितमोऽध्यायः ।



बृहदश्व उवाच ।
अथ दीर्घस्य कालस्य पर्णादो नाम वै द्विजः ।

( ४६ ) यथेति । वः युष्मान् मम शासनात् आज्ञया ब्रुवतः न जानीयात् तथा अतन्द्रितैर्निरालस्यैः पुनरागमन कार्यम् । मयैवादिष्टा भवन्तो वदन्तीति चेज्जानीयात्तदा परिहर्तुकामः समागम प्रदेशान्तरं गच्छेदिति यथैतदसौ न जानाति तथा शीघ्रमेव प्रतिनिवृत्यतामिति भावः ।

(४७) यदीति । यादिवा यद्यपि । समृद्धः धनादिसमृद्धिमान् । अस्य प्रतिवचनप्रदातुः पुरुषस्य । चिकीर्षितं कर्तुमिष्टम् ।

( ४८ ) एवमिति । उक्ता दमयन्त्येत्यर्थात् । मृगयितुमन्वेषयितुम् । तथा तेन प्रकारेण व्यसनिन दुःखवन्तम् ।

( ४९ ) त इति । पुराणि नगराणि राष्ट्राणि मण्डलानि । घोषान् आभीराणा पल्ली । पल्लीच च क्षुद्रो ग्रामः। 'घोष आभीरपल्ली स्यात् इत्यमरः। आभीराश्च गोपाः। परिभ्रम्येति शेषः । अन्वेषन्तः अन्वेषयन्तः ते नल न अधिजग्मुः न प्रापुः । अधिपूर्वको हि गमिः प्राप्तौ ।

( ५० ) तदिति । तत् दमयन्त्युक्त वाक्य भावितामित्यर्थः । यथा दमयन्त्या ईरित कथित तथा तेन प्रकारेण तत्र तत्र तेपु तेपु प्रदेशेपु श्रावयाञ्चक्रिरे श्रावयामासुः शृणोतेर्ण्यन्ताल्लिट् ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यामूनसप्ततितमोऽध्यायः ।

( १ ) अथेति । दीर्घस्य कालस्य दीर्घेण कालेनेत्यर्थः । शेषे षष्ठी ।

१ चरतो ( क च. ) २ भीम ( क )

प्रत्येत्य नगरं भैमीमिदं वचनमब्रवीत् ॥ १
नैषधं मृगयाणेन दमयन्ति मया नलम् ।
अयोध्यां नगरीं गत्वा भाङ्गासुरिरुपस्थितः ॥ २
श्रावितश्च मया वाक्यं त्वदीयं स महाजने ।
ऋतुपर्णो महाभागो यथोक्तं वरवर्णिनि ॥ ३
तच्छ्रुत्वा नाब्रवीत्किंचिदृतुपर्णो नराधिपः ।
न च पारिषदः कश्चिद्भाष्यमाणो मयाऽसकृत् ॥ ४
अनुज्ञातं तु मां राज्ञा विजने कश्चिदब्रवीत् ।
ऋतुपर्णस्य पुरुषो बाहुको नाम नामतः ॥ ५

---

पर्णादो नाम पर्णाद इति नाम्ना प्रसिद्धः। प्रत्येत्य प्रत्यागम्य । प्रत्याङ्पूर्वा-दयतेः क्त्वो ल्यप् । इद वक्ष्यमाणम् ।

( २ ) वचनमाह द्वाभ्याम् । नैषधमिति । नैषधं निषधदेशाधिपतिम्। ' तस्येश्वर ' इत्यण् । नलं मृगयाणेन अन्वेषयता । आगमशास्त्रस्यानित्य-त्वान्न मुक् । भाङ्गासुरिः भङ्गासुरस्यापत्यं ऋतुपर्णः । एष किल सूर्यवंश-जोऽयुताश्वस्य नाम राज्ञः पुत्र इति विष्णुपुराणम् (अं. ४ अ. ४) । यथा ' अयुताश्वस्तत्पुत्र ऋतुपर्णो नलसहायोऽक्षहृदयज्ञो बभूव ' इति । श्रीमति महाभागवते तु ' सिन्धुद्वीपस्ततस्मादयुतायुस्ततोऽभवत् ' ॥ १६ ॥ 'ऋतु-पर्णो नलसखो योऽश्वविद्यामयान्नलात् । ' इति (स्क. ९ अ. ९) । शैवे पुनरसावयुताजितः पुत्र इत्युच्यते ' अयुताजित्सुतस्त्वासीदृतुपर्णो महायशाः दिव्याक्षहृदयज्ञोऽसौ राजा नलसखोऽभवत् ॥ ६२ ॥ 'इति ( धर्मसंहितायां ६१ तमेऽध्याये ) भङ्गासुरपुत्रत्वं पुनर्नान्यतः सदृष्टम् । भागस्वरिरिति तु कपुस्तकपाठः । नीलकण्ठचतुर्भुजौ तु 'भाङ्गासुरिः ऋतुपर्ण' इत्येव व्या-ख्यायामाहतुः । चपुस्तकपाठस्तु व्याख्याविरोधी लेखकप्रमादमूलक एव । उपस्थितः उपगतो मयेति कर्तृपदशेषः ।

(३) श्रावित इति । स ऋतुपर्णः महाजने महति जनसमूहे । हे वर-वर्णिनि श्रेष्ठशरीरवर्णवति दमयन्ति । यथोक्तं त्वदुक्तमनतिक्रम्य त्वदीयं वाक्यं श्रावितः ।

( ४ ) तदिति । मया असकृत् वारंवारं भाष्यमाणः उच्यमानः । कश्चि-त्कोऽपि पारिषदः परिषदि साधुः सभ्योऽपि नाब्रवीत् । पारिषद इति ' परि-षदोण्य ' इत्यत्र परिषद इति योगविभागण्णः ।

(५) अनुज्ञातमिति । अनुज्ञातं गमनाय दत्ताभ्यनुज्ञं मां, नामतः नाम्ना बाहुको नाम बाहुक इति प्रसिद्धः कश्चिदृतुपर्णस्य पुरुषः । विजने एकान्ते ।

---

१ दिवानिशम् ( क. च. ) २ भागस्वरिः ( क. ) मार्गे चाभिमुख स्थितः ( च. )

सूतस्तस्य नरेन्द्रस्य विरूपो ह्रस्वबाहुकः ।
शीघ्रयानेषु कुशलो मिष्टकर्ता च भोजने ॥ ६
स विनिःश्वस्य बहुशो रुदित्वा च पुनः पुनः ।
कुशलं चैव मां पृष्ट्वा पश्चादिदमभाषत ॥ ७
वैषम्यमपि संप्राप्ता गोपायन्ति कुलस्त्रियः ।
आत्मानमात्मना सत्यो जितः स्वर्गो न संशयः ॥ ८
रहिता भर्तृभिश्चैव न कुप्यन्ति कदाचन ।
प्राणांश्चारित्रकवचान्धारयन्ति वरस्त्रियः ॥ ९
विषमस्थेन मूढेन परिभ्रष्टसुखेन च ।
यत्सा तेन परित्यक्ता तत्र न क्रोद्धुमर्हति ॥ १०

---

(६) तस्याधिकार च स्वरूप चाह । सूत इति । सूतः सारथिः । विरूपः सौन्दर्यशून्यो विकृतरूपो वा । ह्रस्वबाहुकः ह्रस्वौ बाहू यस्य तथाभूतः शेषाद्विभाषे'ति कप् । शीघ्रयानेषु सत्वरगमनेषु । भोजने भोजनीयवस्तुष्वित्यर्थः । जातावेकवचनम् । मिष्टकर्ता मिष्टाना मधुरिमविशिष्टाना कर्ता । 'मिष्टो मधुररस इति कल्पद्रुमः । मिष्टत्व च तदेव येनान्न मनसेऽतिमात्रमेव स्वदमानमुपादेयतमत्वमापद्यते । मृष्टकर्तेति पाठे मृष्टपद मिष्टसमानार्थकमेव ।

(७) स इति । स बाहुक. विनिःश्वस्य इष्टजनवृत्तान्तश्रवणेन दुःखस्य नवीभूतत्वादिति भावः । अयमेव च रोदनेऽपि हेतुः । प्रणयिजनकुशलाजिज्ञासया कुशलप्रश्नः । न ह्यकुशले स्वामिनि दूताः कुशलिनो भवन्तीति ।

(८) वैषम्यमिति वैषम्य विषमा दशा प्राप्ता अपि सत्यः साध्व्यः कुलस्त्रियः कुलीना नार्यः । आत्मना स्वयमेव आत्मान गोपायन्ति । गुपू रक्षण इत्यतो लट् 'गुपूधूपविच्छपणिपनिभ्य' इत्यायः । ताभिः स्वर्ग. जित. स्वतेजसाऽभिभूय स्वायत्तीकृतः । अवश्य लभन्त एवविधेन चरितेन स्वर्ग कुलनार्य इति भावः । लाभस्य निश्चितत्वाद्भूततया निर्देशः ।

(९) रहिता इति । भर्तृभिः पतिभि. स्त्रीणामनेकत्वमादाय भर्तुर्बहुवचनम् । रहितास्त्यक्ताः । रह त्याग इत्यतो निष्ठा । वरस्त्रियः श्रेष्ठा नार्यः । चारित्रकवचान् चारित्र सदाचरणमेव कवच परकृतप्रहारविफलीकरण उपकारकतया कवचसदृश येषा तथाभूतान् । धारयन्ति । नासामात्मगोपने परसहायापेक्षा चारित्रवतीनामिति भावः ।

(१०) इत्थ सामान्यतोऽभिधायात्मनोऽपराधस्यापरिहार्यतानिवेदनपूर्वकं दमयन्त्याः कोपापगममभिप्रार्थयते । विषमस्थेनेति । विषमस्थेन सङ्कटे वर्तमानेन । मूढेन मोह प्राप्तेन । परिभ्रष्टसुखेन विगलितसुखेन । एतच्च सुखोचितायाः परित्यागस्यौचित्यमभिद्योतयति । यत् यस्मात्तेन परित्यक्ता तदिति शेषः । तत्र त्यागविषये तस्मिन् भर्तरि वा क्रोद्धु कोप कर्तुं नार्हति ।

---

१ मृष्ट ( क. ख. म. ) अभीष्ट ( न )

प्राणयात्रां परिप्रेप्सोः शकुनैर्हृतवाससः ।
आधिभिर्दह्यमानस्य श्यामा न क्रोद्धुमर्हति[1] ॥ ११
सत्कृताऽसत्कृता वाऽपि पतिं दृष्ट्वा तथागतम् ।
भ्रष्टराज्यं श्रिया हीनं क्षुधितं व्यसनाप्लुतम् ॥ १२
तस्य तद्वचनं श्रुत्वा त्वरितोऽहमिहागतः ।
श्रुत्वा प्रमाणं भवती राज्ञश्चैव निवेदय ॥ १३
एतच्छ्रुत्वाऽश्रुपूर्णाक्षी पर्णादस्य विशांपते ।
दमयन्ती रहोऽभ्येत्य मातरं प्रत्यभाषत ॥ १४
अयमर्थो न संवेद्यो भीमे मातः कदाचन ।
त्वत्सन्निधौ नियोक्ष्येऽहं सुदेवं द्विजसत्तमम् ॥ १५

( ११ ) प्राणयात्रामिति । प्राणयात्रा प्राणरक्षणोपायमाहार परिप्रेप्सोः परिप्राप्तुमिच्छोः । परिप्रपूर्वादाप्नोतेः सन्नन्तादुः । ' आप्ज्ञप्यृधा ' मितीत् । शकुनैः पक्षिभिः सुवर्णमयैः हृतवाससो हृतवस्त्रस्य आधिभिः मानसीभिर्व्यथाभिः दह्यमानस्य भस्मीक्रियमाणस्य । एतेन तापातिशयो गम्यते । शेषे षष्ठी । एवंविधाय तस्मा इत्यर्थः । श्यामा सुन्दरी सा स्त्री ।

( १२ ) सत्कृतेति भ्रष्टराज्यं भ्रष्ट च्युत नष्टमिति यावत् राज्य राजत्व यस्मात्तथाभूतम् । क्षुधितं ' वसतिक्षुधोरि ' तीट् । व्यसनाप्लुत व्यसनैर्दुःखैः आप्लुत सर्वतः प्लावितम् । तथागत तस्या दशाया वर्तमान दृष्ट्वा । सत्कृता सत्कार प्रापिता पत्येति शेषः । असत्कृताऽपि वा न क्रोद्धुमर्हतीति सम्बध्यते । यथागतमिति पाठस्तु न साधुः ।

( १३ ) तस्येति । पर्णादोक्तिरियम् । तस्य बाहुकस्य । श्रुत्वा एतद्वचनमिति शेषः । भवती प्रमाण इतः पर करणीयस्यावधारणे प्रभुरित्यर्थः । राज्ञश्चैव निवेदय त्वमेव कथयेत्यर्थः । अप्राप्तनलो नाहं राजानं द्रष्टुं शक्नोमीति भावः ।

( १४ ) एतदिति । विशांपते राजन् युधिष्ठिर । पर्णादस्य एतत् वचनमित्यर्थः । अश्रुपूर्णाक्षी अश्रुभिः पूर्णे अक्षिणी यस्यास्तथाभूता । बाहुकस्य नलत्वेनावधारणात्तस्य च विपद्ग्रस्तत्वज्ञानेन दुःखोदयादिति भावः । रहः एकान्ते अभ्येत्य उपगम्य मातर प्रति अभाषत उक्तवती ।

( १५ ) अयमिति । अयं इदानीं मयाभिधीयमानः अर्थो विषयः भीमे भीमायेत्यर्थः । संवेदनक्रियायामाधारत्वविवक्षणात्सप्तमी । न संवेद्यः न निवेदनीयः । अर्थमाह त्वत्सन्निधाविति । द्विजसत्तमं ब्राह्मणेषु श्रेष्ठतमम् । नियोक्ष्ये मदीये कर्मणि नियुक्तं करिष्यामि ।

[1] श्यामा न क्रोद्धुमर्हति ( क. च. )

यथा न नृपतिर्भीमः प्रतिपद्येत मे मतम् ।
तथा त्वया प्रकर्तव्यं मम चेत्प्रियमिच्छसि ॥ १६
यथा चाहं समानीता सुदेवेनाशु बान्धवात् ।
तेनैव मङ्गलेनाद्य सुदेवो यातु माचिरम् ॥ १७
समानेतुं नलं मातरयोध्यां नगरीमितः ।
विश्रान्तं तु ततः पश्चात्पर्णादं द्विजसत्तमम् ॥ १८
अर्चयामास वैदर्भी धनेनातीव भाविनी।
नले चेहागते विप्र भूयो दास्यामि ते वसु ॥१९
त्वया हि मे बहुकृतं यदन्यो न करिष्यति ।
यद्भर्त्राऽहं समेष्यामि शीघ्रमेव द्विजोत्तम ॥ २०
स एवमुक्तोऽथाश्वास्य आशीर्वादैः सुमङ्गलैः ।
गृहानुपययौ चापि कृतार्थः सुमहामनाः ॥ २१

( १६ ) यथेति मम प्रियमिच्छसि चेत्तदेति शेषः । मे मत ममाभिप्रायम् । न प्रतिपद्येत न जानीयात् । तथा त्वया प्रकर्तव्यम् ।

( १७ ) यथेति । यथा यस्मात् अह सुदेवेन आशु शीघ्र यथा तथा बान्धवान् समानीता प्रापिता । नयतेर्द्विकर्मत्वादस्मत्पदार्थस्य च बान्धवानाञ्च कर्मत्वम् । तथेति शेषस्तस्मादित्यर्थः । तेन मदानयनरूपेण मङ्गलेन शुभशकुनेन हेतुभूतेनेत्यर्थः । माचिर सत्वरम् । नञ्समानार्थोऽय माशब्दः । सुसुप्येतिसमासः । यात्वित्यस्योत्तरेण सबन्धः ।

( १८ ) समानेतुमिति । इतः अस्मान्नगराद्यात्वित्यनेन पूर्वेण सबन्धः । अतः परमाधिकमर्धं स्पष्टार्थम् । विश्रान्त गृहीतविश्रमम् । अर्धमेतदुत्तरान्वयि ।

( १९ ) अर्चयामासेति । भाविनी वैदर्भी धनेन करणभूतेन अतीव अत्यन्तमेव अर्चयामास समावयामास । सबहुमानमतिमात्रमेव द्रव्य प्रायच्छदित्यर्थः । अतःपर 'उवाच चैन महता सपूज्य द्रविणेन वै । ' इत्यधिक कपुस्तके । आवश्यक चैतत् । साकाङ्क्षत्वात् । दमयन्त्या वचनमाह नल इति । भूयः अस्माद्भूयस्तर वसु द्रव्यम् । ' भाविनी भामिनी चापी ' ति द्विरूपकोशः ।

(२०) किमर्थमितोऽप्याधिकस्य प्रदान द्रव्यस्येत्याह । त्वयेति । मे मम बहु कृत कार्यं सपादितम् । हि निश्चयेनायत् यस्मात् समेष्यामि समागम प्राप्स्यामि ।

( २१ ) स इति । उक्तो दमयन्त्येत्यर्थात् । सुमङ्गलैः अत्यन्त शोभनैः । आशीर्वादैः शुभाशंसनवाग्भिः आश्वास्य धैर्ययुक्ता सुखिता वा कृत्वा तामिति शेषः । सन्ध्यभाव आर्षः । गृहान् स्वीय गृहम् । ''गृहाः पुंसि च भूम्न्येव' इत्यमरः । कृतार्थः कृतकृत्यः । महामना उदारहृदयः ।

१ इतः पर ' ऋतुपर्णस्य नगरे निवसन्तमरिन्दमम् । ' इत्यधिकं कपुस्तके
२ भामिनी (क) ३ इतः पूर्व ' उवाच चैनं महता सपूज्य द्रविणेन वै । ' इत्यधिकं कपुस्तके ।

ततः सुदेवमाभाष्य दमयन्ती युधिष्ठिर ।
अब्रवीत्सन्निधौ मातुर्दुःखशोकसमन्विता ॥ २२
गत्वा सुदेव नगरीमयोध्यावासिनं नृपम् ।
ऋतुपर्णं वचो ब्रूहि संपतन्निव कामगः ॥ २३
आस्थास्यति पुनर्भैमी दमयन्ती स्वयंवरम् ।
तत्र गच्छन्ति राजानो राजपुत्राश्च सर्वशः ॥ २४
यथा च गणितः कालः श्वोभूते स भविष्यति ।
यदि संभावनीयं ते गच्छ शीघ्रमरिंदम ॥ २५
सूर्योदये द्वितीयं सा भर्तारं वरयिष्यति ।
न हि स ज्ञायते वीरो नलो जीवति वा न वा ॥ २६

---

(२२) तत इति । आभाष्य आहूयेत्यर्थः । आनाय्येति पाठस्तु साधुतरः ।

( २३ ) वचनमाह । गत्वेति । हे सुदेव कामगः कामोऽभिलाष इव गच्छति तथाभूतः । अत्यन्त शीघ्रगामी सन्नित्यर्थः । 'अन्येभ्योऽपि दृश्यते ' इति वार्तिकाड्डः । कामशब्दोऽत्र तद्धर्मि मनो लक्षयति । संपतन् सावेगमुपतिष्ठन् । सपातो हि वेगेनोपस्थानमिति । स्वयंवरस्य सन्निहिततमत्वप्रत्यायनार्थमुपस्थानस्य सावेगत्वम् । अत्र 'पतिमन्यं चिकीर्षती'ति पाठान्तरमयुक्ततरम् ।

( २४ ) वक्तव्यमर्थमाह त्रिभिः । आस्थास्यतीति । भैमी भीमस्य राज्ञः पुत्री । पुनर्द्वितीयवारम् । स्वयंवरं आस्थास्यति करिष्यति । सर्वशः सर्वे ।

( २५ ) यथेति । यथा कालः स्वयंवरकालः गणितः संख्यातः दिवसगणनया विचारित इत्यर्थः । तथेति शेषः । स स्वयंवरः श्वोभूते आगामिनि दिने लब्धात्मनि सति । आगामिनि दिन आरब्धे सतीत्यर्थः । हे अरिन्दम शत्रुप्रशमन ऋतुपर्ण । ते त्वया संभावनीयं गमनेन संभावयितुं योग्यं तत्स्वयंवरस्थानमिति शेषः । तदेति च । शीघ्रं गच्छ । नीलकण्ठः पुनरत्र संभाविनीति पाठमाद्रियमाणः ' संभाविनी संभाविता इयं गति ' रिति व्याचख्यौ । इयमिति पुनः पदं कथं वा गतिमसंनिहितायामाचष्टामिति न जानीमः । तथैव पाठाङ्गीकारे चेयमिति दमयन्तीमेव प्रकृतामुत्थापयितुं प्रभवेत् । यदीति च संभावनायाम् । तथा चायमर्थः । इयं दमयन्ती यदि कदाचित् ते तव संभाविनी भवित्री । त्वत्स्वामिका भविष्यति । त्वामपि वा वरयिष्यतीत्यस्ति संभव इति भावः ।

( २६ ) त्वरातिशयस्यावश्यकत्वमाह सूर्योदय इति । सूर्योदये सति । कुतो द्वितीयभर्तुर्वरणमित्यत्राह नेति । हि यस्मात् । जीवति वा नवेति न ज्ञायते । तस्मादित्यर्थः ।

---

१ आनय्य ( क. च. ) २ पतिमन्यं चिकीर्षति ( क. ) ३ तथा ( क. न. म. ) ४ जीवन्मृतोऽपि वा ( क. च. )

एवं तया यथोक्तो वै गत्वा राजानमब्रवीत्।
ऋतुपर्णं महाराज सुदेवो ब्राह्मणस्तदा ॥ २७

इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि
दमयन्तीपुनःस्वयंवरकथने सप्ततितमोऽध्यायः।

---

## एकसप्ततितमोऽध्यायः।

बृहदश्व उवाच—

श्रुत्वा वचः सुदेवस्य ऋतुपर्णो नराधिपः।
सान्त्वयञ्श्लक्ष्णया वाचा बाहुकं प्रत्यभाषत ॥ १
विदर्भान्यातुमिच्छामि दमयन्त्याः स्वयंवरम्।
एकाह्ना हयतत्त्वज्ञ मन्यसे यदि बाहुक ॥ २
एवमुक्तस्य कौन्तेय तेन राज्ञा नलस्य ह।
व्यदीर्यत मनो दुःखात्प्रदध्यौ च महामनाः ॥ ३
दमयन्ती भवेदेवं किं नु दुःखेन मोहिता।

---

(२७) एवमिति। यथोक्तः तथेत्यर्थात्सम्बध्यते। वै पादपूरणेऽवधारणे वा। महाराज युधिष्ठिर।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां सप्ततितमोऽध्यायः।

---

(१) श्रुत्वेति। सुदेवस्य वचः 'आस्थास्यति पुनर्भैमी' इत्यादि 'जीवति वा नवे' इत्यन्तं पूर्वाध्यायान्ते विनिर्दिष्टम्। श्लक्ष्णया मनोहरया सान्त्वयन् प्रसादयन्। 'एकेनैवाह्ना सख्यातिगामीनि योजनानि प्रापये' इत्यादिरूपस्य अशक्यसघटनस्यादेशस्य करिष्यमाणत्वाद्बाहुके कोपोत्पत्तिं सभावयतः प्रसादनम्। बाहुकं प्रति अभाषत उक्तवान्। अतःपरं प्रक्षिप्तं सार्धं पद्यं नावश्यकमिति न व्याख्यायते।

(२) विदर्भानिति। विदर्भास्तत्र च दमयन्त्याः स्वयंवरं एकाह्ना एकेन दिवसेन। समासान्तविधेरनित्यत्वान्न टच्। हयतत्त्वज्ञ हयशब्दोऽत्र तद्विद्यां लक्षयति। हयस्य हयविद्यायास्तत्त्वं रहस्यं जानाति तथाभूत। एतावतो हि दवीयसो मार्गस्य लङ्घने प्रभवन्तो हया विना हयतत्त्वज्ञं न शक्या उन्नेतुमित्यत उक्तं हयतत्त्वज्ञेति। यदि मन्यसे अनुमन्यसे।

(३) एवमिति। हकारः पादपूरणे। मनः व्यदीर्यत विदीर्णतां प्रापत्। प्रेयस्याः श्रद्धेयतमायाश्च सहधर्मिण्याः पुनः स्वयंवरे प्रवृत्तेराकर्णनादिति भावः। प्रदध्यौ अत्यन्तं चिन्तयामास। ध्यै चिन्तायामित्यतो लिट्।

(४) दमयन्तीति। दुःखेन मोहिता सजातमोहा दमयन्ती एतत्

---

१ अतः परं 'सारथीन्स समानीय वार्ष्णेयप्रमुखान्नृपः। कथयामास यद्वृत्तं ब्राह्मणेन श्रुतं तथा ॥ बाहुकं च समाहूय दमयन्त्याः स्वयंवरम्।' इत्यधिकं कपुस्तके। २ च (च.)

अस्मदर्थे भवेद्वाऽप्युपायश्चिन्तितो महान् ॥ ४
नृशंसं बत वैदर्भी भर्तृकामा तपस्विनी ।
मया क्षुद्रेण निकृता कृपणा पापबुद्धिना ॥ ५
स्त्रीस्वभावश्चलो लोके मम दोषश्च दारुणः ।

---

पुनः स्वयंवररूप कर्म कुर्यात् इत्येतत् भवेत् स्यादिति प्रश्ने काकुः । वा अथवा अयं स्वयंवररूपः महान् उपायः अस्मदर्थे अस्मत्प्राप्त्यर्थः। चिन्तितः भवेत्। अत्रापि प्रश्ने काकुः । प्रश्नश्चायमात्मानं प्रत्येवात्मगतः । विधीयते ह्येवं कस्याप्यर्थस्य विचार इति।

( ५ ) आदिमे पक्षे सभयं प्रदर्शयति नृशंसमित्यादिना। भर्तृकामा भर्तरि पत्यौ मय्येव कामोऽभिलाषो यस्यास्तथाभूता। कर्तुकामेति[1] पाठस्तु नोचितः। तपस्विनी अनुकम्पार्हा कृपणा दीना च वैदर्भी पापबुद्धिना दुष्टमतिना क्षुद्रेण पामरेण मया निकृता प्रतारिता इत्येतन्नृशंस अतिक्रूरं कर्म बतेति खेदे। निपूर्वः करोतिः प्रतारणे। 'निकृत विप्रलम्भे स्यादि' ति मेदिनी। निकृतमिति हि नपुंसके भावे क्तः।

(६) ततः किमित्याह। स्त्रीस्वभाव इति। चलः अस्थिरः। तेन यादृश पूर्वं तादृशमेवेदानीमपि स्यान्नेमेति नैतत्सम्भवतीति भावः। कारणान्तरमाह ममेति। च किंच मम दोषः अपराधः दारुणो भयङ्करः। विस्रब्ध मुग्धायाः प्रणयैकरसायाः प्राणेभ्योऽपि गरीयांस पतिमाकलयन्त्याश्च सहधर्मिण्या एकाकिन्या एव वने परित्याग इत्येतद्रूपो ह्येष इति। अतः विवासात् विवासनात् मया दूरीकरणादित्यर्थः। गतसौहृदा गतमपेत सौहृद मद्विषयक यस्यास्तथाभूता सा एव कुर्यात् इति स्यात्। सौहृदमिति सुहृच्छब्दाद्युवादित्वादण्। आदिवृद्धिश्च। 'हृद्भगसिन्ध्वन्तेभ्यः पूर्वपदस्य च' त्युभयपदादिवृद्धिस्तु न भवति। 'सुहृद्दुर्हृदौ मित्रामित्रयो' रिति निपातनात्सिद्धस्य हि निरर्थक एकदेशः सुहृच्छब्दस्य। सार्थकग्रहणे च न निरर्थकग्रहणम्। अस्ति च सुहृदयशब्दादणि हृदयस्य हृद्भावे च सार्थको हृच्छब्द इति। तथा हि शरणदेवधृतो रक्षितः 'क्वचित् अर्थवत्परिभाषया, सुहृद्दुर्हृदौ मित्रामित्रयोरिति निपातितस्य सुहृच्छब्दस्य योऽवयवो हृच्छब्दस्तदन्तस्योत्तरपदस्य वृद्धिर्न भवतीति व्याचक्षते। समुदायस्तत्र मित्रवचनोऽवयवस्तु निरर्थक' इति। शरणदेवस्तु 'संज्ञापूर्वको विधिरनित्य' इति 'हृद्भगे' त्यादिवृद्धेरप्रवृत्तौ पूर्वपदमात्रवृद्धिरित्याह। चान्द्रास्तु 'हृद्भगे' त्यत्र प्रतिपदोक्तस्यैव हृदयापरपर्यायस्य हृच्छब्दस्य ग्रहणमित्याहुरेते। तेन तन्मते मैत्र्यार्थे नोभयपदवृद्धिः। विरुद्ध पुनरेतद्वृत्तिग्रन्थस्येति शरणदेवः। वामनस्तु काव्यालङ्कारसूत्रेषु 'सौहृददौर्हृदशब्दावणि हृद्भावात्।' इति सूत्रयन् 'सुहृदयदुर्हृदयशब्दयोर्युवादिपाठादणि कृते हृदयस्य हृद्भावः। आदिवृद्धौ सौहृददौर्हृदशब्दौ भवतः। सुहृद्दुर्हृच्छब्दाभ्यां युवादिपाठादेवाणि कृते हृद्भग-

---

[1] कर्तु ( क )

स्यादेवमपि कुर्यात्सा विवासाद्गतसौहृदा ॥ ६
मम शोकेन संविग्ना नैराश्यात्तनुमध्यमा ।
नैवं सा कर्हिचित्कुर्यात्सापत्या च विशेषतः ॥ ७
यदत्र सत्यं वाऽसत्यं गत्वा वेत्स्यामि निश्चयम् ।
ऋतुपर्णस्य वै काममात्मार्थं च करोम्यहम् ॥ ८
इति निश्चित्य मनसा बाहुको दीनमानसः ।
कृताञ्जलिरुवाचेदमृतुपर्णं नराधिपम्[1] ॥ ९
प्रतिजानामि ते वाक्यं गमिष्यामि नराधिप ।
एकाह्ना पुरुषव्याघ्र विदर्भनगरीं नृप ॥ १०[2]
ततः परीक्षामश्वानां चक्रे राजन्स बाहुकः ।

---

सिन्ध्वन्तेभ्य इति हृदयस्य तद्धितेऽपि कृते सत्युभयपदवृद्धौ सत्यां सौहार्दमिति भवति 'इति व्याचष्टे ।

( ७ ) पक्षान्तरं समर्थयति । ममेति । मम मद्विषये । शेषे षष्ठी । नैराश्यात् आशाराहित्यात् । शोकेन दुःखानुभवेन संविग्ना अत्यन्त विषण्णा । एतेन दमयन्त्याः आत्मनि गतस्य प्रेम्णो निश्चलत्वमभिद्योत्यते । न हि कृतकं प्रेम दुःखमनुभावयति नापि चाकृत्रिम चलं भवतीति । शोकसंविग्नत्व चास्याः पर्णादवचनतो विज्ञातं नलेन । सा कर्हिचित् कदापि एव न कुर्यात् । च किञ्च सापत्या अपत्यसहकृता सती विशेषतो न कुर्यात् । अपत्यमात्रार्थकः वाद्विवाहस्येति भावः

( ८ ) यदिति । अत्र विषये यत् सत्यमसत्य वा निश्चय निश्चयवत निश्चितमित्यर्थः । अर्शआदित्वादच् । तादिति शेषः । गत्वा वेत्स्यामि ज्ञास्यामि । आगमशास्त्रस्यानित्यत्वादिड्भावः । ऋतुपर्णस्य काम मनोरथ अभीष्टं विदर्भगमनरूपं कार्यमित्यर्थः । आत्मार्थं च स्वस्य कृतेऽपि ।

( ९ ) इतीति । दीनमानसः दीनमुत्साहशून्यमित्यर्थः मानस यस्य तथाभूतः । कृताञ्जलिः बद्धाञ्जलिः । एष खल्वाचारो भृत्याना यत्प्रभूणां पुरो वक्तव्येऽञ्जलिमाबध्नन्तीति ।

( १० ) वचनमाह प्रतिजानामीति । ते वाक्य वचन प्रतिजानामि अङ्गीकरोमि । आर्षे आत्मनेपदाभावः । हे पुरुषव्याघ्र नरश्रेष्ठ नृप राजन् ऋतुपर्ण एकाह्ना एकेन अह्ना विदर्भनगरीं गमिष्यामि । इतःपर पद्यद्वयमधिकं कपुस्तके नावश्यकमिति न व्याख्यायते ।

( ११ ) तत इति । राजन्युधिष्ठिर अश्वानां परीक्षां गमनक्षमत्वज्ञानार्थमिति भावः । माङ्गासुरिः ऋतुपर्णः ।

---

१ जनाधिपम् ( क. म. ग. ) नरेश्वरम् ( च. ) २ अतःपर ' तत्रादित्योदये काले श्वो विदर्भान्गमिष्यसि ॥ एवमुक्तोऽब्रवीद्राजा बाहुकं प्रहमञ्जिव । किं ते काम करोम्यद्य तुष्टोऽस्मि तव बाहुक । बाहुक उवाच—यावधानमिद सज्जमृतुपर्णं करोम्यहम् ॥' इत्यधिकं कपुस्तके ।

अश्वशालामुपागम्य भाङ्गासुरिनृपाज्ञया ॥ ११
स त्वर्यमाणो बहुश ऋतुपर्णेन बाहुकः ।
अश्वाञ्जिज्ञासमानो वै विचार्य च पुनः पुनः ॥ १२
अध्यगच्छत्कृशानश्वान्समर्थानध्वनि क्षमान् ।
तेजोबलसमायुक्तान्कुलशीलसमन्वितान् ॥ १३
वर्जितॉंल्लक्षणैर्हीनैः पृथुप्रोथान्महाहनून् ।
शुद्धान्दशभिरावर्तैः सिन्धुजान्वातरंहसः ॥ १४
तान्दृष्ट्वा दुर्बलान्राजा प्राह कोपसमन्वितः ।

---

( १२ ) स इत्यादिभिस्त्रिभिर्विशेषकम् । स इति । बहुशः अनेकवार त्वर्यमाणः त्वराया प्रार्थ्यमानो बाहुकः अश्वान् जिज्ञासमानः गतिक्षमतया ज्ञातुमिच्छन् । जानातेः सन्नन्तात् ' ज्ञाश्रुस्मृदृशां सनः ' इत्यात्मनेपदम् । पुनः पुनः विचार्य औचित्यविचार कृत्वा ।

( १३ ) अध्यगच्छादिति । कृशान् समर्थान् प्रकृत्यैव बलवतः । अश्वान् अध्वनि अध्वलङ्घन इत्यर्थः । क्षमान् समर्थान् अध्यगच्छत् लब्धवान् । ज्ञातवानिति वार्थः । अश्वान्विशिनष्टि । तेज इत्यादिना सार्धेन । तेजोबलसमायुक्तान् तेजसः विक्रमस्य बलेन समायुक्तान् । चतुर्भुजस्तु तेजः सत्त्व बल सामर्थ्यमित्याह शलि चानौद्धत्यमिति व्याचष्टे ।

( १४ ) वर्जितानिति। हीनैः निकृष्टैर्लक्षणैर्वर्जितान् रहितान् । तानि च जात्यावर्तादिविशेषेण बहुविधानि नकुलादिप्रणीतेष्वश्वशास्त्रेषु द्रष्टव्यानि । विस्तरभयान्नात्रोदाह्रियन्ते । पृथुप्रोथान् पृथु पृथुल प्रोथ नासिका येषां तथाभूताः । ' प्रोथमश्वस्य नासिका ' इति हैमः । महाहनून् महती महान्या हनुर्येषां तान् । हनुश्च कपोलाधोवर्ती प्रदेशविशेषः । ' दन्तवक्त्र च तत्प्रान्तौ सृक्कणी अधिक रदः । अधिरदधस्तु चिबुक स्याद्गल्लः सृक्कणः परः ॥ गल्लात्परः कपोलश्च परो गण्डः कपोलतः । ततो हनुः ' इति हैमः । परशब्दोऽत्राध.समानार्थः । दशभिः आवर्तैः रोम्णा भ्रमिवत्सस्थानविशेषैः उपलक्षितान् । उपलक्षणे तृतीया । ' रोम्णा भ्रमिवदाश्लिष्टावर्त इति कथ्यते इति युक्तिकल्पतरौ भोजः । ' यशोमस्तकयोर्द्वौ द्वौ रन्ध्रोपरन्ध्रयोः । भाले प्रयाणे ( पृष्ठे ) चैकैको ध्रुवावर्ता इमे दश ॥ ' इति व्याख्याया चतुर्भुजः । तत एव च शुद्धान् निर्दोषान् । 'सिन्धुजान् सिन्धुषु स्वनामख्यातेषु जनपदेषु जायन्ते तथाभूतान् । 'सनम्यां जनेर्डः' इति डः । वातरंहसः वातस्येव रंहो वेगो येषां तथाभूतान् । अत' परश्लोकसमर्थं गतार्थत्वान्न व्याख्यायते ।

( १५ ) दृष्ट्वेति । तानश्वान् दृष्ट्वा किञ्चित्कोपसमन्वितः । अश्वानां पार्श्वावलोकनेनाक्षमत्वसमारम्भादिति भाव. । ते त्वया इदं किं कर्तुं प्रार्थित

---

१ समानारूपैः (क) २ अत. पर ' दृश्यमाना-इत्यानर्थेवं नामप्रतिभान्यपि ॥' इत्यधिकं पुस्तके ।

किमिदं प्रार्थितं कर्तुं प्रलब्धव्या न ते वयम् ॥ १५
कथमल्पबलप्राणा वक्ष्यन्तीमे हया मम ।
महानध्वा स चैकाहा गन्तव्यः कथमीदृशैः ॥ १६

वाहुक उवाच ।

एको ललाटे द्वे मूर्ध्नि द्वौ द्वौ पार्श्वोपपार्श्वयोः ।
द्वौ द्वौ वक्षसि विज्ञेयौ प्रयाणे चैक एव तु ॥ १७
एते हया गमिष्यन्ति विदर्भान्नात्र संशयः ।
यानन्यान्मन्यसे राजन्ब्रूहि तान्योजयामि ते ॥ १८

ऋतुपर्ण उवाच ।

त्वमेव हयतत्त्वज्ञः कुशलो ह्यसि वाहुक ।
यन्मन्यसे समर्थांस्त्वं क्षिप्रं तानेव योजय ॥ १९

---

इष्टम् । वय न प्रलब्धव्या न वञ्चनीयाः । प्रलम्भो हि विप्रलम्भः । ते इति काकाक्षिगोलकन्यायेनोभयत्रापि सबध्यते । त्वयेत्यर्थः ।

(१६) विप्रलम्भसभावनामात्मनस्तुरङ्गमानामक्षमत्वप्रदर्शनेन समर्थयति कथमिति । अल्पबलप्राणा' अल्प बल भारसाहिष्णुता प्राणा वेगश्च येषा तथाभूताः । 'बल भारसाहिष्णुता प्राणाश्च वेगवत्ते'ति नीलकण्ठः । इमे हया मम शेषे षष्ठी । मामित्यर्थः । कथ वक्ष्यन्ति अभीष्ट स्थान प्रापयिष्यन्ति। नैतच्छक्यमित्यर्थः । वह प्रापण इत्यतो लट् । ममेत्यत्र रथमिति पाठः पुनः सारल्याविशेषात्साधुः । च किंच ईदृशैर्महान् द्राघीयान् अध्वा मार्गो यस्य त विदर्भदेश प्रति । महत आत्वाभाव आर्ष । कथ गन्तव्यम् । रथवहनस्य कथचित्सभवेऽपि एतावतो दवीयसो मार्गस्याक्रमणमत्यन्त दुर्घटमिति भावः । नीलकण्ठः पुनरत्र 'अध्वान नि'शब्द महददतिदूरे । दमयन्त्याः पुनर्भूत्वात्तद्वरणे महती लज्जा तया च अवृते महत्तरा लज्जेति प्रच्छन्नतयैव तत्र गतमपि वेगवशादगतमिव यथा भवति तथा गन्तव्यमि'ति भावः । ' इति व्याचष्टे । नैतद्युक्त पूर्वापरविरोधादिति द्रष्टव्यम् ।

(१७) एक इति । अश्वाना प्रयाणक्षमत्वज्ञापनाय तज्ज्ञापकावर्तसख्याविनिर्देशोऽयम् । उपपार्श्वे पार्श्वसमीपभागः । पद्यमेतत्क्वचिन्न दृश्यत इति *नीलकण्ठः । चतुर्भुजमिश्रोऽपि नैतदाद्रियते । विरुद्ध चैतत् 'शुद्धान् दशभिरावर्तै'' इति पूर्वोक्तेनार्थेन । अत्र हि द्वादशावर्ताः सपद्यन्त इति ।* अतश्च क्वचन प्राचीनव्याख्याया विद्यमानमेतल्लेखकप्रमादादिना मूल प्रविश्य तदात्मतामापन्नमिति प्रतिभाति । असबद्धमिव चैतदनैकान्ततः सदृश्यत इत्यपि द्रष्टव्यम् ।

(१८) एत इति । ते तव अश्वान्त्वया निर्दिष्टानश्वानित्यर्थः । योजयामि रथ इति शेषः ।

(१९) त्वमिति । हयतत्त्वज्ञः अश्वशास्त्रमर्मज्ञः कुशलः स्वकर्मणि चतुरः । *क्षिप्र शीघ्रम् ।*

ततः सदश्वांश्चतुरः कुलशीलसमन्वितान् ।
योजयामास कुशलो जवयुक्तान्रथे नलः ॥ २०
ततो युक्तं रथं राजा समारोहत्त्वरान्वितः ।
अथ पर्यपतन्भूमौ जानुभिस्ते हयोत्तमाः ॥ २१
ततो नरवरः श्रीमान्नलो राजा विशांपते ।
सान्त्वयामास तानश्वांस्तेजोबलसमन्वितान् ॥ २२
रश्मिभिश्च समुद्यम्य नलो यातुमियेष सः ।
सूतमारोप्य वार्ष्णेयं जवमास्थाय वै परम् ॥ २३
ते चोद्यमाना विधिवद्बाहुकेन हयोत्तमाः ।
समुत्पेतुरिवाकाशं रथिनं मोहयन्निव ॥ २४[1]
तथा तु दृष्ट्वा तानश्वान्वहतो वातरंहसः ।
अयोध्याधिपतिः श्रीमान्विस्मयं परमं ययौ ॥ २५

( २० ) तत इति । ततः ऋतुपर्णवचनानन्तरं चतुरः चतुःसंख्याकान् जवयुक्तान् वेगेन युक्तान् । वेगगामिन इत्यर्थः । सदश्वान् शोभनानश्वान् ।

( २१ ) तत इति । ततो हययोजनानन्तरं युक्तं सज्जीकृतमित्यर्थः । त्वरान्वितः त्वरया युक्तः सन् समारोहत् आरूढवान् । जानुभिः करणभूतैः भूमौ पर्यपतन् । जानूनि भूमौ विन्यस्य निपतिता आसन्नित्यर्थः । पतने यद्भूमौ विन्यस्यते तस्य करणत्वेन निर्देश इति शैलीयं भाषायाः ।

(२२) तत इति विशांपते युधिष्ठिर । तेजोबलसमन्वितान् तेजसा सत्त्वेन बलेन वाहनसामर्थ्येन च युक्तान्। सान्त्वयामास सचूत्कारं सश्लाघाशब्दं वा करतलेन पृष्ठमास्फाल्य विगतक्षोभाश्चकारेत्यर्थः। एतदेव हि सान्त्वनमश्वानामिति।

(२३) रश्मिभिरिति। रश्मिभिः प्रग्रहापरपर्यायै रथ्यानां नियमनरज्जुभिः। उद्यम्य गमने उद्यतान् कृत्वा । तानश्वानित्यर्थात्सबध्यते । वार्ष्णेयमेतन्नामानं सूतं सारथिम् । स हि नलस्य सारथिरासीदिति । आरोप्य रथे इति शेषः । परं आत्यन्तिकं जवं वेगमास्थाय समाश्रित्य ।

( २४ ) त इति । बाहुकेन विधिवद्यथाशास्त्रं चोद्यमानाः प्रेर्यमाणाः ते हयोत्तमा अश्वश्रेष्ठाः रथिनं रथस्वामिनमृतुपर्णम् । मोहयन्निव मोहयन्त इव । एकवचनमार्षम्। आकाशं समुत्पेतुः आकाशे उत्पतिता बभूवुः। मोहयन्ति चेति पाठस्तु न समीचीनो लङ्लिटोः समानविषयकतया प्रयोगस्यायुज्यमानत्वात्। यता तु तिङन्ताख्यक्रियायाः प्राधान्यात् ' धातुसम्बन्धे प्रत्ययाः ' इति भूतेऽपि लटि स्यात् । तिङन्तत्वे तु लिडेवावश्यकत्वमापद्येत ।

( २५ ) तथेति । वातरंहसो वातस्येव रंहो वेगो येषां तथाभूतान् तथा तेन प्रकारेण वहतो गच्छतः । वहिप्रयोगो वेगातिशयमभिद्योतयति । अयोध्याधिपतिः ऋतुपर्णः परमात्यन्तिकं विस्मयमाश्चर्यं ययौ प्राप । अदृष्टपूर्ववेगावलोकनादिति भावः

१ मोहयन्ति च ( क )

रथघोषं तु तं श्रुत्वा हयसंग्रहणं च तत् ।
वार्ष्णेयश्चिन्तयामास बाहुकस्य हयज्ञताम् ॥ २६
किं नु स्यान्मातलिरयं देवराजस्य सारथिः ।
तथा तल्लक्षणं वीरे बाहुके दृश्यते महत् ॥ २७
शालिहोत्रोऽथ किं नु स्याद्धयानां कुलतत्त्ववित् ।
मानुषं समनुप्राप्तो वपुः परमशोभनम् ॥ २८
उताहोस्विद्भवेद्राजा नलः परपुरञ्जयः ।
सोऽयं नृपतिरायात इत्येवं समचिन्तयत् ॥ २९

---

( २६ ) रथघोषमिति । तं तदानीमनुभूयमानम् । रथघोषं गच्छतो रथस्य ध्वनिं श्रुत्वा । तच्चानुभूयमानं हयसंग्रहणं हयानां नियमनम् । दृष्ट्वेति शेषः । वार्ष्णेयः कर्ता बाहुकस्य हयज्ञतामश्वशास्त्रज्ञतां चिन्तयामास । तामधिकृत्य मनसि विचारं प्रवर्तयामासेत्यर्थः। हयशब्दोऽत्र तच्छास्त्रे लाक्षणिकः

( २७ ) विचारमाह किं न्विति । नुर्वितर्के । अयं बाहुकः देवराजस्य देवानां राज्ञ इन्द्रस्य सारथिः मातलिरेतन्नामा स्यात् किन्नु । कुत एवं संभाव्यत इत्यत्राह तथेति । तथा तादृशप्रकारं महत् तल्लक्षणं तस्य मातलेर्लक्षणं चिह्नं हयचोदनकौशलविशेषरूपं बाहुके दृश्यते ।

( २८ ) शालिहोत्र इति । अथ अथवा हयानां कुलतत्त्ववित् कुलानां तत्त्वस्य रहस्यस्य परमार्थस्य वा वेत्ता शालिहोत्रो नाम मुनिः । एष च शक्रसान्निध्यवर्ती दैवतविग्रहः । परमशोभनं अत्यन्तं शोभनं मानुषं मनुष्यसम्बन्धि वपुः शरीरं प्राप्तः किन्नु । न ह्येतदश्वकौशलं मानुषेषु संभवतीत्यत एवं प्रतीयत इति भावः । शालिहोत्रश्चाश्वशास्त्रस्यादिप्रणेता देवेन्द्रसन्निधिचारी मुनिविशेषः । यः किल शक्रादेशाद्दिपीकास्त्रेण तुरङ्गमाणां पक्षांश्चिच्छेद । तैश्चाभिप्रार्थितस्तेषां कृतेऽश्वशास्त्रं द्वादशसहस्रपद्यात्मकं प्रणिनायेति नकुलप्रणीतेऽश्वचिकित्सिते प्रथमे प्रश्नाध्याये स्पष्टम् । इत्थं च स्तूयते शालिहोत्रो नकुलेन ' येन ज्ञातवता हिमालयतरुच्छायासु विक्रीडितं यः स्नातो हिमपुष्पवातशिशिरे गङ्गाजले पावने । रेमे यस्तु तुरङ्गयूथजनितैर्नानाविधैर्धीपितैः पायाद्वः स तुरङ्गवेदपतनयः श्रीशालिहोत्रो मुनिः ' इति ।

( २९ ) उतेति । उताहोस्विदित्यव्ययसमुदायोऽथवेत्यर्थः । उतेति वितर्के । अनेकार्थत्वान्निपातानाम् । आहोस्विदित्यथवेत्यर्थे वा । परपुरञ्जयः परेषां शत्रूणां पुराणां नगराणां जेता अभिभूय ग्रहीता । सोऽयं नलो नृपतिरायातः भवेत् इत्येवं समचिन्तयत् मनसि विचारयामास । पुरञ्जय इति ' संज्ञायां भृतृ' त्यादिना जयतेः खचि निष्पन्नस्य गौण्या लक्षणयाऽन्यत्र प्रयोगः। अथवा पूर्वार्धे वितर्क उत्तरार्धे तु बाहुकस्य नलत्वबुद्धिः । सोऽयं नृपतिर्नलः आयातः बाहुकरूपेण प्राप्तः इति समचिन्तयत् व्यचारयत् ।

अथ चेह नलो विद्यां वेत्ति तामेव बाहुकः ।
तुल्यं हि लक्षये ज्ञानं बाहुकस्य नलस्य च ॥ ३०
अपि चेदं वयस्तुल्यं बाहुकस्य नलस्य च ।
नायं नलो महावीर्यस्तद्विद्यश्च भविष्यति ॥ ३१
प्रच्छन्ना हि महात्मानश्चरन्ति पृथिवीमिमाम् ।
दैवेन विधिना युक्ताः शास्त्रोक्तैश्च निरूपणैः ॥ ३२
भवेत्तु मतिभेदो मे गात्रवैरूप्यतां प्रति
प्रमाणात्परिहीनस्तु भवेदिति मतिर्मम ॥ ३३
वयःप्रमाणं तत्तुल्यं रूपेण तु विपर्ययः ।

---

( ३० ) बाहुकस्य नलत्वशङ्कासमर्थनायोभयोः साहश्यमुपवर्णयति । अथेति । अथ च किंच । नलो यामिति तच्छन्दबलाल्लभ्यते या विद्या वेत्ति तामेव बाहुकोऽपि वेत्ति । हिकारो अवधारणे तुल्य हि तुल्यमेव लक्षये पश्यामि ।

( ३१ ) हेत्वन्तरमुपन्यस्यति । अपि चेति । इद मया विज्ञायमान वयः । तुल्य समानप्रमाणकम् । तस्मात् तद्विद्यः तस्य नलस्य विद्येव विद्या अश्वविद्या यस्य सोऽय बाहुको महावीर्यो नलो न भविष्यति । प्रश्ने काकुः । स्यात्कदाचिन्नल एवेति भावः ।

( ३२ ) कथमीदृक् स्वरूप नलस्येत्याह प्रच्छन्ना इति । हि यतः दैवेन देवसंबधिना दिव्येनालौकिकेनेति यावत् । विधिना रूपान्तरपरिग्रहलक्षणेन कर्मणा शास्त्रोक्तैः योगशास्त्रे विहितैः निरूपणैरुपदेशैश्च युक्ताः महात्मानः प्रच्छन्नाः सन्त इमा पृथिवीं चरन्ति । एवमेव च कारणवशाद्विचरन्स्यात्कदाचिदय नल एवेति भावः ।

( ३३ ) ननु भोः कुत्र वा विग्रहवानिव मकरकेतुर्महाराजो नलः कुत्र चायं विरूपतमो बाहुक इति चेन्नैतत्तस्तर्कं प्रतिहन्तुमित्याह । भवेदिति । गात्रेति विकृत रूप विरूप तदेव वैरूप्यम् । चतुर्वर्णादिभ्य उपसंख्यानमिति स्वार्थे ष्यञ् । तस्य भावो वैरूप्यता । गात्रवैरूप्यता प्रति शरीरस्य विरूपताविषये मे मतिभेदः विचारान्तर न भवेत् । केनापि हेतुना विरूपतामापन्नं नलगात्रमित्येव मया मन्येत । नैव पुनस्तावतैव नाय नल इति विनिश्चीयेतेति भावः तुकारः शङ्कानिरासार्थः । नलगात्रप्रमाणापेक्षया बाहुकगात्रप्रमाणस्य न्यूनत्वा नाय नल इति शङ्का न कर्तव्येति भावः । प्रमाणात् शरीरस्य मानात् पूर्वं विद्यमानात् परिहीनो न्यूनतामापन्नः भवेत् स्यात्केनापि कारणेन । नैतावता नायं नल इति युज्यते वक्तुमिति भावः ।

( ३४ ) उपसंहरति वय इति । वयःप्रमाणं वयसः प्रमाण तत्तुल्य नलतुल्यम । अस्तीति शेषः । तु केवल रूपेण सौन्दर्येण विपर्ययो वैपरीत्य नल-

---

१ अथ चेह नलाख्यातो विद्या तामेव बाहुक । ( क ) अथवा नलतुल्योऽयं विद्यां वेत्ति स बाहुक. । तुल्यं च लक्षये ज्ञान ( घ )

नलं सर्वगुणैर्युक्तं मन्ये बाहुकमन्ततः ॥ ३४
एवं विचार्य बहुशो वार्ष्णेयः पर्यचिन्तयत् ।
हृदयेन महाराज पुण्यश्लोकस्य सारथिः ॥ ३५
ऋतुपर्णश्च राजेन्द्रो बाहुकस्य हयज्ञताम् ।
चिन्तयन्मुमुदे राजा सहवार्ष्णेयसारथिः ॥ ३६
ऐकाग्र्यं च तथोत्साहं हयसंग्रहणं च तत् ।
परं यत्नं च संप्रेक्ष्य परां मुदमवाप ह ॥ ३७

इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि ऋतुपर्णविदर्भगमन एकसप्ततितमोऽध्यायः ।



## द्विसप्ततितमोऽध्यायः ।

बृहदश्व उवाच—
स नदीः पर्वतांश्चैव वनानि च सरांसि च ।
अचिरेणातिचक्राम खेचरः खे चरन्निव ॥ १

दित्यर्थात् । तत. किमित्याह । सर्वगुणैः सकलैर्नलेऽनुभूतैर्गुणैरित्यर्थः । उपेतं युक्तं बाहुकं अन्ततो निश्चयेन नलं मन्ये संभावयामि । 'अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोः ।' इति हैम' । सार्वविभक्तिकस्तृतीयार्थे तसिः ।

(३५) एवमिति । हे महाराज युधिष्ठिर । पुण्यश्लोकस्य नलस्य सारथि- र्वार्ष्णेयः एवं बहुशः बहु विपुलमित्यर्थः । विचार्य तत्त्वपरीक्षार्थं प्रमाणा- न्युद्भाव्येत्यर्थः । ' सन्दिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षा विचारः ' इति गोपीचन्द्रः । हृदयेन मनसा कारणभूतेन पर्यचिन्तयत् आत्मनाऽवधारितमर्थं ध्यायन्नासीत् । बहुश इति पर्यचिन्तयदित्यतः । प्राग्वा योज्यम् ।

(३६) ऋतुपर्ण इति । सहवार्ष्णेयसारथिः वार्ष्णेयसारथिना सह वर्त- मानो राजा प्रजानां रञ्जयिता राजेन्द्रो नृपश्रेष्ठः । चिन्तयन् मनसा विचार- यन् । मुमुदे आनन्दं प्राप ।

(३७) ऐकाग्र्यमिति । ऐकाग्र्यमेकाग्रताम् । सारथ्यकर्मणीत्यर्थात् । हयसंग्रहणं अश्वनियमनक्रियाम् । परं उत्कृष्टं यत्नं स्वकार्यसाधनप्रयत्नं च । मुदं हर्षम् । 'मुत्प्रीतिः प्रमदो हर्षः ' इत्यमरः ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां एकसप्ततोऽध्यायः ।

---

(१) स इति । स रथः कर्ता मार्गगता नदीः । खे आकाशे चरन् सञ्चरन् खेचरः खे आकाशे चरतीति तथाभूतो ग्रहो विद्याधरः पक्षी वा स इव । 'चरेष्ट' इति टः । 'तत्पुरुषे कृति बहुलम् ' इत्यलुक् ।

---

(१) परं प्रयत्नं (च) कौशलं चापि (क)

तथा प्रयाते तु रथे तदा भाङ्गासुरिर्नृपः ।
उत्तरीयमधोऽपश्यद्भ्रष्टं परपुरञ्जयः ॥ २
ततः स त्वरमाणस्तु पटे निपातिते तदा ।
ग्रहीष्यामिति तं राजा नलमाह महामना ॥ ३
निगृह्णीष्व महाबुद्धे हयानेतान्महाजवान् ।
वार्ष्णेयो यावदेनं मे पटमानयतामिह ॥ ४
नलस्तं प्रत्युवाचाथ दूरे भ्रष्टः पटस्तव ।
योजनं समतिक्रान्तो नाहर्तुं शक्यते पुनः ॥ ५
एवमुक्ते नलेनाथ नातिप्रीततमा नृपः ।
आससाद वने राजन्फलवन्तं विभीतकम् ॥ ६
तं दृष्ट्वा बाहुकं राजा त्वरमाणोऽभ्यभाषत ।
ममापि सूत पश्य त्वं संख्याने परमं बलम् ॥ ७

( २ ) तथेति । रथे तथा तेन प्रकारेण प्रयाते सति भाङ्गासुरिः भङ्गासुरपुत्र ऋतुपर्णः । भाङ्गासुरिति चतुर्भुजः । भागस्वरिति कपुस्तके । सान्धिविग्रहिको महापात्रो महाकवि. श्रीकृष्णानन्दस्तु ' भाङ्गासरेः कर्णपुटोपकण्ठ नित्ये चरैस्तस्य गुणप्रकर्षः । ' इत्यादौ राजानमेनं भाङ्गासरिमाह सहृदयानन्दे । उत्तरीयं उत्तरस्मिन् शरीरस्योपरिभागे भवं ( प्रावरणरूपेण विद्यमान ) वस्त्रम् । ' गेहादिभ्यश्छ ' ति छः । अधो रथाधस्तात् भ्रष्ट च्युत अपश्यत् ।

( ३ ) तत इति । त्वरमाण. त्वरा कुर्वन् । ग्रहीष्यामि । तद्धरामीति शेष. । इति मन्वान इति शेष । आह उक्तवानित्यर्थः ।

( ४ ) वचनमाह निगृह्णीष्वेति । हे महाबुद्धे नल । महाजवान् महान् जवो वेगो येषा तान् एतान् हयानश्वान् निगृह्णीष्व नियच्छ । किमर्थमित्याह वार्ष्णेय इति । यावत्सत्वर पटमानयताम् आनयतु ।

( ५ ) नल इति । योजन क्रोशचतुष्टय समतिक्रान्तः अतीत्य स्थितः । अत एव च पुनर्द्वितीयवार आहर्तुं ग्रहीतु त्वयेति शेषः । गृहान्निर्गच्छता किलादितो गृहीतोय भवता न पुनरत पर कदापि ग्रहीतु शक्यो दुरधिगमत्वादिति भावः । ' पुनरप्रथमे मतम् ' इति मेदिनी ।

( ६ ) एवमिति । राजन् युधिष्ठिर । फलवन्त फलयुक्त विभीतक 'बेहडा इति महाराष्ट्रेषु ख्यातं वृक्षविशेष आससाद उपजगाम । तत्समीप प्रापेत्यर्थः । विभीतक इति विगत भीतिरोगभयं यस्मात्स. । ' शेषाद्वा ।' इति वा कप् । एव च दन्त्योष्ठ्यादिरेवाय शब्दः । बवयोरभेदाभ्युपगमात्तु क्वचिदोष्ठ्यादि. पठ्यते ।

( ७ ) ममेति । त विभीतकम् । सख्याने गणनक्रियायां परम उत्कृष्ट बल सामर्थ्यम् । पश्य साक्षात्कुरु ।

( १ ) भाङ्गासुरि' ( च ) भागस्वरि. ( क )

सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन ।
नैकत्र परिनिष्ठाऽस्ति ज्ञानस्य पुरुषे क्वचित् ॥ ८
वृक्षेऽस्मिन्यानि पर्णानि फलान्यपि च बाहुक ।
पतितान्यपि यान्यत्र तत्रैकमधिकं शतम् ॥ ९
एकमत्राधिकं पत्रं फलमेकं च बाहुक ।
पञ्चकोट्योऽथ पत्राणां द्वयोरपि च शाखयोः ॥ १०
प्रचिनु ह्यस्य शाखे द्वे याश्चाप्यन्याः प्रशाखिकाः ।
आभ्यां फलसहस्रे द्वे पञ्चोनं शतमेव च ॥ ११
ततो रथमवस्थाप्य राजानं बाहुकोऽब्रवीत् ।
परोक्षमिव मे राजन्कत्थसे शत्रुकर्शन ॥ १२

(८) त्वं किल तुरगवाहने कुशलः । अहं पुनर्गणनायाम् । कुत एतादित्याह । सर्व इति । 'नहि सर्वः सर्वं जानाति' इति मुद्राराक्षसम् । कश्चन कोऽपि । एकत्र पुरुषे ज्ञानस्य परिनिष्ठा परिसमाप्तिः साकल्येन विद्यमानत्वमिति भावः । क्वचित् कस्मिन्नपि ।

(९–१०) वृक्ष इति । युग्मकमेतत् । हे बाहुक अस्मिन् वृक्षे यानि पर्णानि फलानि च सन्ति यानि चात्र प्रदेशे पतितानि सन्ति तत्र तेषां मध्ये एकतोऽपरत्रेति भावः । एकं शतं अधिकम् । अत्र अस्मिन्नपि पत्रे एकं पत्रमेकं फलं चाधिकम् । एवं चैकाधिकमेकं शतं फलानां पत्राणां चाधिकमेकतोऽपरत्रेत्यर्थः । ततश्च वृक्षवर्तिभ्यः फलेभ्यो भूमौ पतितानि ततो वा वृक्षवर्तीन्येकाधिकेन शतेनातिरिक्तानीति भावः । एवमेव च पत्राणि । उपरि पुनः कियन्ति पत्राणि फलानि चेत्याह । पञ्चेति । पञ्च कोट्यः । कोटिशब्दो दीर्घान्तोऽप्यस्तीति भरतः । इतः परमधिकमर्धं कपुस्तके स्पष्टार्थम् ।

(११) प्रचिन्विति । प्रचिनु परीक्षस्व । प्रशाखिकाः प्रकृष्टाः शाखाः । ययोः कयोरपि वा शाखयोः पत्राणामेतावत्येव संख्या सपत्रेतेति भावः । फलसंख्यामाह । आभ्यामिति । सप्तम्यर्थे आर्षी चतुर्थी । अनयोः शाखयोरित्यर्थः । द्वे फलसहस्रे, च किंच पञ्चोनं शतं फलानाम् । एवं च पञ्चनवत्याधिकं फलानां सहस्रद्वितयमित्यर्थः ।

(१२) तत इति । अवस्थाप्य स्थिरीकृत्य । 'ष्ठा गतिनिवृत्तौ' इत्यतो णिजन्तात् क्त्वो ल्यप् । शत्रुकर्शन शत्रून् कर्शयति क्षीणान् करोति तथाभूत मे मम परोक्षं अक्ष्णोः परं अगोचरं इव । इति मन्येऽहमित्यर्थः । 'प्रतिपरसमनुभ्योऽक्ष्णः' इति टच् । परोक्षे लिडितिनिपातनादोत्त्वं च । न खल्वेतन्मया साक्षात्कर्तुं शक्यमिति यत्किमपि वा प्रोक्तं प्रामाण्यमेवावगाहतेति मत्वैव ब्रवीषीत्यर्थः ।

१ कृतम् (क) २ एकपत्राधिकं चात्र (च, न, क, म.) ३ फलकोट्यपि (क) ४ अतः परं 'प्रपश्यामि फलान्यत्र यानि संख्यास्यते भवान् ॥' इत्यधिकं कपुस्तके । (५) रथादवप्लुत्य (क, ब.) ६ कर्षण (च, क, न, म.)

प्रत्यक्षमेतत्कर्ताऽस्मि शातयित्वा विभीतकम् ।
अथांत्र गणिते राजन्विद्यते न परोक्षता ॥ १३
प्रत्यक्षं ते महाराज गणयिष्ये विभीतकम् ।
अहं हि नाभिजानामि भवेदेवं नवेति वा ॥ १४
संख्यास्यामि फलान्यस्य पश्यतस्ते जनाधिप ।
मुहूर्तमपि वार्ष्णेयो रश्मीन्यच्छतु वाजिनाम् ॥ १५
तमब्रवीन्नृपः सूतं नायं कालो विलम्बितुम् ।
बाहुकस्त्वब्रवीदेनं परं यत्नं समास्थितः ॥ १६
प्रतीक्षस्व मुहूर्तं त्वमथवा त्वरते भवान् ।
एष याति शिवः पन्था याहि वार्ष्णेयसारथिः ॥ १७
अब्रवीदृतुपर्णस्तु सान्त्वयन्कुरुनन्दन ।
त्वमेव यन्ता नान्योऽस्ति पृथिव्यामपि बाहुक ॥ १८

( १३ ) प्रत्यक्षमिति । शातयित्वा छित्त्वा । शद्लृ शातन इत्यतो णिजन्तात् क्त्वा । ' शदेरगतौ त ' इति तः । एतत् फलादिकम् । अथ शातनानन्तरं अत्र फलादौ गणिते सख्याते सति परोक्षता अविज्ञेयत्वमित्यर्थः। न विद्यते । अत्र पाठान्तरमसमञ्जसप्रायम् ।

( १४ ) प्रत्यक्षमिति । ते तव प्रत्यक्षं समक्षम् । एवं हि न्यूनीभावे न मयि दोषः सक्रामेदिति भावः। शातयिष्यामि च्छेत्स्यामि । नाभिजानामि न जानामीत्यर्थः । अभिरत्र धात्वर्थानुवर्ती ।

( १५ ) सख्यास्यामीति । ते पश्यतः सतः । 'षष्ठी चानादरे' इति षष्ठी । मुहूर्तं क्षण घटिकाद्वयं यावद्वा । 'मुहूर्तमल्पकालेऽपि घटिकाद्वितयेऽपि च ' इति शब्दार्णवः । वाजिनामश्वाना रश्मीन् प्रग्रहान् 'काडणी'ति महाराष्ट्रेषु ख्यातान् । ' मुक्तेषु रश्मिषु निरायतपूर्वकाया ' इति शाकुन्तलम् ।

( १६ ) तमिति । सूतं सारथिं बाहुकम् । विलम्बितु विलम्ब कर्तुं कालः समुचितः समयः न । कालातिपाते स्वयंवरोपस्थानासभवादिति भावः । ' कालसमयवेलासु ' इति तुमुन् । पर यत्नं समास्थितः आत्यन्तिकं यत्नमालम्बितवान् बाहुकः ।

(१७) वचनमाह प्रतीक्षस्वेति। प्रतीक्षस्व प्रतिपालय । पक्षान्तरमाह अथवेति यदीति शेषः। यदि त्वरते तदेति च शेषः। तदा एष पुरो विद्यमानः शिवः शुभः पन्था याति विद्यमानिति भावः । तस्मात् वार्ष्णेयसारथिः वार्ष्णेयः सारथिर्यस्य तथाभूतः सन् । याहि गच्छ । अहं तु नागमिष्यामीति भावः ।

( १८ ) अब्रवीदिति । हे कुरुनन्दन युधिष्ठिर ! सान्त्वयन् प्रसादयन् । यन्ता सारथिः ।

१ अथ ते गणिते राजन्विज्ञानाम्यपरोक्षताम् ( क ) नपुस्तके त्वित आरभ्याध्यायस्य नास्त्येव । २ तं ( क. ग. )

त्वत्कृते यातुमिच्छामि विदर्भान्हयकोविद ।
शरणं त्वां प्रपन्नोऽस्मि न विघ्नं कर्तुमर्हसि ॥ १९
कामं च ते करिष्यामि यन्मां वक्ष्यसि बाहुक ।
विदर्भान्यदि यात्वाऽद्य सूर्यं दर्शयिताऽसि मे ॥ २०
अथाब्रवीद्बाहुकस्तं संख्याय च विभीतकम् ।
ततो विदर्भान्यास्यामि कुरुष्वैवं वचो मम ॥ २१
अकाम इव तं राजा गणयस्वेत्युवाच ह ।
एकदेशं च शाखायाः समादिष्टं मयाऽनघ ॥ २२
गणयस्वाश्वतत्त्वज्ञ ततस्त्वं प्रीतिमावह ।
सोऽवतीर्य रथात्तूर्णं शातयामास तं द्रुमम् ॥ २३
ततः स विस्मयाविष्टो राजानमिदमब्रवीत् ।
गणयित्वा यथोक्तानि तावन्त्येव फलानि च ॥ २४

---

( १९ ) त्वदिति । हे हयकोविद अश्वविद्यापण्डित । 'सन्सुधीः कोविदो बुध' इत्यमरः । त्वत्कृते कृते शब्दो निपातः । स चात्र कर्मवचनः । ततश्च तृतीयाया लुक् । तेन तव कर्मणा हेतुभूतेनेत्यर्थः । मद्गमनेच्छायां तव हयवाहनकर्मैव हेतुः । अन्यथा तदुदयस्यासंभवादिति भावः । प्रपन्नः प्राप्तः ।

( २० ) काममिति । यत् मा वक्ष्यसि तत् ते काम मनोरथ करिष्यामि पूरयिष्यामीत्यर्थः । यदि अद्य विदर्भान् यात्वा गत्वा दर्शयिताऽसि दृष्टि-विषयं करिष्यसि । प्रागेव सूर्यास्तमानात् यदि विदर्भान् गमिष्यसीत्यर्थः ।

( २१ ) अथेति । संख्याय च गणयित्वैव । चकारोऽवधारणार्थः । निपातानामनेकार्थत्वात् । विभीतक विभीतकवार्तिफलपुष्पसमूहमित्यर्थः । मम वचः उक्तिं कुरु अनुपालयेत्यर्थः ।

( २२–२३ ) अकाम इति । अकाम इव अनिच्छ इव । विलम्ब-भयेनेच्छाया अनुदयादिति भावः । हे अनघ निष्पाप । मया समादिष्ट उक्त शाखाया एकदेशं एकमवयवम् । गणयस्वेति । एतेन गणनफलस्य बाहुक-मात्रगामित्वमात्मनश्च तान्निरपेक्षत्वं ध्वन्यते । अन्यथा हि नात्मनेपदं प्रसज्येतेति। प्रीतिं हर्षं आवह आसेवस्व । स बाहुकः । तूर्णं शीघ्रम् । शातयामास चिच्छेद ।

( २४ ) तत इति । ततश्छेदनानन्तरं यथोक्तानि उक्तमनतिक्रम्य वर्तमानानि । तावन्ति तत्परिमाणानि । नृपोदितपरिमाणवन्तीत्यर्थः । गण-यित्वा गणनया विज्ञायेत्यर्थः । विस्मयाविष्टः विस्मयेन आविष्टः कृतान्तः-प्रवेशः स बाहुकः ।

---

१ अर्धमेतच्पुस्तके नास्ति । २ तु (क- न. म.)

अत्यद्भुतामिदं राजन्द्रष्टवानस्मि ते बलम् ।
श्रोतुमिच्छामि ते[1] विद्यां ययैतज्ज्ञायते नृप ॥ २५
तमुवाच ततो राजा त्वरितो गमने नृप ।
विद्ध्यक्षहृदयज्ञं मां संख्याने च विशारदम् ॥ २६
बाहुकस्तमुवाचाथ देहि विद्यामिमां मम ।
मत्तोऽपि चाश्वहृदयं गृहाण पुरुषर्षभ ॥ २७
ऋतुपर्णस्ततो राजा बाहुकं कार्यगौरवात् ।
हयज्ञानस्य लोभाच्च तं तथेत्यब्रवीद्वचः ॥ २८
यथोक्तं त्वं गृहाणेदमक्षाणां हृदयं परम् ।
निक्षेपो मेऽश्वहृदयं त्वयि तिष्ठतु बाहुक ॥ २९
एवमुक्त्वा ददौ विद्यामृतुपर्णो नलाय वै ।
तस्याक्षहृदयज्ञस्य शरीरान्निःसृतः कलिः ॥ ३०
कर्कोटकविषं तीक्ष्णं मुखात्सततमुद्वमन् ।
कलेस्तस्य तदार्तस्य शापाग्निः स विनिःसृतः ॥ ३१

( २५ ) अत्यद्भुतामिति । यया एतद्गणित ज्ञायते तामिति शेषः । ते तव विद्या श्रोतुमिच्छामि ।

( २६ ) तमिति । नृपः नृणा पाता गमने त्वरितः सजातत्वरः राजा ऋतुपर्णः । वचनमाह विद्धीति । मा अक्षहृदयज्ञ द्यूतरहस्यवेत्तारम् । सख्याने गणनाया विशारद पण्डित विद्धि जानीहि ।

( २७ ) बाहुक । इति मम मह्यम् । शेषे षष्ठी । मत्तः मत् ।

( २८ ) ऋतुपर्ण इति । कार्यगौरवात् आत्मनः कृते बाहुकेनानुष्ठीयमानस्यैकेना । विदर्भोपगमनरूपस्य कार्यस्य गुरुत्वात् । कृतज्ञत्वाधियेति भावः । हयज्ञानस्य अश्वविद्यासंबन्धिनो ज्ञानस्य लोभात् अभिलाषात् । त बाहुक तथा यथा वदासि तथा करिष्यामीत्यर्थः । इति ।

( २९ ) यथोक्तमिति । यथोक्त त्वदीयवचनानुसारेणेत्यर्थः । अक्षाणां द्यूतविद्याया इत्यर्थः पर उत्कृष्ट हृदय रहस्यम् । गृहाण । अश्वहृदय अश्वविद्यारहस्य तु त्वयि मे निक्षेपो न्यासः 'ठेव' इति महाराष्ट्रेषु ख्यातः । तमेन स्वाभिलषिते समये ग्रहीष्यामीत्यर्थः ।

( ३० ) एवमिति । विद्यामक्षविद्याम् । अक्षहृदयज्ञस्य द्यूतरहस्यज्ञस्य तस्य नलस्य शरीरात् कलिः प्रविष्टपूर्वो युगविशेषाधिष्ठातृदेवताविशेषः । निःसृतो निर्गतः ।

( ३१ ) कलेरवस्थामाह । कर्कोटकेति । तीक्ष्णं तीव्र कर्कोटकविष कर्कोटकाख्यस्य नागस्य विषम् । आर्तस्य पीडितस्य तदार्तस्येत्येकं वा पदम् । तेन विषेणार्तस्येत्यर्थः । स दमयन्त्योत्सृष्टः शापाग्निः शापरूपोऽग्निः ।

१ तां ( क. च. न. म. ) २ विद्याद्य च मे । ( क )

स तेन कर्षितो राजा दीर्घकालमनात्मवान् ।
ततो विषविमुक्तात्मा स्वं रूपमकरोत्कलिः ॥ ३२
तं शप्तुमैच्छत्कुपितो निषधाधिपतिर्नलः ।
तमुवाच कलिर्भीतो वेपमानः कृताञ्जलिः ॥ ३३
कोपं संयच्छ नृपते कीर्तिं दास्यामि ते पराम् ।
इन्द्रसेनस्य जननी कुपिता माऽशपत्पुरा ॥ ३४
यदा त्वया परित्यक्ता ततोऽहं भृशपीडितः ।
अवसं त्वयि राजेन्द्र सुदुःखमपराजित ॥ ३५
विषेण नागराजस्य दह्यमानो दिवानिशम् ।
शरणं त्वां प्रपन्नोस्मि शृणु चेदं वचो मम ॥ ३६
ये च त्वां मनुजा लोके कीर्तयिष्यन्त्यतन्द्रिताः ।
मत्प्रसूतं भयं तेषां न कदाचिद्भविष्यति[3] ॥ ३७

---

( ३२ ) स इति । तेन कलिना कर्षितः समाकृष्टः समाक्रान्त इत्यर्थः । स राजा नलः दीर्घकाल चिरकालपर्यन्तम् । 'कालाध्वनोरत्यन्तसयोग' इति द्वितीया । अनात्मवान् आत्मा स्वातन्त्र्यमस्त्यस्य तथाभूतो न भवति तथाविधः । आसीदिति शेषः । विषविमुक्तात्मा विषाद्विमुक्त आत्मा शरीर यस्य तथाभूतः । स्व स्वीय रूप आकार अकरोत् प्रकटयामास ।

( ३३ ) तमिति । वेपमानः कम्पमानः । तत्र हेतुर्भीत इति । कृताञ्जलिर्बद्धाञ्जलिः ।

( ३४ ) कोपमिति । कोप सयच्छ निगृहीत कुरु । ते तुभ्य परा उत्कृष्टाम् आत्मनः पीडामुपन्यस्य शरणागतिं निवेदयति । इन्द्रसेनस्येति इन्द्रसेनस्य नलपुत्रस्य जननी माता दमयन्ती । वीरप्रसूरिति ध्वन्यते ।

( ३५ ) यदेति । त्वया परित्यक्ता वने तदेति संबध्यते । ततः तस्माच्छापात् । भृशपीडितः अत्यन्त सजातपीडः । सुदुःख सुतरा दुःख यस्मिन् कर्मणि तद्यथा तथा । अपराजित नास्ति पराजयो यस्य तथाभूत । शत्रुभिर्न पराजितेति वा ।

( ३६ ) पीडाया आत्यन्तिकत्वे कारणान्तरमप्याह । विषेणेति । नागराजस्य सर्पाधीश्वरस्य कर्कोटकस्य । दह्यमानः अवसामिति पूर्वेण संबन्धः । इद वक्ष्यमाणम् ।

( ३७ ) वचनमाह । य इति । लोके ये मनुजा अतन्द्रिता तन्द्रा आलस्यं सजात येषु तथा न भवन्ति तथाभूताः सन्तः । त्वा कीर्तयिष्यन्ति आत्मनो वाचो विषय करिष्यन्ति । कृत सशब्दन इत्यतश्चौरादिकाल्लट् ।

---

१ कर्शितः ( क. च. न. म. ) २ अतः पर 'तं भ्रान्तरूप निःशोभ सहिष्णमकरोत्कलिः ।' इत्यधिक कपुस्तके । ३ अतः पर ' न तेषां मानस किंचिच्छारीर वाचिकं तथा । भविष्यति महाराज कीर्तयिष्यन्ति ये नलम्' इत्यधिकं कपुस्तके ।

भयार्तं शरणं यातं यदि मां त्वं न शप्स्यसे ।
एवमुक्तो नलो राजा न्ययच्छत्कोपमात्मनः ॥ ३८
ततो भीतः कलिः क्षिप्रं प्रविवेश विभीतकम् ।
कलिस्त्वन्यैस्तदादृश्यः कथयन्नैषधेन वै ॥ ३९
ततो गतज्वरो राजा नैषधः परवीरहा ।
संप्रनष्टे कलौ राजा संख्यायास्य फलान्युत ॥ ४०
मुदा परमया युक्तस्तेजसाऽथ परेण वै ।
रथमारुह्य तेजस्वी प्रययौ जवनैर्हयैः ॥ ४१
विभीतकश्चाप्रशस्तः संवृत्तः कलिसंश्रयात् ।

मत्प्रसूत मत्तो जातम् । अतः पर पद्यमेकं प्रक्षिप्तं गतार्थमिवानेन पद्येनेति न व्याख्यायते ।

( ३८ ) भयार्तमिति । भयार्तं भीत्या पीडितं शरणं रक्षितारं त्वां यातं उपागतमित्यर्थः । विनाप्युपसर्गं तद्विशिष्टवदर्थः । द्योतकत्वादुपसर्गाणाम् । यदि मां न शप्स्यसे शापेन न योजयिष्यसि । तदा पूर्वोक्तं भविष्यतीत्यर्थः। शप्स्यस इति स्वरितेत्त्वादात्मनेपदम्। न्ययच्छत् निगृहीतवान्। निपूर्वाद्यमेर्लङ् । 'इषुगमियमां छः' इति छः ।

( ३९ ) तत इति । भीत इति । नलस्यात्यन्तमेव क्लेशितत्वात्पुनः कोपसंभवाशङ्कया भीतिः । विभीतकं निर्दिष्टपूर्वं वृक्षविशेषम् । कलेः प्रवेशादेव तरोरस्य 'कलिद्रुम' इत्याख्या । तथा ह्यमरः ' नाक्षस्तुषः कर्षफलो भूतावासः कलिद्रुमः । ' इति । क्विमेष दृष्टः कलिर्नलभिन्नैर्नो वेति चेन्न दृष्ट इत्याह । कलिरिति । नैषधेन सह कथयन् कथां कुर्वन् कलिः अन्यैः अदृश्यः द्रष्टुमशक्यः आसीदिति शेषः । 'अन्येन नो दृष्ट' इति पाठस्तु साधीयानेव । नो इति निषेधार्थो निपातः ।

( ४० ) तत इति । कलौ संप्रनष्टे अदर्शनं गते सति । संप्रणष्ट इति मूर्धन्यविशिष्टस्तु पाठः प्रामादिकः । नशेः षान्तस्येति णत्वनिषेधात् । गतज्वरः गतो नष्टो ज्वरः शारीरस्तापो यस्य तथाभूतः । अभूदिति शेषः। उत किंच अस्य विभीतकस्य फलानि संख्याय गणयित्वा । अर्धमेदुत्तरान्वयि ।

( ४१ ) मुदेति । परमया आत्यन्तिक्या मुदा हर्षेण परेण उत्कृष्टेन तेजसा कान्तिविशेषेण च उक्तः । तेजस्वी विक्रमवान् । ' तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः ।' इति मेदिनी । जवनैर्वेगशालिभिः हयैः प्रययौ प्रयाणं कृतवान् ।

( ४२ ) विभीतक इति । कलिसंश्रयात् कलेराश्रयणात् कलिना समाश्रितत्वादित्यर्थः । अप्रशस्तः अशुभः । संवृत्तो जातः । एतेन महातरुमेव

१ अन्येन ना दृष्टः ( क ) अन्येन नादृश्यत ( च ) २ त्वरा ( क ) ३ संप्रणष्टे ( च ) ४ इतः परं ' तत प्रभृति राजेन्द्र लोकेऽस्मिन्पाण्डुनन्दन ' इत्यधिकं कपुस्तके ।

हयोत्तमानुत्पततो द्विजानिव पुनः पुनः ॥ ४२
नलः संचोदयामास प्रहृष्टेनान्तरात्मना ।
विदर्भाभिमुखो राजा प्रययौ स महायशाः ॥ ४३
नले तु समतिक्रान्ते कलिरप्यगमद्गृहान् ।
ततो गतज्वरो राजा नलोऽभूत्पृथिवीपतिः ।
विमुक्तः कलिना राजन्रूपमात्रवियोजितः ॥ ४४
इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
नलकलित्यागे द्वासप्ततितमोऽध्यायः ।

## त्रिसप्ततितमोऽध्यायः ।



बृहदश्व उवाच ।
ततो विदर्भान्संप्राप्तं सायाह्ने सत्यविक्रमम् ।
ऋतुपर्णं जना राज्ञे भीमाय प्रत्यपादयन् ॥ १
स भीमवचनाद्राजा कुण्डिनं प्राविशत्पुरम् ।

---

कलिद्रुम मन्वाना भ्रान्ता एवेति बोद्धव्यम् । अत' पर प्रक्षिप्त पद्यार्धं स्पष्टार्थम् । हयोत्तमानिति । द्विजान् पक्षिण इव उत्पततः उत्पतन कुर्वाणान् हयोत्तमान् पुनः पुनः सचोदयामासेत्युत्तरेण सबन्ध ।

( ४३ ) नल इति । सचोदयामास प्रेरयामास । प्रहृष्टेन अत्यन्तमानन्दितेन कलिना विमुक्तत्वादिति भाव' । अन्तरा मना अन्तःकरणेन (मनसा) विशिष्टः । विदर्भाभिमुखः विदर्भदेशसमुखः सन् ।

( ४४ ) नल इति । नले समतिक्रान्ते अतिदूर प्रयाते सति । कलिरपि गृहान् आत्मनो गृहम् । गृहशब्दो हि पुसि भूम्न्यपि विद्यत इति । राजन् युधिष्ठिर ! ततः कलिना विमुक्तः तत एव च गतज्वरः पृथिवीपतिः पृथिव्याः पाता राजा नलः रूपमात्रवियोजित' रूपमात्रेण केवलेन सौन्दर्येण वियोजितो विरहितः अभूत् आसीत् । तदवासिस्तु नलेच्छार्थ.नैव कर्कोटकवचनादिति ।
इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां द्विसप्ततितमोऽध्यायः ।

---

(१) तत इति । जना विदर्भावासिनो लोकाः । विदर्भां विदर्भदेशराजधानीम् । सत्यविक्रमे सत्यः पारमार्थिको विक्रमः पराक्रमो यस्य त ऋतुपर्णम् । प्रत्यपादयन् निवेदितवन्तः । प्रत्यवेदयन्निति पाठेऽप्ययमेवार्थः ।

( २ ) स इति । स राजा ऋतुपर्णः भीमवचनात् भीमवचनमनुसृत्य । ल्यब्लोपे पञ्चमी । कुण्डिन एतन्नामधेय विदर्भेत्यपरपर्यायम् । विदिशः दिग्भ्यां विनिर्गता विदिशः । द्वाभ्या द्वाभ्या दिग्भ्यां विनिष्पन्नाः कोणदिश

---

१ प्रत्यवेदयन् ( क. च. म.)

नादयन्रथघोषेण सर्वाः स विदिशो दिशः ॥ २
ततस्तं रथनिर्घोषं नलाश्वास्तत्र शुश्रुवुः ।
श्रुत्वा तु समहृष्यन्त पुरेव नलसन्निधौ ॥ ३
दमयन्ती तु शुश्राव रथघोषं नलस्य तम् ।
यथा मेघस्य नदतो गम्भीरं जलदागमे ॥ ४
परं विस्मयमापन्ना श्रुत्वा नादं महास्वनम् ।
नलेन संगृहीतेषु पुरेव नलवाजिषु ॥ ५
सदृशं रथनिर्घोषं मेने भैमी तथा हयाः ।
प्रासादस्थाश्च शिखिनः शालास्थाश्चैव वारणाः ॥ ६
हयाश्च शुश्रुवुस्तस्य रथघोषं महीपतेः ।
ते श्रुत्वा रथनिर्घोषं वारणाः शिखिनस्तथा ।
प्रणेदुरुन्मुखा राजन्मेघनाद इवोत्सुकाः ॥ ७

आग्नेय्याद्या विदिशः । 'आभिः सहस्त्रभाका दिशः ।' 'दिशोर्मध्ये विदिक् स्त्रियाम्' इत्यमरः । नादयन् शब्दयुक्ताः कुर्वन् ।

( ३ ) तत इति । त ऋतुपर्णसचारकालिक । रथनिर्घोष रथध्वनिम् । 'निर्घोषः स्वानो ध्वानः स्वनो ध्वनिः ।' इति हैमः । तत्र कुण्डिनपुरे । समहृष्यन्त अत्यन्तमतुष्यन् । 'हृष तुष्टौ' इत्यतो लङ् । आर्षमात्मनेपदम् । पुरा नलसन्निधौ इव । यथा नलसन्निधौ तथेत्यर्थः ।

( ४ ) दमयन्तीति । यथा जलदागमे वर्षाकाले । तत्र हि जलदानां मेघानामागमो भवतीति । गम्भीर यथा तथा नदतः शब्द कुर्वतो मेघस्य । तथेति शेषः ।

( ५ ) परमिति । पुरा नलेन नलवाजिषु स्वीयेष्वश्वेषु सगृहीतेषु सयतेषु सत्सु इव । नलवाजिष्वित्यत्र स्वशब्दस्थाने नलशब्दप्रयोग आर्षः । महास्वनं महान् स्वनः प्रतिध्वनिरित्यर्थः यस्य त नाद रथघोषम् । पर आत्यन्तिकं विस्मय आश्चर्य आपन्ना प्राप्ता ।

( ६ ) सदृशमिति । भैमी दमयन्ती सदृश नलरथघोषतुल्यम् । प्रासादस्थाः प्रासादे राजमन्दिरे तिष्ठन्ति तथाभूताः शिखिनो मयूराः । तेषां हि शिरसि शिखा भवतीति । शालास्था गजशालास्था वारणा गजाश्च । सदृश मेनिर इति विपरिणामेन सबन्धः ।

( ७ ) कथमेतदवगम्यत इत्याह । हया इति । शुश्रुवुः परिचितमिव ध्वनिमेकतानेन मनसा श्रुतवन्त इति भावः । वस्तुतः पुनरर्धमेतदत्राधिकमिव प्रतिभाति । अश्वकृतरथध्वनिश्रवणस्य प्रागेवोक्तत्वात् । मेघनादे चाश्वानामौत्सुक्याप्रसिद्धेरिति । मेघनादे सतीव उत्सुकाः इष्टार्थप्राप्तौ समुद्युक्ताः । 'इष्टार्थोद्युक्त उत्सुकः' इत्यमरः । उन्मुखाः उन्नमित मुखं यैस्तथाभूताः सन्तः । प्रणेदुः ध्वनिं कृतवन्तः । उन्मुखत्व तु स्वभाव एतेषाम्

१ तच्छ्रुत्वा ( क. स. न. ) २ दृष्ट्वेव जलदोदयम् । ( क. )

दमयन्त्युवाच ।

यथाऽसौ रथनिर्घोषः पूरयन्निव मेदिनीम् ।
ममाह्लादयते चेतो नल एप महीपतिः ॥ ८
अद्य चन्द्राभवक्त्रं तं न पश्यामि नलं यदि ।
असंख्येयगुणं वीरं विनङ्क्ष्यामि न संशयः ॥ ९
यदि वैतस्य वीरस्य बाह्वोर्नाद्याहमन्तरम् ।
प्रविशामि सुखस्पर्शं न भविष्याम्यसंशयम् ॥ १०
यदि मां मेघनिर्घोषो नोपगच्छति नैपधः ।
अद्य चामीकरप्रख्यं प्रवेक्ष्यामि हुताशनम् ॥ ११
यदि मां सिंहविक्रान्तो मत्तवारणविक्रमः ।
नाभिगच्छति राजेन्द्रो विनङ्क्ष्यामि न संशयः ॥ १२
न स्मराम्यनृतं किंचिन्न स्मराम्यपकरितास् ।

(८) यथेति । यथा यस्मात् मेदिनीं पृथ्वीं पूरयन्निव वर्तमानो रथनिर्घोषः मम चेतो मन आह्लादयत आनन्दयति । तथेति शेषः । तस्मादित्यर्थः । एष रथारूढः महिपतिः नलः नल एवेत्यर्थ । यद्वा एषः अयमागत एवेति भावः ।

(९) अथेति । अथ इत पर, चन्द्राभवक्त्र चन्द्रस्येव आभा कान्तिर्यस्य तथाभूत वक्त्र मुख यस्य तम् । असख्येयगुण असख्येयाः सख्यातुमशक्या गुणा यस्य तम् । यदि न पश्यामि अचिरादेव न द्रक्ष्यामीत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । तदेति शेष. । विनङ्क्ष्यामि विनाश प्राप्स्यामि । विपूर्वान्नशेर्लट् । ' मस्जिनशोर्झली ' ति नुम् ।

(१०) यदीति । वै इति पादपूरणे । वा एतस्येति च्छेदः । एतच्छब्देनैवोपक्रमात् । तस्य वीरस्य नलस्य सुखस्पर्श सुखः सुखहेतुः स्पर्शो यस्य तथाभूतं बाह्वोर्भुजयोः अन्तर मध्यप्रदेशम् । प्रविशामि सत्वरं प्रवेक्ष्यामीत्यर्थः । पूर्ववद्भविष्यति लट् । तदेति शेपः । न भविष्यामि सत्ता न प्राप्स्यामि न जीविष्यामीत्यर्थः । भूधातुर्हि सत्तायां पठ्यते।

(११) यदीति । मेघनिर्घोषः मेघस्येव निर्घोषो ध्वनिर्यस्य सः । नोपगच्छति नोपगमिष्यतीत्यर्थः । चामीकरप्रख्य चामीकरस्य 'सुवर्णस्य प्रख्या कान्तिर्यस्य तम् । सुवर्णं किल चमीकरे नाम खनिविशेषे निष्पद्यत इति तद्भवत्वादस्य चामीकरत्वव्यपदेशः । हुताशन अग्निम् । स हि हुतमश्नातीति । प्रवेक्ष्यामि त विना जीवितस्य धारयितुमशक्यत्वादिति भावः ।

(१२) यदीति । सिंहविक्रान्तः सिंहस्येव विक्रान्त विक्रमः (पराक्रमः) यस्य तथाभूतः । मत्तवारणविक्रमः मत्तस्य वारणस्य गजस्येव विक्रमो गतिर्यस्य तथाभूतः । राजेन्द्रो नृपश्रेष्ठो नलः । अभिगच्छति उपगमिष्यति ।

(१३) नेति । नलस्येत्यध्याहारः । नलस्य स्वैरेषु स्वच्छन्दवर्तनेष्वपि

१ एव (क.)

न च पर्युषितं वाक्यं स्वैरेष्वपि कदाचन ।
प्रभुः क्षमावान्वीरश्च दाता चाप्यधिको नृपैः ॥ १३
रहोऽनीचानुवर्ती च क्लीबवन्मम नैषधः ।
गुणास्तस्य स्मरन्त्या मे तत्पराया दिवानिशम् ॥ १४
हृदयं दीर्यत इदं शोकात्प्रियविनाकृतम् ।
एवं विलपमाना सा नष्टसंज्ञेव भारत ॥ १५
आरुरोह महद्वेश्म पुण्यश्लोकदिदृक्षया ।

---

किञ्चित् अल्पमपि अनृत मिथ्यावचन, अपकारितां अपकारशीलताम् पर्युषित प्रतिज्ञातकालविलङ्घि । परित्यज्य कालमुषित पर्युषितम् । अत्र एव प्रायेण प्रयुज्यमानः शब्दोऽय तद्गुणयोगाद्वचने लाक्षणिकः । 'पर्युषित अवगत' ( विगीत, गर्ह्यम् ) इति चतुर्भुजः । न स्मरामि । प्रभुः समर्थः-नृपैरिति पञ्चम्यर्थे तृतीया आर्षी । इतरेभ्यो नृपेभ्य इत्यर्थः । अधिकः श्रेष्ठः ।

( १४) एवंविधगुणोऽपि नात्मनि तद्गुणावष्टब्धः प्रत्युतात्यन्तमनुवर्तनादिशील इत्याह । रह इति । नैषधः स नलः मम रहोऽनीचानुवर्ती नास्ति नीचमपकृष्ट यस्मात्तथा तथाऽनुवर्तितु शील यस्य तथाभूतः । अत्यन्तमनुवर्तनशील इत्यर्थः । रहसि तथाभूतो रहोऽनीचानुवर्ती । अहो नीचानुवर्तीति पाठान्तरे अहो इति विस्मये । गुणानामलौकिकत्वस्मरणाद्विस्मयः । नीचानुवर्ती न्यग्भावेनानुवर्तनशील इति चतुर्भुजः । 'रहसि कर्तव्ये *** विषये नीचकर्म पारदार्यादि तदनुवर्तत इति तदन्यः अनीचानुवर्ती ' इति नीलकण्ठः च किंच क्लीबवत् अमर्षशून्य इव आसीदिति शेषः । मत्सम्बन्धे कदाचिदप्यमर्षं न चकारेति भावः । ' क्लैब्य मास्म गमः पार्थ ' इत्यादौ संदृष्टः क्लीबशब्दोऽमर्षशून्यत्वार्थे । 'परस्त्रीषु क्लीब इत्यर्थे' इति नीलकण्ठः। शब्दस्य पुनरेतस्यात्र गौणवृत्तिव्यपाश्रय एव श्रेयान् । विशेषतश्च साध्व्या दमयन्त्या वचने । गुणानित्ययमुत्तरान्वयि । दिवानिश तत्परायास्तस्मिन्नल आसक्तायाः ।

( १५) हृदयमिति । प्रियविनाकृत प्रियेण विरहितम् । एष चात्मनिष्ठस्य धर्मस्य मनस्यारोपः इद हृदय शोकात् दुःखानुभवात् हेतुभूतात् दीर्यते विदीर्णं भवति । दीर्यतिर्विदारणे दैवादिक । अपरिसमाप्तत्वाद्दिवादेः । ' न विदीर्ये कठिनाः खलु स्त्रियः । ' इति कालिदास. । एवमिति । विलपमाना विलापशीला विलपन्तीति यावत् । ताच्छील्ये चानश् । नष्टसंज्ञेव नष्टा विलुप्ता संज्ञा चेतना यस्यास्तथाभूतेव अभूदिति शेषः ।

( १६ ) आरुरोहेति । तत इति देहलीदीपन्यायेनोभयथापि सम्बध्यते। ततः तदनन्तरम् पुण्यश्लोकदिदृक्षया पुण्यश्लोकस्य नलस्य दिदृक्षा द्रष्टुमिच्छा

---

महात्मनः ( क ) २ अहो ( च ) ३ दलाान् ४ भन.पर ' आलोकयन्ती ददृशे भैमी राजमार्गगतं नलम् ' इत्यधिकं पुस्तके ।

ततो मध्यमकक्षायां ददर्श रथमास्थितम् ॥ १६
ऋतुपर्णं महीपालं सहवार्ष्णेयबाहुकम् ।
ततोऽवतीर्य वार्ष्णेयो बाहुकश्च रथोत्तमात् ॥ १७
हयांस्तानवमुच्याथ स्थापयामास तं रथम् ।
सोऽवतीर्य रथोपस्थादृतुपर्णो नराधिपः ॥ १८
उपतस्थे महाराजं भीमं भीमपराक्रमम् ।
तं भीमः प्रतिजग्राह पूजया परया ततः ॥ १९
स तेन पूजितो राज्ञा ऋतुपर्णो नराधिपः ।
स तत्र कुण्डिने रम्ये वसमानो महीपतिः ॥ २०
न च किंचित्तदाऽपश्यत्प्रेक्षमाणो मुहुर्मुहुः ।
स तु राज्ञा समागम्य विदर्भपतिना तदा ॥ २१
अकस्मात्सहसा प्राप्तं स्त्रीमन्त्रं न स्म विन्दति ।

---

तया हेतुभूतया । महद्वेश्म गृहं राजमन्दिरमित्यर्थः । आरुरोह अरूढवती । तुङ्गगृहाग्रस्थितया हि शक्यमशेषमप्यालोकयितुमिति । तत इत्यर्धमुत्तरान्वयि । मध्यमकक्षाया मन्दिरमध्यप्रकोष्ठे । प्रकोष्ठश्च ' चौक ' इति महाराष्ट्र्यां ख्यातः। रथ आस्थित आश्रित्य स्थितम् । रथोपविष्टमित्यर्थः ।

(१७)ऋतुपर्णमिति। सहवार्ष्णेयबाहुक वार्ष्णेयबाहुकाभ्या सह वर्तमानम् । तत इत्यर्थमुत्तरान्वयि ।

(१८)हयानिति । तान् रथे योजितपूर्वान्। अवमुच्य मोचयित्वा । रथं स्थापयामास यथास्थानमित्यर्थात्। स्थापयामासतुरिति पाठे तु उभयापेक्षया द्विवचनम्। स इत्यर्धमुत्तरान्वयि । रथोपस्थात रथमध्यात् । ' रथोपस्थ उपाविशत् ' इति गीता ।

( १९ ) उपतस्थ इति । उपतस्थ उपजगाम । ' उपाद्देवपूजे ' इत्यादिना सगतिकरण आत्मनेपदम्। भीमपराक्रम भीम• शत्रुभयङ्करः पराक्रमो यस्य तथाभूतन् । परया पूजया बहुमानेन सबहुमानमित्यर्थः । प्रतिजग्राह स्वीचकार । आत्मनो गृह प्रवेशयामासेत्यर्थः ।

( २० ) स इति । तेन राज्ञा भीमेन स नराधिप ऋतुपर्णः पूजितः । ततः तत्र कुण्डिने वसमानो वासशीलः । चानश्। वसन्निति यावत् । स महीपती राजा ऋतुपर्णः । उत्तरान्वय्यर्धमिदम् ।

( २१ ) नेति। मुहुर्मुहुः वार वार प्रेक्षमाणः प्रकर्षेण पश्यन्नपि निपुणं निरूपयन्नपीत्यर्थः । स्वयंवरस्थानादिजिज्ञासया प्रेक्षणम् । तदा स ऋतुपर्णः राज्ञा विदर्भपतिना कर्त्रा समागम्य पृष्ट इति शेषः ।

( २२ )भीमस्य प्रश्नमाह अकस्मादिति। अकस्मात् अवितर्कितं सहसा बलेन वेगेनेत्यर्थः । प्राप्त प्राप्तिः कुत्रापि देश उपस्थानम् कर्तृ । ' नपुंसके

---

१ मुदा ( क ) २ स्त्रीमन्त्र ( क. म. )

किं कार्यं स्वागतं तेऽस्तु राज्ञा पृष्टः स भारत ॥ २२
नाभिजज्ञे स नृपतिर्दुहित्रर्थे समागतम् ।
ऋतुपर्णोऽपि राजा स धीमान्सत्यपराक्रमः ॥ २३
राजानं राजपुत्रं वा न स्म पश्यति कंचन ।
नैव स्वयंवरकथां न च विप्रसमागमम् ॥ २४
ततो विगणयन्राजा मनसा कोसलाधिपः ।
आगतोऽस्मीत्युवाचैनं भवन्तमभिवादकः ॥ २५
राजाऽपि च स्मयन्भीमो मनसा समचिन्तयत् ।

भावे क्त' इति क्तः । श्रीमन्त भवन्तम् । गौरवे खल्वप्रयुज्यैव युष्मद श्रीमदाद्याः शब्दाः प्रयुज्यन्ते । न विन्दति न भजते न कदाचिदपि त्वमवितर्कित च सत्वर च काचिदप्युपतिष्ठसीति भावः । तत्कुत एतदद्यैवमत्रागमनाभिति वचनाशयः । ते स्वागत शोभनमागमन अस्तु । किं ते इत्यनुपज्यते । किं कार्यम् । इति राज्ञा भीमेन पृष्टः ।

(२३) ननु स्वयवरार्थमुपगते कुत एष प्रश्न इत्यनाह । नेति । स नृपतिर्भीमः तं ऋतुपर्णम् । दुहित्रर्थे आत्मनः कन्यायाः कृते । स्वयवरेण तां परिणेतुमित्यर्थः । समागतं नाभिजज्ञे न ज्ञातवान् । ऋतुपर्ण इत्यर्धमुत्तरान्वयि स्पष्टार्थं च ।

(२४) राजानमिति । स्वयवरार्थमुपस्थितमित्यर्थः । एकमपत्यैकवचन-प्रयोगतो गम्यते । न पश्यति स्म न ददर्श । स्वयंवरकथा स्वयवरस्य वार्ताम् । अपीति गम्यम् । विप्रसमागम ब्राह्मणानामागमनम् । स्वयवरोत्स-वार्थमित्यर्थः । अत' पर प्राक्षिप्तमर्धं नात्यन्तमावश्यकम् । तत्र च स्वयवर-विधिं प्रति स्वयवरविधिविषये अन्य एतद्भिन्न कञ्चित्कमप्यारम्भ उद्योगम् । न स्म पश्यतीत्यनेन सबन्धः । 'आरम्भस्तु त्वरायां स्यादुद्यमे' इति मेदिनी ।

( २५ ) तत इति । कोसलाधिपः उत्तरकोसलेश्वरः ऋतुपर्णः । अयोध्या ह्युत्तरकोसलदेशराजधानी । 'प्रियाङ्गलीरुत्तरकोसलेश्वरः' इति रघुः । मनसा विगणयन् प्रतारितोऽहमेतेनेति समाधनया अपहेलयन् । भवन्तं अभिवादकः अभिवादयिष्यन् नमस्करिष्यन् सन् । नमस्कर्तुमिच्छामीति यावत् । 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति भविष्यति ण्वुल् । 'भविष्यति गम्यादय' इत्यतो भविष्यतीत्यनुवृत्तेः । 'अकेनोर्भविष्यदाध-मर्ण्ययोः' इति षष्ठीनिषेधात्कर्मणि द्वितीया सोऽनुण्ठनोक्तिरियम् । आभि-वादुक इति पाठस्तु प्रमादिक । उको विधानाभावात् । आगतोऽस्मि इति एनं भीममुवाच ।

(२६) राजेति । स्मयन् किंचित् हसन् । आर्षं परस्मैपदम् । असमाप्यमान-वचनभयत्वात् स्मितोदय' । मनसा करणभूतेन तस्य ऋतुपर्णस्य आगमन-

१ मन. ९८ ' न पश्य कंचिदारम्भं नादेवरसिंध मति ॥ ' इत्यधिक कुम्भके ।

अधिकं योजनशतं तस्यागमनकारणम् ॥ २६
राज्ञश्चान्याननतिक्रम्य प्राप्तोऽयमभिवादकः ।
ग्रामान्बहूनतिक्रम्य नाध्यगच्छद्यथातथम् ॥ २७
अल्पकार्यं विनिर्दिष्टं तस्यागमनकारणम् ।
पश्चादुदर्के ज्ञास्यामि कारणं यद्भविष्यति ॥ २८
नैतदेवं स नृपतिस्तं सत्कृत्य व्यसर्जयत् ।
विश्राम्यतामित्युवाच क्लान्तोऽसीति पुनः पुनः ॥ २९
स सत्कृतः प्रहृष्टात्मा प्रीतः प्रीतेन पार्थिवः ।
राजप्रेष्यैरनुगतो दिष्टं वेश्म समाविशत् ॥ ३०

---

कारणं समचिन्तयदिति संबन्धः चिन्तनमाह अधिकमित्यादिना । अधिकं कियताऽप्यंशेनेति शेषः। योजनशतं अतिक्रम्येत्युत्तरेण संबन्धः । योजनं च क्रोशानां चतुष्टयमित्यवोचाम ।

(२७) राज्ञ इति । अन्यान् राज्ञः अतिक्रम्य बहून् ग्रामांश्च अतिक्रम्य अयमृतुपर्णः अभिवादकः प्रणमिष्यन् सन् प्राप्त इति प्रश्ने काकुः । नैतच्छक्यमिति भावः । ' इति विचारयन्निति शेषः । यथातथं परमार्थं नाध्यगच्छत् न ज्ञातवान् । ' यथार्थं तु यथातथम् । ' इत्यमरः । तथाशब्दः सत्यवचनस्तस्य च पदार्थानतिवृत्तौ यथाशब्देनाव्ययीभावः ।

(२८) पुनर्भीमस्य मानसीमुक्तिं निर्दिशति अल्पमिति । तस्य ऋतुपर्णस्य आगमनकारणं आगमने हेतुभूतं अल्पकार्यं अल्पं क्षुद्रं कार्यं विनिर्दिष्टं तेनेत्यर्थात् । यत् कारणं भविष्यति स्यादित्यर्थः । तदिति शेषः । उदर्के भाविनि फले सति ज्ञास्यामि । फलं च कार्यम् । आगामिनि काले यत्कार्यमेष करिष्यति ततः शक्यमागमनकारणं विज्ञातुमिति भावः । 'उदर्कः फलमुत्तरम् ' इति मेदिनी । लक्षणया भविष्यत्कालवचनो वाऽयमुदर्कशब्दः । आगामिनि काले ज्ञास्यामीत्यर्थः ।

(२९) ननु भोः कथितमेवैतेन कारणं तत्कुतः पुनर्जिज्ञासेत्याह । नेति एतत् अभिवादक आगतोऽस्मीति वचनं एवं न । असंभावादिति भावः। इति विचिन्त्येति शेषः । नृपतिर्भीमः तं ऋतुपर्णं सत्कृत्य संभाव्य व्यसर्जयत् निवासस्थानं प्रति निवासाय प्रस्थापयामास । क्लान्तः परिश्रान्तः असि इति हेतोः विश्राम्यतां विश्रान्तिः सेव्यतां इति पुनः पुनरुवाच। विश्राम्यतामिति 'मितां ह्रस्व' इत्यत्र वा चित्तविराग इत्यतो वेत्यनुवर्त्य व्यवस्थितविभाषाश्रयणात्

(३०) स इति । प्रीतेन प्रेमविशिष्टेन राज्ञा भीमेन सत्कृतः प्रीतः प्रेमविशिष्टः स पार्थिव ऋतुपर्णः प्रहृष्टात्मा प्रहृष्ट आनन्दं प्राप्त आत्मा मनो यस्य तथाभूतः सन् राजप्रेष्यैः राज्ञो भीमस्य दासैरनुगतः दिष्टं वासाय निर्दिष्टं दत्तं या वेश्म गृहम् ।

---

१ अर्धमिदं क. च. न. म. पुस्तकेषु न दृश्यते।

ऋतुपर्णे गते राजन्वार्ष्णेयसहिते नृपे ।
बाहुको रथमादाय रथशालामुपागमत् ॥ ३१
स मोचयित्वा तानश्वानुपचर्य च शास्त्रत ।
स्वयं चैतान्समाश्वास्य रथोपस्थ उपाविशत् ॥ ३२
दमयन्ती तु शोकार्ता दृष्ट्वा भाङ्गासुरिं नृपम् ।
सूतपुत्रं च वार्ष्णेयं बाहुकं च तथाविधम् ॥ ३३
चिन्तयामास वैदर्भी कस्यैष रथनि स्वन: ।[1]
नलस्येव महानासीन्न च पश्यामि नैषधम् ॥ ३४
वार्ष्णेयेन भवेन्नूनं विद्या सैवोपशिक्षिता ।
तेनाद्य रथनिर्घोषो नलस्येव महानभूत् ॥ ३५
आहोस्विदृतुपर्णोऽपि यथा राजा नलस्तथा ।
तस्यायं रथनिर्घोषो नैषधस्येव लक्ष्यते ॥ ३६
एवं सा तर्कयित्वा तु दमयन्ती विशांपते ।

---

( ३१ ) ऋतुपर्णं इति । उपागमत् उपागतवान् गमेर्लुङ् । लृदित्वादङ् च ।

( ३२ ) स इति । शास्त्रत. शास्त्रानुसारेण स्वय उपचर्य सेवित्वा । तत्परिश्रमापनोदाद्यर्थमुपचारान् कृत्वेत्यर्थ. । एतानश्वान् समाश्वास्य पृष्ठा स्फालनादिना सुखयित्वा । रथोपस्थे रथमध्ये उपाविशत् उपविष्टवान् ।

( ३३ ) दमयन्तीति । शोकार्ता शोकपीडिता सती चिन्तयामासेत्युत्तरेण संबन्ध' । त्रिष्वेतेषु नलस्यादर्शनाच्छोक' । तथाविध तत्प्रकार विरूपमित्यर्थ ।

( ३४ ) चिन्तयामासेति । चिन्तामाह कस्येत्यादिना त्रितयेन । एष मे बुद्ध्यारूढ. । नैषध नलम् ।

( ३५ ) तर्कान्तरेण समाधत्ते । सैव नलगतैव विद्या वार्ष्णेयेन नलसार थिना । उपशिक्षिता भवेत् । तेन हेतुना अस्य वार्ष्णेयस्य । तदुपपद्यते रथ ध्वनिसादृश्यमिति भाव ।

( ३६ ) पक्षान्तरमाह आहोस्विदिति । आहोस्वित् अथवा ऋतुपर्णोऽपि यथा राजा नलस्तथा विद्यते । अश्वहृदयज्ञ इत्यर्थ । रथनिर्घोष तस्य नैषधस्य नलस्येव तद्रथनिर्घोष इवेत्यर्थ । लक्ष्यते दृश्यते ।

( ३७ ) एवमिति । शुभा कल्याणी दमयन्ती । नैषधान्वेषणे नैषधस्या-न्वेषणार्थम् । निमित्ते सप्तमी 'चर्मणि द्वीपिन हन्ती' त्यादिवत् । दूती प्रस्थापयामास प्रेषितवती । अनन्यसुलभेन रथनिर्घोषेण बलवत्तरेण हेतुना

---

1 दमय त्यपि ( क म न )

दूतीं प्रस्थापयामास नैषधान्वेषणे शुभा ॥ ३७
इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
भीमपुरप्रवेशे त्रिसप्ततितमोऽध्यायः ।

## चतुःसप्ततितमोऽध्यायः ।

दमयन्त्युवाच—

गच्छ केशिनि जानीहि क एष रथवाहकः ।
उपविष्टो रथोपस्थे विकृतो ह्रस्वबाहुकः ॥ १
अभ्येत्य कुशलं भद्रे मृदुपूर्वं समाहिता ।
पृच्छेथाः पुरुषं ह्येनं यथा तत्त्वमनिन्दिते ॥ २
अत्र मे महती शङ्का भवेदेष नलो नृपः ।
यथा च मनसस्तुष्टिर्हृदयस्य च निर्वृतिः ॥ ३
ब्रूयाश्चैनं कथान्ते त्वं पर्णादवचनं यथा ।
प्रतिवाक्यं च सुश्रोणि बुद्ध्येथास्त्वमनिन्दिते ॥ ४

---

सामान्यतो नलस्योपस्थान प्रतीत्यापि तस्यादर्शनाद्याकुलहृदया हयानां सङ्ग्रहीतारं बाहुकमेव चापाततो नल सम्भावयन्ती तत्त्वं च जिज्ञासमाना दूतीं प्राहैषीदित्यर्थः ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां त्रिसप्ततितमोऽध्यायः।

( १ ) गच्छेति । केशिनीति दूत्या नाम । ज्ञातव्यमाह क इति । एष क इति जानीहीत्यर्थः । विकृतो बीभत्साकारः । 'विकृत त्रिषु बीभत्स' इति मेदिनी । ह्रस्वबाहुकः ह्रस्वावल्पप्रमाणौ बाहू यस्य तथाभूतः ।

( २ ) ज्ञानसाधन विधिमाह अभ्येत्येति । अभ्येत्य समीपे गत्वा । सुसमाहिता अत्यन्त अवहिता । मृदुपूर्वं मृदु मार्दव पूर्वं पुरःसर यत्र तद्यथा तथा । पृच्छेथा इत्यार्षमात्मनेपदम् । प्रच्छेर्विधौ लिङ् । यथा येन प्रकारेण तत्त्वं परमार्थः विज्ञायेतेति शेषः । यथातत्त्वमित्येक वा पदम् । तत्त्वं परमार्थप्रकाशमनतिक्रम्य । तथा पृच्छेथा यथा तत्त्वमस्य विज्ञायेतेति भावः ।

( ३ ) किमेतेनेति चेत्तत्राह अत्रेति । अत्रएतत्पुरुषविषये । शङ्का संभावना । शङ्कास्वरूपमाह भवेदिति । एष पुरुषः नलो नृपः भवेदिति । न केवलं शङ्कामात्रमिदं, विद्यते तु प्रमाणान्तरमपीत्याह यथेति । यथा यस्मात् निर्वृतिः सुखम् । भवतीति शेषः । 'निर्वृतिः सुस्थितावस्तंगमनेऽपि सुखे स्त्रियाम् ।' इति मेदिनी । 'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय' इति भावः ।

( ४ ) ब्रूया इति । यथा पर्णादवचनं पर्णादस्य नाम द्विजस्य वचनं प्राक् (अ. ६९ प. ३७-३९) निर्दिष्टं तथा । प्रतिवाक्यमुत्तरम् । सुश्रोणि शोभननितम्बे सुन्दरीत्यर्थः ।

ततः समाहिता गत्वा दूती बाहुकमब्रवीत् ।
दमयन्त्यपि कल्याणी प्रासादस्था ह्युपैक्षत ॥ ५

केशिन्युवाच—

स्वागतं ते मनुष्येन्द्र ! कुशलं ते ब्रवीम्यहम् ।
दमयन्त्या वचः साधु निबोध पुरुषर्षभ ॥ ६
कदा वै प्रस्थिता यूयं किमर्थमिह चागताः ।
तत्त्वं ब्रूहि यथान्यायं वैदर्भी श्रोतुमिच्छति ॥ ७

बाहुक उवाच—

श्रुतः स्वयंवरो राज्ञा कौसलेन महात्मना ।
द्वितीयो दमयन्त्या वै भविता श्व इति द्विजात् ॥ ८
श्रुत्वैतत्प्रस्थितो राजा शतयोजनयायिभिः ।
हयैर्वातजवैर्मुख्यैरहमस्य च सारथिः ॥ ९

केशिन्युवाच—

अथ योऽसौ तृतीयो वः स कुतः कस्य वा पुनः ? ।
त्वं च कस्य कथं चेदं त्वयि कर्म समाहितम् ? ॥ १०

बाहुक उवाच—

पुण्यश्लोकस्य वै सूतो वार्ष्णेय इति विश्रुतः

( ५ ) तत इति । समाहिता समाधानविशिष्टा अवधानयुक्ता वा । उपैक्षत समीपतो दृष्टवती । अन्ववैक्षतेतिपाठस्तु साधुतमः । उपेक्षतेरुपेक्षणार्थत्वात् एवमभ्युदैक्षतेत्यपि ।

( ६ ) स्वागतमिति । हे मनुष्येन्द्र नरश्रेष्ठ । राज्ञयेव रूढः शब्दोऽयं तत्त्वजिज्ञासया दूत्या बाहुके प्रयुक्तः । अहं ते तव कुशलं क्षेमं ब्रवीमि भवत्विति वदामि । निबोध अवधारय शृणु वा ।

( ७ ) कदेति । प्रस्थिता विनिर्गताः । यूयं त्वदाद्यास्त्रयः । तत् तमर्थम् । तत्त्वं परमार्थं वा । यथान्यायं यथायोग्यम् । कुतः कथनमित्याह वैदर्भीति ।

( ८ ) श्रुत इति । कौसलेन कोसलदेशाधीश्वरेण । 'तस्येश्वर' इत्यण् । महात्मना उदारमनसा श्वः आगामिनि दिवसे । भविता भावी इति श्रुतः ।

( ९ ) श्रुत्वेति । एतत्स्वयंवरवृत्तम् । शतयोजनयायिभिः शतं योजनानि यातुं गन्तुं शीलं येषां तथाभूतैः । यातेस्ताच्छील्यिको णिनिः । युक् च । प्रत्यहं योजनशतातिक्रमणसमर्थैरित्यर्थः ।

( १० ) अथेति । अथ अनन्तरं कथ्यतामित्यर्थः । वः युष्माकं त्रयाणां मध्ये यस्तृतीयः त्रयाणां पूरणः । पुनरिति किंचेत्यर्थः । कस्य स्वाम्यसम्बन्धे षष्ठी । किंस्वामिकः कस्य दास इत्यर्थः । एवमुत्तरत्रापि इदं कर्म सारथ्यरूपं त्वयि समाहितं निहितं त्वदायत्तं कृतमित्यर्थः ।

( ११ ) तृतीयः क इति प्रश्नमुत्तरयति पुण्येति । वै पादपूरणे । विश्रुतः

१ एव ( क. च. ) २ अन्ववैक्षत ( क ) अभ्युदैक्षत ( च. )

स नले विद्रुते भद्रे भाङ्गासुरिमुपस्थितः ॥ ११
अहमप्यश्वकुशलः सूतत्वे च प्रतिष्ठितः ।
ऋतुपर्णेन सारथ्ये भोजने च वृतः स्वयम् ॥ १२

केशिन्युवाच—

अथ जानाति वार्ष्णेयः क नु राजा नलो गतः ? ।
कथं च त्वयि वै तेन कथितं स्यात्तु बाहुक ? ॥ १३

बाहुक उवाच—

इहैव पुत्रौ निक्षिप्य नलस्य शुभकर्मणः ।
गतस्ततो यथाकामं नैष जानाति नैषधम् ॥ १४
न चान्यः पुरुषः कश्चिन्नलं वेत्ति यशस्विनि ! ।
गूढश्चरति लोकेऽस्मिन्नष्टरूपो महीपतिः ॥ १५
आत्मैव [2]हि नलं वेद या चास्य तदनन्तरा ।

---

प्रथितः (प्रसिद्धः)। 'प्रथितख्यातवित्तविज्ञातविश्रुता. ।' इत्यमरः । विद्रुते अपगते सति । स एवायमस्मासु तृतीय इत्यर्थः ।

( १२ ) आत्मवृत्तमाह । अहमिति । अश्वकुशलः अश्वविद्यायां चतुरः। सूतत्वे साराथिकर्मणि । ब्राह्मणादेराकृतिगणत्वा कर्मणि त्व । प्रतिष्ठितः प्रतिष्ठां प्राप्तः । सुदृढं मे सारथ्यकौशलमित्यर्थ । सारथ्ये साराथिकर्मणि भोजने पाककर्मणि च । भोजनशब्दश्च पाके लाक्षणिक । स्वय आत्मना स्वेच्छयेत्यर्थः । वृतः अङ्गीकृतः ।

( १३ ) अथेति । अथशब्दोऽत्र प्रश्नार्थ । ' मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ ।' इत्यमरः । नलो गतः। इतीति शेषः जानाति किम् । कथमेतन्मया वक्तव्यमिति चेत्तत्राह । कथ चेति कथ च कथमपि केनापि प्रकारेणेत्यर्थः । त्वयि त्वत्समीपे एतेन कथितं स्यात् । वा तेनेत्यादिपाठस्तु नातिसाधुः ।

( १४ ) इहेति । पुत्रौ पुत्र च पुत्री च । एकशेषः । ' पुत्रौ पुत्रश्च दुहिता च । ' इत्यमरः । इहैव अस्मिन्नेव कुण्डिननगरे । यथाकाम स्वेच्छानुसारेण न तु नलमनुसृत्येति भाव. । एष च नलचरिताविज्ञाने हेतुः ।

( १५ ) न केवल वार्ष्णेयः परोऽपि कोऽपि नैव वेदेत्याह । नेति यशस्विनि प्रशस्तयशःशालिनि । प्राशस्त्ये मतुप् । कथ न वेत्तीत्याह गूढ इति। नष्टरूपः नष्ट तिरोहित रूपमाकारो यस्य तथाभूतः । अत एव च गूढः अविशेयः सन् चरति । नष्टरूप इति यत्र दमयन्त्या नलत्वसंदेहस्ततः पूर्वरूपादर्शनादेव केवल तन्निवृत्तिर्मा भवत्विति सूचयन्नात्मनो नलत्वमभिव्यञ्जयति । चरतीति च नायमत्यन्त विनष्ट इति द्योत्यते ।

( १६ ) ततिंक सर्वथा नैवाय विज्ञेय इति चेत्तत्राह । आत्मेति ।

---

१ भागसुरिम् ( क ) भाङ्गासुरिम् (च) २ प्रियदर्शनो (क) शुभलक्षणो (च) ३ तु (क)

तत्सर्वं कथितं चैव विकारं तस्य चैव तम् ॥ ३१

इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि केशिनीवाक्ये चतुःसप्ततितमोऽध्यायः ।

## पञ्चसप्ततितमोऽध्यायः ।

बृहदश्व उवाच—

दमयन्ती तु तच्छ्रुत्वा भृशं शोकपरायणा ।
शङ्कमाना नलं तं वै केशिनीमिदमब्रवीत् ॥ १
गच्छ केशिनि ! भूयस्त्वं परीक्षां कुरु बाहुके ।
अब्रुवाणा समीपस्था चरितान्यस्य लक्षय ॥ २
यदा च किंचित्कुर्यात्स कारणं तत्र भाविनी !।
तत्र संचेष्टमानस्य लक्षयन्ती विचेष्टितम् ॥ ३
न चास्य प्रतिबन्धेन देयोऽग्निरपि केशिनि ! ।
याचते न जलं देयं सर्वथा त्वरमाणया ॥ ४

---

मिति नपुंसके भावे क्तः । तं स्वेनानुभूतं तस्य विकारं दुःखादिरूपम् । दमयन्त्यै न्यवेदयत् ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां चतुःसप्ततितमोऽध्यायः ।

---

( १ ) दमयन्तीति । भृशं अत्यन्तं शोकपरायणा भर्तुःस्थित्यन्तरसंभावनेन दुःखानुभवपरायणा तं बाहुकं नलं शङ्कमाना संभावयन्ती ।

( २ ) गच्छेति । भूयः पुनरपि बाहुके बाहुकविषये परीक्षां कुरु । परीक्षणप्रकारमाह अब्रुवाणेति । अब्रुवाणा समीपस्था समीपवर्तिनी सती अस्य चरितानि आचरणानि लक्षय पश्य ।

( ३ ) यदेति । हे भाविनि प्रेमशालिनि केशिनि यदा च स किंचित् किमपि कारणं क्रियाम् । करणमेव कारणं स्वार्थेऽण् । करणं च क्रिया । तदा तत्र क्रियायां विषये चेष्टमानस्य प्रयतमानस्य विचेष्टितं व्यापारं लक्षयन्ती पश्यन्ती भवेति शेषः । सलक्षयेथा इति पाठः प्रामादिक आर्षत्वाद्वा साधुः ।

( ४ ) नेति । प्रतिबन्धेन प्रतिबन्धात् । हेतौ तृतीया । दानस्य मया प्रतिषिद्धत्वादित्यर्थः । अस्य अस्मै । शेषे षष्ठी । अग्निरपि न देयः । नलः किल स्वयंवरसमये देवैः प्रदत्ताद्वरतः स्वयमेवाग्न्यादीनां विनिर्माणे समर्थ इति तत्प्रतिबन्धे स एवायं न वेति शक्यं निश्चेतुमित्यग्न्यादिप्रदानप्रतिबन्धः । याचते प्रार्थयमानाय । याचतेः स्वरितेत्त्वात्परस्मैपदे लटः शता । सर्वथा केनापि प्रकारेण ।

---

१ केशिन्यास्तद्वचः श्रुत्वा दमयन्ती विशाम्पते ( क ) २ मन्त्रय ( क ) ३ सकृच्चा ( क )

एतत्सर्वं समीक्ष्य त्वं चरितं मे निवेदय ।
निमित्तं यत्त्वया दृष्टं बाहुके दैवमानुषम् ॥ ५
यच्चान्यदपि पश्येथास्तच्चाख्येयं त्वया मम ।
दमयन्त्यैवमुक्ता सा जगामाथ च केशिनी ॥ ६
निशाम्याथ हयज्ञस्य लिङ्गानि पुनरागमत् ।
सा तत्सर्वं यथावृत्तं दमयन्त्यै न्यवेदयत् ॥
निमित्तं यत्तया दृष्टं बाहुके दैवमानुषम् ॥ ७

केशिन्युवाच—

दृढं शुच्युपचारोसौ न मया मानुषः क्वचित् ।
दृष्टपूर्वः श्रुतो वाऽपि दमयन्ति तथाविधः ॥
ह्रस्वमासाद्य तु द्वारं नासौ विनमते क्वचित् ॥ ८
तं तु दृष्ट्वा यथासङ्गमुत्सर्पति यथासुखम् ।

---

( ५ ) एतदिति । समीक्ष्य दृष्ट्वा । बाहुके दैवमानुषं दैवं देवसम्बन्धि दिव्यमित्यर्थः तच्च मानुषं मनुष्यसम्बन्धि च अलौकिकं च लौकिकं चेत्यर्थः । 'सर्वो द्वन्द्वो विभाषयैकवद्भवती' त्येकवद्भावः । यत् निमित्तं लक्षणं त्वया दृष्टं तन्मे निवेदय । 'निमित्तं हेतुलक्ष्मणोः' इति मेदिनी ।

( ६ ) यदिति । पश्येथाः पश्येः । दृशेर्लिङ् आर्षमात्मनेपदम् । मम मह्यं, शेषे षष्ठी । आख्येयं कथनीयम् ।

( ७ ) निशाम्येति । अथ गमनानन्तरं हयज्ञस्य अश्वशास्त्रज्ञस्य बाहुकस्य लिङ्गानि लक्षणानि निशाम्य दृष्ट्वा । शमोदर्शन इत्युक्तेर्दर्शने मित्त्वाभावान्न ह्रस्वः । 'ईक्षणं तु निशामनम् ।' इति हैमः । यथावृत्तं वृत्तं घटितमनतिक्रम्य घटनानुसारेणेत्यर्थः ।

(८) दृढमिति । असौ बाहुकः दृढं अत्यन्तं शुच्युपचारः । शुचिः उपचार आचारो यस्य तथाभूतः । उपाङोः समानार्थत्वात् । 'गाढबाढदृढानि च' इत्यत्यन्तपर्यायेष्वमरः । अस्तीति शेषः । मया तथाविधो नलसदृशः मानुषः क्वचित् कुत्रापि न दृष्टपूर्वः पूर्वं न दृष्टः नापि वा श्रुतः । अश्रुतदृष्टपूर्वत्वसाधकानि लक्षणान्याह । असौ ह्रस्वं अनुन्नतं सञ्चारं प्रवेशद्वारम् । सञ्चरन्त्यनेनेति करणे घञ् बाहुलकात् । आसाद्य प्राप्य । अवनमनस्यावश्यकत्वे सत्यपीति भावः । न विनमते नावनमति । आर्षमात्मनेपदम् । 'आसाद्य तु द्वारमि'ति पाठस्त्वाङ्गिष्टत्वात्साधुतमः । उत्तरत्र पुनस्तत्तु दृष्ट्वेत्येव पाठ आवश्यकः । सञ्चारो द्वारमिति नीलकण्ठः ।

( ९ ) तमिति । तु किन्तु तं सञ्चारं दृष्ट्वा यथाऽसङ्गं असङ्गं अनिरोधं अतिक्रम्य न भवति तथा अप्रतिबन्धं यथा तथेत्यर्थः । अस्ति च निरोधार्थः सङ्गशब्दः । 'सङ्गो मूत्रपुरीषयोः' इत्यादिष्वायुर्वेदवचनेषु

---

१ दिव्य (क. च.) २ दृढं शुच्यपदानोऽसौ (क) दृढं शुद्धोपचारोऽसौ, (च)

संकटेऽप्यस्य सुमहान्विवरो जायतेऽधिकः ॥ ९
ऋतुपर्णस्य चार्थाय भोजनीयमनेकशः ।
प्रेषितं तत्र राज्ञा तु मांसं बहु च पाशवम् ॥ १०
तस्य प्रक्षालनार्थाय कुम्भास्तत्रोपकल्पिताः ।
ते तेनावेक्षिताः कुम्भाः पूर्णा एवाभवंस्ततः ॥ ११
ततः प्रक्षालनं कृत्वा समधिश्रित्य बाहुकः ।
तृणमुष्टिं समादाय सवितुस्तं समादधत् ॥ १२
अथ प्रज्वलितस्तत्र सहसा हव्यवाहनः ।
तदद्भुततमं दृष्ट्वा विस्मिताऽहमिहागता ॥ १३
अन्यच्च तस्मिन्सुमहदाश्चर्यं लक्षितं मया ।
यदग्निमपि संस्पृश्य नैवासौ दह्यते शुभे ॥ १४
छन्देन चोदकं तस्य वहत्यावर्जितं द्रुतम् ।

तथाविधार्थदर्शनात् । त नलमित्यर्थस्तु न साधुः । तुकारस्वारस्यभङ्गप्रसङ्गात् । उत्सर्पति उन्नत एव गच्छतीत्यर्थः । द्वारस्याल्पत्वे कथं गमनसंभव इत्यत्राह सङ्कट इति । संकटे अल्पावकाशे संचारे सत्यपि । 'संकटं ना तु संबाध' इत्यमरः । 'द्वयमेतदल्पावकाशे वर्त्मादाविति' महेश्वरः । अस्य अल्पावकाशस्य द्वारस्य विवरः अधिकः सुमहान् जायते । नलप्रवेशार्थमत्यन्तमभिवर्धत इत्यर्थः ।

( १० ) ऋतुपर्णस्येति । ऋतुपर्णस्य अर्थाय कृते राज्ञा भीमेन अनेकशः अनेकप्रकारमित्यर्थः । भोजनीयं भोजनार्हं वस्तुजातं च । किंच पाशवं पशुसंबन्धि मांसं च तत्र नलाधिष्ठितप्रदेशे प्रेषितम् ।

( ११ ) तस्येति । तस्य मांसस्य प्रक्षालनार्थाय प्रक्षालनार्थम् । 'निमित्तपर्यायप्रयोगे सर्वासां प्रायो दर्शन'मिति चतुर्थी । उपकल्पिताः समीपमानीताः । 'साग्रामिकं मे रथमुपकल्पय' इति वेणी । कुम्भा घटाः । अवेक्षिता दृष्टमात्रा एव पूर्णा अभवन् ।

(१२) तत इति । समधिश्रित्य पाचनार्थं चुल्ल्यामारोप्य । समाधिपूर्वको हि श्रयतिरेतदर्थे तृणमुष्टिं तृणानां मुष्टिं मुष्टिपरिमितं तृणमित्यर्थः । परिमाणमात्रे प्रथमा । सवितुः सूर्यस्य सकाश इति शेषः । समादधत् धारयामास ।

( १३ ) अथेति । तत्र तृणमुष्टौ सहसा युगपत् । हव्यवाहनः हव्यं हवनीयं वस्तु वाहयति प्रापयति तास्ता देवता इति तथाभूतोऽग्निः । अद्भुततमं अत्यन्तमाश्चर्यहेतु तत् अग्नेः प्रज्वलनम् । विस्मिता आश्चर्यं प्राप्ता ।

( १४ ) अन्यदिति । आश्चर्यं आश्चर्यहेतुः । यदिति स्वरूपनिर्देशे । असौ नलः अग्निं संस्पृश्यापि न दह्यते न दाहविषयो भवति । कर्मकर्तरि लट् ।

( १५ ) छन्देनेति । न किंच उदकं तस्य छन्देन अभिप्रायमात्रेण आवर्जितं उन्नतं उत्थाय सरतीत्यर्थः । 'इति फलशमायर्जयति' इति

१ सुमहाद्विवरं नचैवेऽपिहम् (क)

अतीव चान्यंसुमहदाश्चर्यं दृष्टवत्यहम् ॥ १५
यत्स पुष्पाण्युपादाय हस्ताभ्यां ममृदे शनैः ।
मृद्यमानानि पाणिभ्यां तेन पुष्पाणि नान्यथा ॥ १६
भूय एव सुगन्धीनि हृषितानि भवन्ति हि
एतान्यद्भुतलिङ्गानि दृष्ट्वाहं द्रुतमागता ॥ १७

बृहदश्व उवाच ।

दमयन्ती तु तच्छ्रुत्वा पुण्यश्लोकस्य चेष्टितम् ।
अमन्यत नलं प्राप्तं कर्मचेष्टाभिसूचितम् ॥ १८
सा शङ्कमाना भर्तारं बाहुकं पुनरिङ्गितैः ।
केशिनीं श्लक्ष्णया वाचा रुदन्ती पुनरब्रवीत् ॥ १९
पुनर्गच्छ प्रमत्तस्य बाहुकस्योपसंस्कृतम् ।
महानसाच्छृतं मांसमानयस्वेह भाविनि ! ॥ २०

शाकुन्तलम् । 'छन्दोऽभिप्राय आकूतम्' इति हैमः । 'छन्दशब्दोऽदन्तो देववत्' इति तट्टिप्पनी । अतीव अत्यन्तं सुमहत् ।

( १६ ) यदिति । यदित्याश्चर्यस्य स्वरूपनिर्देशे । उपादाय गृहीत्वा । ममृदे मृदितवान् । आर्षमात्मनेपदम् । मृद क्षोद इत्यतो लिट् । तेन नलेन पाणिभ्यां करणभूताभ्याम् । मृद्यमानानि पुष्पाणि कर्तृभूतानि । उत्तरेणास्य संबन्धः-

( १७ ) भूय इति । भूय एव पुनरपि भूयिष्ठमेव यथा तथेति वा । सुगन्धीनि शोभनो गन्धो येषां तथाभूतानि । 'गन्धस्येदुत्पूतिसुसुरभिभ्यः' ॥ इतीत् । हृषितानि विकसितानि । इत्येतत् न अन्यथेति पूर्वेण संबन्धः । अद्भुतलिङ्गानि अद्भुतानि लक्षणानि ।

( १८ ) दमयन्तीति । चेष्टितं चेष्टां व्यापारम् । कर्मचेष्टाभिसूचितं कर्मणां अग्निप्रज्वलनादीनां सम्बन्धिनीभिश्चेष्टाभिर्व्यापारैः सूचितम् ।

( १९ ) सेति । इङ्गितैः चेष्टाभिर्ज्ञापकहेतुभूताभिः बाहुकं भर्तारं पतिं नलं शङ्कमाना संभावयन्ती । इङ्गित चेष्टेति कल्पद्रुमः । रुदन्ती रुदती पत्युरननुरूपदशानुभवेन दुःखितत्वादिति भावः । श्लक्ष्णया मनोहरया सौम्यया वा ।

( २० ) वचनमाह पुनरिति । बाहुकस्य प्रमत्तस्य अनवधानवतः सतः । 'प्रमत्तोऽनवधानता,' इत्यमरः । उपसंस्कृतं संस्कारवत्तरां प्रापितम् । शृतं पक्वम् । 'श्रा पाके' इत्यत आदादिकान्निष्ठायां 'शृतं पाके' इति निपातनाद्रूपम् । अत्र पुनरसावार्षः प्रयोगः । 'क्षीरहविषो' रितिवार्तिकेन क्षीरहविषोरेवैतन्निपातनात् । महानसात् पाकस्थानात् । महच्च तदनश्च महानसम् । 'अनोऽश्माय' इत्यादिना टच् । अनःशब्दोऽत्रोपकरणवचनो लक्षणया । महानसं च महदुपकरणं भवति । तदेकमूलत्वाद्देहयात्रायाः । 'रसवत्यां तु पाकस्थानमहानसे' इत्यमरः ।

---

१ एतान्यद्भुतरूपाणि दृष्ट्वाहं भृशविस्मिता । चेष्टितानि विशालाक्षि बाहुकस्य समीपतः । ( क ) २ नलं बाहुकरूपिणम् ( क च. )

सा गत्वा बाहुकस्याग्रे तन्मांसमपकृष्य च ।
अत्युष्णमेव त्वरिता तत्क्षणात्प्रियकारिणी ॥ २१
दमयन्त्यै ततः प्रादात्केशिनी कुरुनन्दन ।
सोचिता नलसिद्धस्य मांसस्य बहुशः पुरा ॥ २२
प्राश्य मत्वा नलं सूतं प्राक्रोशद्भृशदुःखिता ।
वैक्लव्यं परमं गत्वा प्रक्षाल्य च मुखं ततः । २३
मिथुनं प्रेषयामास केशिन्या सह भारत ।
इन्द्रसेनां सह भ्रात्रा समभिज्ञाय बाहुकः ॥ २४
अभिद्रुत्य ततो राजा परिष्वज्याङ्कमानयत् ।
बाहुकस्तु समासाद्य सुतौ सुरसुतोपमौ ॥ २५

( २१ )सेति । बाहुकस्याग्रे गत्वा । बाहुके व्यग्र इति पाठस्तु साधीयान् । व्यग्रे कार्यान्तरव्यासक्त इत्यर्थः । अपकृष्य अपहृत्येत्यर्थः ।

( २२ ) दमयन्त्या इति । सेत्यर्धमुत्तरान्वयि । बहुशोऽनेकवारं नलसिद्धस्य नलेन निष्पादितस्य । सिध्यतिरत्रान्तर्भावितण्यर्थः । उचिता योग्या नलसाधितं मांसमदितवतीत्यर्थः । उचितेत्यत्राशितेति पाठस्तु साधुतमः । तत्र च अश्नातेः कर्तरि क्तः । मांसस्येति च शेषे षष्ठी । मांसमित्यर्थः ।

( २३ ) प्राश्येति । प्राश्य भक्षयित्वा । प्रपूर्वको ह्यश्नातिः पान इव भक्षणेऽपि सदृशः श्रुतिषु । यथा तैत्तिरीयब्राह्मणे प्रथमकाण्डे तृतीयप्रश्ने दशमानुवाके ' अनधेयमेव । तत्रैव प्राशित नेत्राभावितम् । ' इति । सूतं बाहुकं नलं मत्वा अन्नरसपरिचयाभिज्ञेत्यर्थः । प्राक्रोशत् अत्यन्तमरोदीत् । नलस्यापद्यदशानुभवायस्लोकनादिति भावः । वैक्लव्यं विह्वलतां (व्याकुलीभावम्) । आत्ममात्रलक्ष्यैर्लक्षणैर्विनिश्चितेऽपि बाहुकस्य नलत्वे तस्य विरूपत्वादिना परैर्नलत्वेनाभिज्ञातुमशक्यतया पतित्वेन स्वीकरणायोगाद्व्याकुलीभावः । ततः मुखं प्रक्षाल्य प्रेषयामासेत्युत्तरेण संबन्धः ।

( २४ )मिथुनमिति । मिथुनं कन्या च पुत्रश्चेत्येतद्द्वितयम् । प्रेषयामास बाहुकस्य सकाशं इत्यर्थात् । एतच प्रेषणं बाहुकपरीक्षार्थम् । यदि अयं नल एव स्यात्तदा पुत्रदर्शनेन व्याकुलीभवेदिति । भ्रात्रा इन्द्रसेनेन सह इन्द्रसेनां नामाग्रजां पुत्रीम् । समभिज्ञाय सम्यक्परिचित्य । अयं मे तनुजेति ।

(२५)अभिद्रुत्येति । अभिद्रुत्य वेगेन समीपे गत्वा । द्रुतगत्यभिमुखोऽभिमुखं गतो इत्यर्थः । तुष् च । परिष्वज्य तौ समालिङ्ग्य अङ्कं क्रोडम् आनयत् । बाहुक इत्यर्धमुत्तरान्वयि । सुरसुतोपमौ देवकुमारतुल्यौ । सौन्दर्यातिशयादिति भावः । सुतौ सुतं च सुता च । ' पुमान् स्त्रिया ' इत्येकशेषः । आगमनं प्राप्य ।

* इदं नास्ति ( क. ख. ) १ व्यग्रे ( ग. ) व्यग्रा ( घ ) २ अभिसृत्य ( क. ख. ग. घ. )

भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह ।
नैषधो दर्शयित्वा तु विकारमसकृत्तदा ॥ २६
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत् ।
इदं च सदृशं भद्रे मिथुनं मम पुत्रयोः ॥ २७
ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम् ।
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः ।
वयं च देशातिथयो गच्छ भद्रे नमोस्तु ते ॥ २८

इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
नलकन्यापुत्रदर्शने पञ्चसप्ततितमोऽध्यायः ।

---

( २६ ) भृशमिति । भृश अत्यन्त दुःखपरीतात्मा दुःखेन व्याप्तमनाः सन् सुस्वर सुतरां आत्यन्तिकः स्वरः शब्दो यस्मिंस्तद्यथा तथा । उच्चैस्तममित्यर्थः । सस्वरमिति पाठस्तु साधुः । विकार पुत्रवात्सल्यजन्य मनसोऽन्यथाभावम् । असकृत् अनेकवार दर्शयित्वा ।

( २७ ) उत्सृज्येति । सहसा युगपत् उत्सृज्य त्यक्त्वा । पुत्रसदर्शनजन्येन हर्षातिरेकेण विस्मृतस्यात्मनोऽवस्थान्तरस्य पुनः सस्मरणादिति भावः। अब्रवीत् आत्मान प्रच्छादयितुमिति भावः । इदमिति । इद मिथुन कन्यापुत्रयोर्युग्म मम पुत्रयोः कन्यापुत्रयो. सदृश तुल्यम् ।

( २७ ) तत इति । ततः तस्मात् दृष्ट्वैव दर्शनसमनन्तरमेव । सादृश्येनात्मपुत्रस्मरणादिति भावः । उत्सृष्टवान् मुक्तवान् । बहुशः अनेकवार सपतन्तीमागच्छन्तीं त्वा जनो दोषतः दोषरूपेण शङ्केत सभावयेत् । पापमेव त्वया सम मे सबन्धमाकलयेदित्यर्थः । ननु भोः कुत एव प्रथितचारित्रे त्वयि शङ्कावसर इति चेत्तत्राह । वयमिति । देशातिथयो देशस्य प्राघुणिकाः। वैदेशिकाः कियतेचिदेव कालायात्रोपस्थितास्तेन नास्त्यस्माकमत्र चारित्रविज्ञानमिति भावः । शङ्कन्ते हि देशान्तरे सुप्रथितचारित्रमपि धार्मिकप्रवरमपि च सहोदर्यापि यवीयस्या सह वसन्त यान्त सलपन्तमपि वाऽन्यथैव पण्डितम्मन्या अकारणमत्सरिणो दृष्टिविकला इव विवेकविद्वेषिण इव च लोका इति नात्र ते बहुशः सपतन युक्तमिति भावः । नमोऽस्तु त इति । वन्दनीयासि तत्क्षम्यतामिद वचनमिति भावः । यथासुखमिति पाठः सुगमः ।

इति श्रीनलोपाख्यानव्याख्याया बालबोधिन्या पञ्चसप्ततोऽध्यायः ।

---

१ यथा रं

भृशं दुःखपरीतात्मा सुस्वरं प्ररुरोद ह।
नैषधो दर्शयित्वा तु विकारमसकृत्तदा ॥ २६
उत्सृज्य सहसा पुत्रौ केशिनीमिदमब्रवीत्।
इदं च सदृशं भद्रे मिथुनं मम पुत्रयोः ॥ २७
ततो दृष्ट्वैव सहसा बाष्पमुत्सृष्टवानहम्।
बहुशः संपतन्तीं त्वां जनः शङ्केत दोषतः।
वयं च देशातिथयो गच्छ भद्रे नमोऽस्तु ते ॥ २८
इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि
नलकन्यापुत्रदर्शने पञ्चसप्ततितमोऽध्यायः।

---

( २६ ) भृशमिति। भृश अत्यन्त दुःखपरीतात्मा दुःखेन व्याप्तमनाः सन् सुस्वर सुतरा आत्यन्तिक. स्वरः शब्दो यस्मिस्तद्यथा तथा। उच्चैस्तममित्यर्थः। सस्वरमिति पाठस्तु साधु। विकार पुत्रवात्सल्यजन्य मनसोऽन्यथाभावम्। असकृत् अनेकवार दर्शयित्वा।

( २७ ) उत्सृज्येति। सहसा युगपत् उत्सृज्य त्यक्त्वा। पुत्रसदर्शनजन्येन हर्षातिरेकेण विस्मृतस्यात्मनोऽवस्थान्तरस्य पुन. सस्मरणादिति भाव'। अब्रवीत् आत्मान प्रच्छादयितुमिति भावः। इदमिति। इद मिथुन कन्यापुत्रयोर्युग्म मम पुत्रयोः कन्यापुत्रयोः सदृश तुल्यम्।

( २७ ) तत इति। तत' तस्मात् दृष्ट्वैव दर्शनसमनन्तरमेव। सादृश्येनात्मपुत्रस्मरणादिति भावः। उत्सृष्टवान् मुक्तवान्। बहुशः अनेकवार सपतन्तीमागच्छन्तीं त्वा जनो दोषतः दोषरूपेण शङ्केत सभावयेत्। पापमेव त्वया सम मे सबन्धमाकलयेदित्यर्थ'। ननु भोः कुत एव प्रथितचारित्रे त्वयि शङ्कावसर इति चेत्तत्राह। वयमिति। देशातिथयो देशस्य प्राघुणिकाः। वैदेशिकाः कियतेचिदेव कालायात्रोपस्थितास्तेन नास्त्यस्माकमत्र चारित्रनिशानामिति भावः। शङ्कन्ते हि देशान्तरे सुप्रथितचारित्रमपि धार्मिकप्रवरमपि च सहोदर्यापि यवीयस्या सह वसन्त यान्त सलपन्तमपि घाऽन्यथैव पण्डितम्मन्या अकारणमत्सरिणो दृष्टिविकला इव विवेकविद्वेषिण इव च लोका इति नात्र ते बहुश' सपतन युक्तमिति भाव'। नमोऽस्तु त इति। वन्दनीयासि तत्क्षम्यतामिद वचनमिति भावः। यथासुखमिति पाठः सुगमः।

इति श्रीनलोपाख्यानव्याख्याया बालबोधिन्या पञ्चसप्ततोऽध्यायः।

---

१ पर्वा से

## षट्सप्ततितमोऽध्यायः ।



बृहदश्व उवाच—

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमत ।
आगत्य केशिनी सर्वं दमयन्त्यै न्यवेदयत् ॥ १
दमयन्ती ततो भूय प्रेषयामास केशिनीम् ।
मातु सकाशं तु खार्ता नलदर्शनकाङ्क्षया ॥ २
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेक स्वयमिच्छामि वेदितुम् ॥ ३
स वा प्रवेश्यता मातर्मां वाऽनुज्ञातुमर्हसि ।
विदित वाऽथवाऽज्ञात पितुर्मे सविधीयताम् ॥ ४
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिव ॥ ५

---

( १ ) सर्वमिति । विकार वात्सल्यजन्य मनसोऽन्यथाभावम् । केशिनी सर्वमित्यत्र क्षिप्रमिति पाठ साधु । अन्यथा पौनरुक्त्यापत्ते । सर्वं निवेदनीयमिति वा ।

( २ ) दमयन्तीति । मातुरनुज्ञाधिगमार्थं केशिन्या प्रेषणम् । विना हि गुरुजनाभ्यनुज्ञा न न्याय्यमेवमुपसर्पणमिति । प्रेषयामास किमपि सार्द्धमस्येति शेष ।

( ३ ) सदेशमाह । परीक्षित इति । मे मया बहुश अनेकै प्रकारै । कुत इत्याह नलशङ्कयेति । हेतौ तृतीया । नलसभावनया तस्य नलत्वेन सभावितत्वादित भाव । तत किमित्याह रूप इति । मे मम एक केवल रूपे रूपविषये सशय । तस्मादिति शेप स्वय वेदितु ज्ञातु परमार्थमित्यर्थात् । इच्छामि ।

(४) तदत्र किं त्वा मया विधीयतामिति चेत्तत्राह । स इति । युक्त किलात्र पितरमप्यनुज्ञापयितुमित्यभिप्रेत्याह विदितमिति । मे पितु विदित यथा तथा । प्राधान्येनाभीष्टत्वात्प्रथमामित्थ वचनम् । अज्ञात अविदित यथा तथा वा अत्र तु भवदिच्छैव प्रमाणमिति भाव । सविधीयता कर्मेद क्रियताम् त्वयेति शेप ।

( ५ ) एवमिति । उक्ता सदेशद्वारा प्रार्थितेत्यर्थ । देवी राज्ञी दमयन्त्या जननी । भीम अब्रवीत् उक्तवती दमयन्त्युक्तमर्थमित्यर्थात् । स पार्थिवो भीम । अन्वजानात् अनुज्ञातवान् ।

---

१ क्षिप्र ( च ) २ नलशङ्कासमुत्सुका ( क ) नलदर्शनकाङ्क्षिणीम् ( च )

सा वै पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ६
तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ७
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ८
ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ९

---

( ६ ) सेति सा दमयन्ती तस्या दमयन्त्या यत्र प्रतिश्रयो वासः तत्रेति सम्बध्यते । प्रवेशयामास आनाययामास । अत्र मध्ये श्लोकचतुष्टयमधिकं कपुस्तके[1] नात्यन्तमावश्यकं स्पष्टार्थं च । इतः परं तु विनिवेश्यमानं उत्तरार्धं प्रवेशयामासेति पदं कर्तृपदसापेक्षं छिद्यतीत्येतिति द्रष्टव्यं धीमद्भिः ।

( ७ ) तामिति । स्मेति पादपूरणे । तां विरहावस्थामनुभवन्तीं दमयन्तीं दृष्ट्वैव नलः शोकदुःखाभ्यां इष्टवियोगानुचिन्तनेन दुःखेन च आविष्टः कृतान्तःप्रवेशः । अन्तःप्रविश्योन्मत्ततामिव नीत इति भावः । आवेशो हि पिशाचादीनां भवती येन विस्मृतात्मभावः पुरुष उन्मत्तवद्भवति । तद्गुणयोगादेव चान्यत्राप्याङ्पूर्वो विशतिः प्रयुज्यते प्रायेण । इष्टवियोगानुचिन्तनं शोक इति नागेशः । अश्रुपरिप्लुतः अश्रुभिर्व्याप्तः ।

( ८ ) तमिति । तथा तेन प्रकारेण युक्तं संगतं तं दृष्ट्वा तीव्रशोकसमाविष्टा तीव्रेण आत्यन्तिकेन शोकेन समाविष्टा । 'तीव्रैकान्तनितान्तानी'त्यतिशयपर्यायेष्वमरः । अत्र तु विशेष्यनिघ्नोऽयम् ।

( ९ ) तत इति । काषायवसना काषायेण रागेण रक्तं काषायं वसनं यस्यास्तथाभूता । 'तेन रक्तं रागात् ।' इत्यण् । काषायश्च रागो नीलरक्तयोर्वर्णयोर्योगेन निष्पन्नः । तदाह भरतः 'नीलरक्तसमायोगात्काषायो नाम जायते ॥' इति ( २१–६२ ) । विरहिणीभिर्धार्यमेतद्वसनमिति प्रतीयते । जटिला जटाः परस्परग्रथिताः केशाः सन्त्यस्यास्तथाभूताः । पिच्छादित्वादिलच् । विरहिणीनां केशसंस्काराभावाज्जाटिल्यम् । मलपङ्किनी मलरूपः गात्रे समुपचितस्य पङ्कोऽस्त्यस्या तथाभूता । विरहिण्या अङ्गमार्जनाभावादिति भावः ।

---

[1] अतः परं 'तयोर्नियोगात्कौरव्य केशिनीमिदमब्रवीत् ॥ गच्छ केशिनि शीघ्रं त्वं बाहुकं पितृशासनात् । आनयस्व यथा माता त्वं तथा कुरु मे प्रियम् ॥ गत्वा तु केशिनी शीघ्रं बाहुकं वाक्यमब्रवीत् । भीमस्य शासनात्प्राप्तागताहं विद्धि बाहुक । प्रविश्यतां राजवेश्म इत्युक्तो भरतर्षभ । बाहुकस्तु चिरं ध्यात्वा केशिन्या सह भारत । प्रविवेश महाबाहुर्दमयन्तीनिवेशनम् ॥ ' इत्यधिकं कपुस्तके ।

## षट्सप्ततितमोऽध्यायः ।



बृहदश्व उवाच—

सर्वं विकारं दृष्ट्वा तु पुण्यश्लोकस्य धीमतः ।
आगत्य केशिनी सर्वं दमयन्त्यै न्यवेदयत् ॥ १
दमयन्ती ततो भूयः प्रेषयामास केशिनीम् ।
मातुः सकाशं दुःखार्ता नलदर्शनकाङ्क्षया ॥ २
परीक्षितो मे बहुशो बाहुको नलशङ्कया ।
रूपे मे संशयस्त्वेकः स्वयमिच्छामि वेदितुम् ॥ ३
स वा प्रवेश्यतां मातर्मां वाऽनुज्ञातुमर्हसि ।
विदितं वाऽथवाऽज्ञातं पितुर्मे संविधीयताम् ॥ ४
एवमुक्ता तु वैदर्भ्या सा देवी भीममब्रवीत् ।
दुहितुस्तमभिप्रायमन्वजानात्स पार्थिवः ॥ ५

---

( १ ) सर्वमिति । विकारं वात्सल्यजन्यं मनसोऽन्यथाभावम् । केशिनी सर्वमित्यत्र क्षिप्रमिति पाठः साधुः । अन्यथा पौनरुक्त्यापत्तेः । सर्वं निवेदनीयमिति वा ।

( २ ) दमयन्तीति । मातुरनुज्ञाधिगमार्थं केशिन्याः प्रेषणम् । विना हि गुरुजनाभ्यनुज्ञां न न्याय्यमेवमुपसर्पणमिति । प्रेषयामास किमपि सादिश्येति शेषः ।

( ३ ) सदेशमाह । परीक्षित इति । मे मया बहुशः अनेकैः प्रकारैः । कुत इत्याह नलशङ्कयेति । हेतौ तृतीया । नलसभावनया तस्य नलत्वेन सभवितत्वादिति भावः । तत किमित्याह रूप इति । मे मम एकः केवलः रूपे रूपविषये सशयः । तस्मादिति शेषः स्वयं वेदितुं ज्ञातुं परमार्थमित्यर्थात् । इच्छामि ।

(४) तदत्र किंवा मया विधीयतामिति चेत्तत्राह । स इति । युक्तं किलात्र पितरमप्यनुज्ञापयितुमित्यभिप्रेत्याह विदितमिति । मे पितुः विदितं यथा तथा । प्राधान्येनाभीष्टत्वात्प्रथममित्थं वचनम् । अज्ञातं अविदितं यथा तथा वा अत्र तु भवदिच्छैव प्रमाणमिति भावः । संविधीयतां कर्मेदं क्रियताम् त्वयेति शेषः ।

( ५ ) एवमिति । उक्ता सदेशद्वारा प्रार्थितेत्यर्थः । देवी राज्ञी दमयन्त्या जननी । भीमं अब्रवीत् उक्तवती दमयन्त्युक्तं सर्वमित्यर्थात् । स पार्थिवो भीमः । अन्वजानात् अनुज्ञातवान् ।

---

१ क्षिप्र ( क ) २ नलशङ्कासमुत्सुका ( क ) नलदर्शनकाङ्क्षिणीम् ( च )

सा वै पित्राऽभ्यनुज्ञाता मात्रा च भरतर्षभ ।
नलं प्रवेशयामास यत्र तस्याः प्रतिश्रयः ॥ ६
तां स्म दृष्ट्वैव सहसा दमयन्तीं नलो नृपः ।
आविष्टः शोकदुःखाभ्यां बभूवाश्रुपरिप्लुतः ॥ ७
तं तु दृष्ट्वा तथायुक्तं दमयन्ती नलं तदा ।
तीव्रशोकसमाविष्टा बभूव वरवर्णिनी ॥ ८
ततः काषायवसना जटिला मलपङ्किनी ।
दमयन्ती महाराज बाहुकं वाक्यमब्रवीत् ॥ ९

---

( ६ ) सेति सा दमयन्तीं तस्या दमयन्त्या यत्र प्रतिश्रयो वासः तत्रेति सबध्यते। प्रवेशयामास आनाययामास। अत्र मध्ये श्लोकचतुष्टयमाधिक कपुस्तके नात्यन्तमावश्यक स्पष्टार्थे च। इतः पर तु विनिवेश्यमान उत्तरार्धे प्रवेशयामासेति पद कर्तृपदसापेक्ष क्लिश्यतीरेति द्रष्टव्य धीमद्भिः ।

( ७ ) तामिति। स्मेति पादपूरणे । ता विरहावस्थामनुभवन्तीं दमयन्तीं दृष्ट्वैव नलः शोकदुःखाभ्या इष्टवियोगानुचिन्तनेन दुःखेन च आविष्टः कृतान्तःप्रवेशः । अन्तःप्रविश्योन्मत्ततामिव नीत इति भाव । आवेशो हि पिशाचादीना भवती येन विस्मृतात्मभाव पुरुष उन्मत्तवद्भवति । तद्गुणयोगादेव चान्यत्राप्याङ्पूर्वो विशति प्रयुज्यते प्रायेण । इष्टवियोगानुचिन्तन शोक इति नागेश. । अश्रुपरिप्लुत. अश्रुभिर्व्याप्त. ।

( ८ ) तमिति । तथा तेन प्रकारेण युक्त सगत त दृष्ट्वा तीव्रशोकसमाविष्टा तीव्रेण आत्यन्तिकेन शोकेन समाविष्टा । ' तीव्रैकान्तनितान्तानी ' त्यतिशयपर्यायेष्वमरः । अत्र तु विशेष्यनिघ्नोऽयम् ।

( ९ ) तत इति । काषायवसना कषायेण रागेण रक्त काषाय वसन यस्यास्तथाभूता। 'तेन रक्त रागात्।' इत्यण् । काषायश्च रागो नीलरक्तयोर्वर्णयोर्योगेन निष्पन्नः। तदाह भरतः 'नीलरक्तसमायोगात्काषायो नाम जायते ॥' इति ( २१–६२ ) । विरहिणीभिर्धार्यमेतद्वसनमिति प्रतीयते । जटिला जटाः परस्परग्रथिताः केशाः सन्त्यस्यास्तथाभूताः । पिच्छादित्वादिलच्। विरहिणीना केशसंस्काराभावाज्जटिलत्वम् । मलपङ्किनी मलस्य गात्रे समुपचितस्य पङ्कोऽस्त्यस्या तथाभूता । विरहिण्या अङ्गमार्जनाभावादिति भावः ।

---

१ अत· परं 'तयोर्नियोगात्कौरव्य केशिनीमिदमब्रवीत् ॥ गच्छ केशिनि शीघ्रं त्वं बाहुकं पितृशासनात् । आनयस्व यथा माता त्वं तथा कुरु मे प्रियम् ॥ गत्वा तु केशिनी शीघ्रं बाहुकं वाक्यमब्रवीत्। भीमस्य शासनात्प्राप्तागताहं विद्धि बाहुक । प्रविश्यता राजवेश्म इत्युक्तो भरतर्षभ । बाहुकस्तु चिर ध्यात्वा केशिन्या सह भारत । प्रविवेश महाबाहुर्दमयन्तीनिवेशनम् ॥ ' इत्यधिक पपुस्तके ।

पूर्वं दृष्टस्त्वया कश्चिद्धर्मज्ञो नाम बाहुक ? ।
सुप्तामुत्सृज्य विपिने गतो यः पुरुषः स्त्रियम् ॥ १०
अनागसं प्रियां भार्यां विजने श्रममोहिताम् ।
अपहाय तु को गच्छेत्पुण्यश्लोकमृते नलम् ॥ ११
किं नु तस्य मया बाल्यादपराद्धं महीपतेः ।
यो मामुत्सृज्य विपिने गतवान्निद्रयाऽर्दिताम् ॥१२
साक्षाद्देवानपाहाय वृतो यः स पुरा मया ।
अनुव्रतां साभिकामां पुत्रिणीं त्यक्तवान्कथम् ? ॥ १३
अग्नौ पाणिं गृहीत्वा तु देवनामग्रतस्तथा ।
भविष्यामीति सत्यं तु प्रतिश्रुत्य क तद्गतम् ? ॥ १४

( १० ) वाक्यमाह पूर्वमिति । धर्मज्ञो नाम धर्मज्ञतया प्रसिद्धो यः कोऽपि । विपिने अरण्ये ।

( ११ ) अनागसमिति । अनागसं अनपराधां प्रियां प्रेमविषयीभूतां विजने निर्जनप्रदेशे श्रममोहिता श्रमेण मूर्छितां विसंज्ञतामिवापन्नामित्यर्थः। स्त्रियमित्यनुषज्यते । पुण्यश्लोक पवित्रयशसमित्युपालम्भोक्तिः । नल ऋते विना । 'ततोऽन्यत्रापि दृश्यत' इति द्वितीया । विशेषतस्तु प्रपञ्चितं प्राक् । अनागसमित्यादिना त्यागस्यात्यन्तानर्हत्व द्योत्यते ।

( १२ ) किन्विति । बाल्यात् बाल्यमारभ्य ल्यब्लोपे पञ्चमी । तस्य महीपते राज्ञो नलस्य किन्तु अपराद्ध को वापराधः कृतः । यः निद्रया अर्दितां पीडितां माम् । विपिने अरण्ये उत्सृज्य त्यक्त्वा गतः । विनैवापराध त्यक्तास्मीति भावः

( १३ ) साक्षादिति । साक्षात् प्रत्यक्षमुपास्थितान देवान् इन्द्रादीन् अपहाय त्यक्त्वा मया यो वृतः पतित्वेन स्वीकृतः । एतेन प्रणयातिशयो द्योत्यते । सः अनुव्रतां अनु आत्मनः सदृश वृत नियमो यस्यास्तथाभूता सुखदुःखसंविभागिनिमित्यर्थः । साभिकाम् अभिकामेन पतिसान्निध्याभिलाषेण सह वर्तमानाम् । पुत्रिणीं पुत्रवतीम् । एतदपि त्यागानर्हत्व द्योतयति ।

( १४ ) अग्नाविति । अग्नौ अग्निसमीपे । देवानां इन्द्रादीनां अग्रतः पाणिं गृहीत्वा परिणय कृत्वा भविष्यामि इति अनुस्मरणाय वाक्यैकदेशस्यैव प्रयोगः तच्च वाक्य 'यावच्च मे धरिष्यन्ति प्राणा देहे शुचिस्मिते । तावत्त्वयि भविष्यामि सत्यमेतद्ब्रवीमि ते ॥' इति ( ५७-३२ ) सत्यं यथातथा प्रतिश्रुत्य प्रतिज्ञा कृत्वा वर्तमानस्येति शेषः । तत् प्रतिज्ञातं त्वयि भविष्यामीति क गतम् । अहो सत्यप्रतिज्ञता पुण्यश्लोकस्येति भावः । पाठान्तरं सुगमम् । नातिमनोरमञ्च ।

१ अभिमता ( क ) २ पाणिगृहीता च हंसानां वचने स्थिताम् ( क ) पाणिं गृहीत्वा तु हंसाना वचनात्तथा ( च ) ३ भरिष्यामि ( क. च. ) ४ इतः पर 'बृहदश्व उवाच' इत्यधिकं कपुस्तके ॥

दमयन्त्या ब्रुवन्त्यास्तु सर्वमेतदरिंदम ।
शोकजं वारि नेत्राभ्यामसुखं प्रास्रवद्बहु ॥ १५
अतीव कृष्णशाराभ्यां रक्तान्ताभ्यां जलं तु तत् ।
परिस्रवन्नलो राजा शोकार्तामिदमब्रवीत् ॥ १६
मम राज्यं प्रनष्टं यन्नाहं तत्कृतवान्स्वयम् ।
कलिना तत्कृतं भीरु ! यच्च त्वामहमत्यजम् ॥ १७
यत्त्वया धर्मकृच्छ्रे तु शापेनाभिहतः पुरा ।
वनस्थया दुःखितया शोचन्त्या मां दिवानिशम् ॥ १८
स मच्छरीरे त्वच्छापाद्दह्यमानोऽवसत्कलिः ।

( १५ ) दमयन्त्या इति । हे अरिन्दम शत्रुशमन राजन्युधिष्ठिर ! एतत्सर्वं ब्रुवन्त्या दमयन्त्या नेत्राभ्या असुख सुख सुखहेतुः शीतलमित्यर्थः न भवति तथा उष्णमित्यर्थ. । प्रास्रवत् प्रकर्षेणागलत् ।

( १६ ) अतीवेति । कृष्णशाराभ्या कृष्णे तारकाया कृष्णवर्णे तत एव च शारे शबले च । ' शारः स्याच्छबले पुंसि वाच्यालिङ्गः समीरणे । ' इति मेदिनी । शबलश्च श्वेतकृष्णो वर्ण॰। तारकाया कृष्णत्वात्तदितरत्र च नीलेन्दीवरकल्पतया श्वेतकृष्णत्वेन कर्बुरत्वादक्ष्णोः कृष्णशारत्वम् । कृष्णताराभ्यामिति पाठस्तु साधुः। रक्तान्ताभ्या रक्तौ अन्तौ प्रान्तभागौ ययोस्तथाभूताभ्याम् नेत्राभ्यामित्यनुषज्यते। परिस्रवत् विगलत् तज्जल दृष्ट्वेति शेष. । राजा नलः शोकार्तं शोकेनार्तं पीडित यथा तथा । शोकादविस्पष्टाक्षरमित्यर्थः । अतः पर ' नलोऽह विपुलश्रोणि त्वामुत्सृज्य यतो गत । आविष्ट कलिना भद्रे तेन मोहवश गत' ॥' इत्यधिक कपुस्तके । आवश्यक चैतत् । आत्मप्रकाशनमन्तरा वृत्तान्तरानिवेदनस्यानर्हत्वात् । अत्र च हे विपुलश्रोणि अह नलः हे भद्रे ( अह ) यत कलिना आविष्ट' तेन ( तस्मात् ) मोहवश गतः सन् त्वामुत्सृज्य गत' इति सम्बन्ध. ।

( १७ ) त्वत्परित्यागे तु कलिरेव हेतुरित्याह ममेति । हे भीरु भयशीले सुन्दरीत्यर्थः ।

( १८–१९ ) यदिति । युग्मकमेतत् । यत् यस्मात् धर्मकृच्छ्रे धर्मस्य पतिपरिचर्यारूपस्य पतिव्रताधर्मस्य कृच्छ्रे व्यसने विलोपसमये मद्वियोग इत्यर्थः । शापेन ' यस्याभिशापाद्दु.खार्तो दु'ख विन्दति नैषधः । तस्य भूतस्य नो दुःखाद्दु.खमभ्याधिक भवेत् । ' ( अ. ६३ प–१६ ) इत्येव रूपेण अभिहतः प्रहृतः । मा शोचन्त्या शोकविषयीकुर्वन्त्या । तस्मादिति शेष.। स कलिः त्वच्छापाद्दह्यमानो दाहविषयत्वमापद्यमान' सन्। सतत त्वच्छापदग्धः सः अग्नौ आहितः स्थापितः आग्निरिव मच्छरीरे अवसदिति सम्बध.।

१ शोकार्त इद ( क. च. ) शोकार्तामिद ( न. म. ) २ अत पर ' नलोऽह विपुलश्रोणि त्वामुत्सृज्य यतो गत. । आविष्ट. कलिना भद्र तेन मोहवश गतः ॥, इत्यधिकं कपुस्तके ।

त्वच्छापदग्धः सततं सोऽग्नावग्निरिवाहितः ॥ १९
मम च व्यवसायेन तपसा चैव निर्जितः ।
दुःखस्यान्तेन चानेन भवितव्यं हि नौ शुभे ॥ २०
विमुच्य मां गतः पापस्ततोऽहमिह चागतः ।
त्वदर्थं विपुलश्रोणि न हि मेऽन्यत्प्रयोजनम् ॥ २१
कथं नु नारी भर्तारमनुरक्तमनुव्रतम् ।
उत्सृज्य वरयेदन्यं यथा त्वं भीरु कर्हिचित् ॥ २२
दूताश्चरन्ति पृथिवीं कृत्स्नां नृपतिशासनात् ।
भैमी किल स्म भर्तारं द्वितीयं वरयिष्यति ॥ २३
स्वैरवृत्ता यथाकाममनुरूपमिवात्मनः ।
श्रुत्वैव चैवं त्वरितो भाङ्गासुरिरुपस्थितः ॥ २४

---

भिन्नवाक्यत्वाद्दग्ध इति न पौनरुक्त्यम् । दुःखैस्तप्यमानत्वाच्छरीरस्याग्निवत् शापेन दह्यमानत्वाच्च कलेरिति युक्तं सादृश्यम् ।

( २० ) ममेति । व्यवसायेन उद्यमेन निश्चयेन वा तपसा च निर्जितः पराजितः आसीदिति शेषः । कथमेतत्सवृत्तमित्याह दुःखस्येति । हि यतः हे शुभे कल्याणि अनेन सम्प्रत्यनुभूयमानेन नौ आवयोः दुःखस्यान्तेन भवितव्यं तस्मादेव स निर्जितोऽभूदिति भावः । अन्यथा किलावयोर्दुःखस्यान्तेन भाव्यं, न चानिर्जिते कलौ स सम्भवतीति तपसा मे विनिर्जितोऽयमिति भावः ।

( २१ ) विमुच्येति । पापो नीचः कलिः मां विमुच्य त्यक्त्वा गतः । ततस्तदनन्तरम् । हे विपुलश्रोणि सुन्दरि । श्रोण्या हि वैपुल्यं सौन्दर्यलक्षणं प्राचाम् । तत एवोपवर्णितं कालिदासेन ' श्रोणीभारादलसगमने ' ति मेघ-सन्देशे । अहं त्वदर्थं त्वामपेक्ष्येत्यर्थः । हि यतः मे मम प्रयोजनं हेतुः ।

( २२ ) कथमिति । हे भीरु भयशीले सुन्दरीत्यर्थः । त्वं यथा त्वत्स-दृशीत्यर्थः नारी अनुरक्तं अनुरागिणं अनुव्रतं अनुकूलाचारमात्मसदृशव्रतं वा भर्तारं उत्सृज्य अन्यं कर्हिचित् कस्मिन्नपि काले । 'अनद्यतने र्हिलन्यतरस्याम्' इति किमो र्हिल्प्रत्ययः काले । कथं नु वरयेत् । नैतच्छक्यसंघटनामिति भावः । यद्वा यथा त्वं तथा नारी या कापि वा स्त्री अनुरक्तमनुव्रतं च भर्तारमुत्सृज्यान्यं कथं वरयेत ? न कथंचिदपीत्यहो ते पातिव्रतीत्युपालम्भोऽयम् ।

( २३-२४ ) दूता इति । युग्मकमेतत् । नृपशासनात् राज्ञो भीमस्या-देशात् दूताः कृत्स्नां पृथिवीं चरन्ति । तेभ्य इति शेषः । ' भैमी किल तथा स्वैरवृत्ता स्वैरं स्वच्छन्दानुसारी वृत्तं वर्तनं यस्यास्तथाभूता स्वैरिणीव आत्मनः स्वस्य कामं अत्यन्तं अनुरूपं योग्यं इव द्वितीयं भर्तारं वरयिष्यति ।' एवं इति श्रुत्वैव भाङ्गासुरिः ऋतुपर्णः उपस्थितः अत्र प्राप्तः ।

---

१ भागस्वरि ( क० ) भागासुरि ( च )

दमयन्ती तु तच्छ्रुत्वा नलस्य परिदेवितम् ।
प्राञ्जलिर्वेपमाना च भीता वचनमब्रवीत् ॥ २५
न मामर्हसि कल्याण [2]दोषेण परिशङ्कितुम् ।
[1]मया हि देवानुत्सृज्य वृतस्त्वं निषधाधिप ॥ २६
तवाभिगमनार्थं तु सर्वतो ब्राह्मणा गताः ।
वाक्यानि मम गाथाभिर्गायमाना दिशो दश ॥ २७
ततस्त्वां ब्राह्मणो विद्वान्पर्णादो नाम पार्थिव ।
अभ्यगच्छत्कोशलायामृतुपर्णनिवेशने ॥ २८
तेन वाक्ये कृते सम्यक्प्रतिवाक्ये तथाहृते ।
उपायोऽयं मया दृष्टो नैषधानयने तव ॥ २९

(२५) दमयन्तीति । परिदेवित परिदेवन रुदितात्मक वचनमित्यर्थः। देवृ देवन इत्यतो नपुंसके भावे क्तः । प्राञ्जलि बद्धाञ्जलि· । क्षमापनायेति भावः । वेपमाना कम्पमाना । तत्र हेतुर्भीतेति । नलेनान्यथा शङ्कितमिति भीतिः ।

(२६) नेति । दोषेण दोषविशिष्टतयेत्यर्थ. । ननु वरान्तरवरणे प्रय तमानाया त्वयि कुतो नाशङ्क्यतामिति चेत्तत्राह मयेति । देवानुत्सृज्येति अनन्यथाभावी पारमार्थिक· प्रणयातिशयो द्योत्यते । तन्न मे पत्यन्तरवरणाभिलाप इति भावः

(२७) यद्येव तत्कुतो दूता परिभ्रमन्तीति चेत्तत्राह तवेति । अभिगमनार्थं समागमार्थम् । अधिगमनार्थमितिपाठस्तु साधु । अधिगमन च प्राप्तिः । सर्वतः सर्वत्र । आद्यादित्वात्सप्तम्यर्थे तसि । मम वाक्यानि गाथाभिः। छन्दोविशेषैः गायमाना गातु शील येषा तथाभूता । ताच्छील्ये चानश् । 'अत्रानुक्त गाथे' ति पिङ्गलाचार्य । विवृत चैतत्केदारेण ' विषमाक्षरपाद वा पादैरसम दशधर्मवत् । यच्छन्दो नोक्तमत्र गाथेति तत्पूर्वसूरिभिः प्रोक्तम् ॥ इति ' । सप्रति च श्लोकतयाऽऽख्यायमान छन्द एतस्यैव भेद इति दमयन्तीवचनप्रतिपादकाना श्लोकाना गाथात्वमिति द्रष्टव्यम् । दश दिशो गता इति सबन्ध ।

(२८) तत इति । ततो ब्राह्मणगमनान्तर पर्णादो नाम विद्वान्ब्राह्मणः कोशलाया कोशलदेशराजधान्यामयोध्याया ऋतुपर्णनिवेशने अभ्यगच्छत् उपगतवान् ।

(२९) तेनेति । तेन पर्णादेन सम्यक् वाक्ये प्रश्नरूपे वचने कृत उक्ते सति तथा प्रतिवाक्ये प्रत्युत्तर आहृते समानीते सति । अय स्वयवरप्रख्यापनरूप· । मया तव आनयने आनयनविषय उपायो दृष्टः मनसा साक्षात्कृतः अवधारित इति यावत् ।

१ अत्रैव परिसमाप्तोऽयमध्यायश्चनपुस्तकयाः । २ पापेन ( क. च. )

त्वामृते नहि लोकेऽन्य एकाह्ना पृथिवीपते ।
समर्थो योजनशतं गन्तुमश्वैर्नराधिप ॥ ३०
स्पृशेयं तेन सत्येन पादावेतौ महीपते ।
यथा नासत्कृतं किंचिन्मनसाऽपि चराम्यहम् ॥ ३१
अयं चरति लोकेऽस्मिन्भूतसाक्षी सदागतिः ।
एष मे मुञ्चतु प्राणान्यदि पापं चराम्यहम् ॥ ३२
तथा चरति तिग्मांशुः परेण भुवनं सदा ।
स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३३
चन्द्रमाः सर्वभूतानामन्तश्चरति साक्षिवत् ।

(३०) कथ स्वयवरप्रख्यापन मदानयन उपाय इति चेत्तत्राह त्वामिति । त्वामृते त्वां विना लोके अन्यः एकेन अह्ना अश्वैर्योजनशत गन्तु न समर्थः इति योजना ।[1] अतः पर 'तथापि मा महीपाल भजेता चरणौ तव' इत्यधिक कपुस्तके । तथा तेन प्रकारेणापि स्वयवरप्रख्यापनेनापि मां तव चरणौ भजेता सेवेयाताम् । तेनापि वा विधिना समागच्छतु सकाश मे भवानिति विचिन्तितमिति भाव । न पुनरर्धमेतदत्यन्तमावश्यकम् ।

( ३१ ) स्पृशेयमिति । यथा यस्मात् अह असत् यत्सन्नभवति तत्पाप कृत कर्म । नपुसके भावे क्त । मनसाऽपि कुतः पुनः शरीरेणेति भावः। न चरामि नाचरामि। तेन तस्मात् हे महीपते। अहमिति शेषः एतौ मत्पुरोवर्तिनौ पादौ ते चरणौ सत्येन शपथेन हेतुभूतेन स्पृशेय स्पृष्टौ कुर्याम् । पापकर्माचरणाभावे ते चरणौ स्पृष्ट्वा शपथ करोमीत्यर्थः 'सत्यक्ते च शपथे ' इति मेदिनी ।

( ३२ ) अयमिति । यद्यह पाप चरामि । तदा य इति शेष । योऽय भूतसाक्षी भूताना द्रष्टा सर्वत्रापि प्रवेशादिति भावः । 'साक्षाद्द्रष्टरि संज्ञाया' मिति इनिः । सदागतिः सदा गतिर्यस्य तथाभूतो वायुः । 'वायुर्मातरिश्वा सदागति 'रित्यमरः । ' रात्रिंदिव गन्धवहः प्रयाति ' इति कालिदास । एषः मे प्राणान् मुञ्चतु मोचयात्वित्यर्थ । मुञ्चतेरन्तर्भावितण्यर्थाल्लोट् ।

( ३३ ) तथेति । तथा किंच य इति तच्छब्दबलाल्लभ्यम् । यः तिग्मांशुः तिग्मा प्रखरा अशवः किरणा यस्य स सूर्य. । ' आदित्य सविता सहस्रकिरणः प्रद्योतनो भास्करस्तिग्मांशुः ' इति हलायुध. । भुवन लोकं परेण लोकस्य परस्तादिति भाव. । परशब्दात् ' एनमन्यतरस्यामदूरेऽपञ्चम्या ' इति एनपि ' एनपा द्वितीया ' इति द्वितीया । अत्र परित इति पाठः साधुः स इत्यादि पूर्ववत् ।

( ३४ ) चन्द्रमा इति । यश्चन्द्रमाश्चन्द्र साक्षिवत् द्रष्टेव वर्तमान सर्वभूताना सर्वेषा प्राणिनामन्तः शरीराभ्यन्तरे चरति । चन्द्रो हि मनसोऽ-

1 अतः परं ' तथापि मां महीपाल भजेता चरणौ तव । ' इत्याधिकं कपुस्तके ।

स मुञ्चतु मम प्राणान्यदि पापं चराम्यहम् ॥ ३४
एते देवास्त्रयः कृत्स्नं त्रैलोक्यं धारयन्ति वै ।
ते[1] ब्रुवन्तु यथासत्यमेतद्देवास्त्यजन्तु माम् ॥ ३५
एवमुक्ते ततो वायुरन्तरिक्षादभाषत ।
नैषा कृतवती पापं नल सत्यं ब्रवीमि ते ॥ ३६
राजञ्छीलनिधिः स्फीतो दमयन्त्या सुरक्षितः ।
साक्षिणो रक्षिणश्चास्या वयं त्रीन्परिवत्सरान् ॥ ३७
उपायो विहितश्चायं त्वदर्थमतुलोऽनया ।
न ह्येकाह्ना शतं गन्ता त्वामृतेऽन्यः पुमानिह ॥३८
उपपन्ना त्वया भैमी त्वं च भैम्या महीपते ।

---

धिष्ठात्री देवता । तत एव च मनसि वर्तमानस्यास्य सर्वभूतान्तश्चारित्वम् । साक्षिशब्दो जीववचनो वा वेदान्तिनो हि जीव साक्षिणमाचक्षते । साक्षिवत् यथा जीवस्तथेत्यर्थः ।

( ३५ ) एत इति । एते पूर्वोक्तास्त्रयो देवा वायुः सूर्यश्चन्द्रमाश्चेत्येत कृत्स्न सकल त्रैलोक्य त्रीन् लोकान् । चतुर्वर्णादित्वात्स्वार्थे ष्यञ् । धारयन्ति अवस्थापयन्ति सत्तया योजयन्तीत्यर्थ. । धृङ् अवस्थाने इत्यतो णिचो लट् । ते एतत् एन विषयमित्यर्थ. । सामान्ये नपुंसकमिति क्लीबत्वम् । यथासत्य सत्यमनतिक्रम्य ब्रुवन्तु । अन्यथेति शेषः । मदुक्तेरन्यथात्वे तु मा त्यजन्तु ।

( ३६ ) एवमिति । अन्तरिक्षात् आकाशात् अशरीरिण्या वाचाऽभाषतेत्यर्थः । वायोर्वचनमाह सार्धत्रितयेन । नेति । एषा दमयन्ती । ते तुभ्यम् ।

( ३७ ) राजन्निति । हे राजन्नल दमयन्त्या कर्त्र्या स्फीतः वृद्धो महानित्यर्थः । 'स्फायी वृद्धा' वित्यतो निष्ठा । 'स्फायः स्फी निष्ठायामि' ति स्फीभावः । शीलनिधिः सद्वृत्तरूपो निधिः । 'शील स्वभावे सद्वृत्त' इति मेदिनी । सुरक्षितः सम्यग्रक्षितः । वय वायुः सूर्यश्चन्द्रमाश्चेत्येते त्रयः त्रीन् परिवत्सरान वर्षाणि । अविच्छेदेन वर्षत्रय यावदित्यर्थ. । साक्षिणो द्रष्टारो रक्षितारश्च स्मः ।

( ३८ ) तत्किमर्थं पुनः स्वयंवरोद्घोषणमिति चेत्तत्राह । उपाय इति । अय स्वयंवरप्रख्यापनरूप. । कथ मदर्थत्वमेतस्येति चेत्तत्राह नेति । हि यतः इह अस्मिंल्लोके त्वामृते त्वा विना अन्यः एकेन अह्ना दिवसेन शत योजनशतमित्यर्थः । गन्ता गमनकर्ता न नास्ति । तस्मात्त्वमेक एव यथासमयमागमिष्यसीति योजितोऽनयायमुपाय इति भावः ।

( ३९ ) उपपन्नेति । त्वया सह । सगन्तुमिति शेषः । उपपन्ना योग्या । अर्हति त्वत्सहवासमित्यर्थः । भैम्या सह सगन्तुमिति यथापूर्वम् ।

---

1 वि ( क. च. न. म. )

नात्र शङ्का त्वया कार्या संगच्छ सह भार्यया ॥ ३९
ततो ब्रुवति वायौ तु पुष्पवृष्टिः पपात ह ।
देवदुन्दुभयो नेदुर्ववौ च पवनः शिवः ॥ ४०
तदद्भुतमयं दृष्ट्वा नलो राजाऽथ भारत ।
दमयन्त्यां विशङ्कां तामपाकर्षदरिंदमः ॥ ४१
ततस्तद्वस्त्रमरजः प्रावृणोद्वसुधाधिपः ।
संस्मृत्य नागराजं तं ततो लेभे स्वकं वपुः ॥ ४२
स्वरूपिणं तु भर्तारं दृष्ट्वा भीमसुता तदा ।
प्राक्रोशदुच्चैरालिङ्ग्य पुण्यश्लोकमनिन्दिता ॥४३
भैमीमपि नलो राजा भ्राजमानो यथा पुरा ।

---

अत्र अस्मिन् विषये । संगच्छ संगम कुरु । आर्षं परस्मैपदम् । 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदविधानात् ।

( ४० ) तत इति । वायौ वाय्वधिष्ठात्र्या देवतायामित्यर्थः । इतरस्य वचनायोगात् । ब्रुवति एव वदति सति । ततः तस्मिन् प्रदेशे । आद्यादित्वात्तसिः सप्तम्यर्थे । तदनन्तरमिति तु नार्थः । ब्रुवतीत्येतेनैव कालस्य सूचितत्वात् । पपात आकाशादिति शेषः । दमयन्त्या नलेन सह समागततया प्रीतत्वाद्देवानामिति भावः । नेदुः दध्वनुः । पवनो वायुः शिवः शुभः सुखकर इत्यर्थः । ववौ चचार । 'वा गतिगन्धनयो' रित्यतो लिट् ।

( ४१ ) तदिति । तत् वायुभाषितपुष्पवृष्ट्यादिकम् । भारत युधिष्ठिर । ता पूर्वोक्ता दमयन्त्या दमयन्तीविषये । दमयन्तीविषयिणीमित्यर्थः । विशङ्कां आत्मनो विपरीत सन्देह अपाकर्षत् ह्रासयामास दूरीचकारेत्यर्थः ।

( ४२ ) तत इति । ततस्तदनन्तरम् । वसुधाधिपः पृथ्वीपतिर्नलः त नागराज कर्कोटक संस्मृत्य सम्यक् स्मृत्वा । तदादेशानुरोधादिति भावः ( द्रष्टव्यता षट्षष्टेऽध्याये चतुर्विंश च पद्य पञ्चविंश च ) तत् कर्कोटकेन दत्तपूर्वं अरजः रजःशून्य वस्त्र प्रावृणोत् प्रावरणतया जग्राह । स्वक स्वीयम् । स्वार्थे कन् । वपुः शरीर स्वरूपमिति यावत् । लेभे ।

( ४३ ) स्वरूपिणमिति । भर्तार स्वरूपिण स्वस्य रूपमाकारः अस्त्यस्य यथाभूतम् । प्राप्तात्मरूपमित्यर्थः । तं पुण्यश्लोकं नलमालिङ्ग्य उच्चैः प्राक्रोशत् । एष हि स्वभावो नारीणा यच्चिरादर्शनविषयीभूतस्य बान्धवादेर्लाभे स्मृत्युपस्थितपूर्वदुःखा परिष्वज्य क्रोशन्तीति ।

( ४४ ) भैमीमिति । यथा पुरा पूर्वं तथेति शेषः । तथा भ्राजमानः दीप्यमानः राजा नलः अपीति भिन्नक्रमेण योज्यम् । सस्वजे आलिङ्गितवान् । ष्वञ्ज परिष्वङ्ग इत्यतो लिट् । 'श्रन्थिग्रन्थिदम्भिस्वञ्जीना लिटः कित्त्व वे' ति व्याकरणान्तरेण कित्त्वे 'अनिदिता हल उपधायाः क्ङिति' इति न लोपः । स्वसुतौ आत्मनः कन्यापुत्रौ यथान्यायं यथोचितम् । प्रत्यनन्दत

सस्वजे स्वसुतौ चापि यथावत्प्रत्यनन्दत ॥ ४४
ततश्चोरसि विन्यस्य वक्त्रं तस्य शुभानना ।
परीता तेन दुःखेन निशश्वासायतेक्षणा ॥ ४५
तथैव मलदिग्धाङ्गीं परिष्वज्य शुचिस्मिताम् ।
सुचिरं पुरुषव्याघ्रस्तस्थौ शोकपरिप्लुतः ॥ ४६
ततः सर्वं यथा वृत्तं दमयन्त्या नलस्य च ।
भीमायाकथयत्प्रीत्या वैदर्भीजननी नृप ॥ ४७
ततोऽब्रवीन्महाराजः कृतशौचमहं नलम् ।
दमयन्त्या सहोपेतं कल्ये द्रष्टा सुखोषितम् ॥ ४८
ततस्तौ सहितौ रात्रिं कथयन्तौ पुरातनम् ।

प्रत्यनन्दयत् । मूर्धावघ्राणाङ्कारोपणादिना नन्दयामासेत्यर्थः । अन्तर्भावितण्यर्थोऽत्र नन्दतिः । आर्षमात्मनेपदम् ।

( ४५ ) तत इति । आयतेक्षणा आयते दीर्घे ईक्षणे यस्यास्तथाभूता। तेन अनुभूतपूर्वेण दुःखेन परीता व्याप्ता । प्रियजनसन्दर्शनेन तस्य सपदि सप्रसरस्मृततयाविर्भूतत्वादिति भावः । 'सन्तानवाहीन्यपि मानुषाणां दुःखानि सद्बन्धुवियोगजानि । दृष्टे जने प्रेयसि दुःसहानि स्रोतःसहस्रैरिव संप्लवन्ते'। इति भवभूतिः ।

( ४६ ) तथैवेति । मलदिग्धाङ्गीं विरहावस्थायां शरीरसंस्कारानुष्ठानात् मलेन दिग्धं लिप्तं अङ्गं यस्यास्तथाभूताम् । शुचिस्मितां शुभ्रहसितां दमयन्तीम् । परिष्वज्य आलिङ्ग्य सुचिरं सुमहत्कालं शोकपरिप्लुतः शोकेन व्याप्तः सन् तस्थौ यथावस्थितमेवातिष्ठत् । शोकेन कार्यान्तरस्य विस्मरणादिति भावः ।

( ४७ ) तत इति । वैदर्भीजननी दमयन्त्या माता दमयन्त्या नलस्य च वृत्तं यथा यथावत् । प्रीत्या हर्षेण ।

( ४८ ) तत इति । महाराजो भीमः । तद्वचनमाह कृतेति । अहं सुखोषितं सुखेन उषितं कृतवासम् । वसतेर्निष्ठा यजादित्वात्सम्प्रसारणम् । दमयन्त्या सह उपेतं युक्तं नलं कल्ये प्रभाते । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः । कृतशौचं कृतं शौचं शुचित्वापादकं स्नानादिकर्म येन तथाभूतं द्रष्टा दर्शनकर्ता भविष्यामीति शेषः । दृशेः 'आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु' इति साधुकारिण्यर्थे 'तृन्' इति तृन् । 'नलोके' त्यादिना षष्ठीनिषेधाद्द्वितीया । 'द्रष्टा द्रक्ष्यामी'ति भ्रान्तिरेवेयं चतुर्भुजस्य लुटि द्रष्टास्मीति रूपापत्तेरिति ।

( ४९ ) तत इति । सहितौ परस्परं मिलितौ तौ दमयन्तीनलौ रात्रिं सकलायां रात्रावच्छेदेन पुरातनं पूर्वकालिकं सर्वं वने विचरितं सचरणं तत्सर्वं वृत्तमिति भावः । 'नपुंसके भावे क्तः ।' कथयन्तौ परस्परस्मै

१ वैश्म्या (क. न. म.)

वने विचरितं सर्वैमूपनुमुदितौ नृप ॥ ४९
गृहे भीमस्य नृपतेः परस्परसुखैषिणौ ।
वसेतां हृष्टसंकल्पौ वैदर्भी च नलश्च ह ॥ ५०
स चतुर्थे ततो वर्षे संगम्य सह भार्यया ।
सर्वकामैः सुसिद्धार्थो लब्धवान्परमां मुदम् ।
दमयन्त्यपि भर्तारमासाद्याप्यायिता भृशम् ।
अर्धसंजातसस्येव तोयं प्राप्य वसुंधरा ॥ ५२
सैवं समेत्य व्यपनीय तन्द्रां शान्तज्वरा हर्षविवृद्धसत्त्वा ।

---

निवेदयन्तौ मुदितौ हृष्टौ सन्तौ ऊषतु. । स्वभावः किलाय चिरदृष्टानां प्रणयिनाम् । अत एवाह भवभूतिः 'किमपि किमपि मन्द मन्दमासत्तियोगादविरलितकपोल जल्पतोरक्रमेण । अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत् ॥' इति ।

(५०) गृह इति । हृष्टसंकल्पौ हृष्टः संकल्पो मनो ययोस्तथाभूतौ । परस्परसुखैषिणौ परस्परयोः सुखं एषितु शील ययोस्तथाभूतौ । वसेता अवसतामित्यर्थः । लडर्थे लिङार्षः ।

(५१) स इति । तत इति लब्धवानित्यनेन संबध्यते । न तु चतुर्थे वर्षे इत्येतेन । सुसिद्धार्थः सुष्ठु सिद्धो निष्पन्न. अर्थ. कार्यं यस्य तथाभूतः। कृतार्थः । सर्वकामैः सर्वैरभीष्टैरर्थैः । कामशब्दो लक्षणया तद्विषयवचनः । परमा आत्यन्तिकीं मुद प्रीतिं ( हर्षं ) लब्धवान् । प्रणयिजनलाभेन संपन्नसकलकाम इवानन्दं मापदिति भावः ।

( ५२ ) दमयन्तीति । भृश आप्यायिता वृद्धिं प्राप्ता । हर्षातिरेकेण कार्श्यहानात्पुष्टेव बभूवेति भावः । अर्धसंजातसस्या अर्धे सञ्जातानि सस्यानि धान्यानि यस्या तथाभूता । वसुन्धरा पृथ्वी तोय जल प्राप्येव । यथा प्ररूढेष्वपरिपक्वेषु च सस्येष्ववग्रहगृहीता पृथिवी वृष्ट्याऽऽप्यायत एवं प्ररूढप्रणयाऽपि विप्रयोगव्याकुला श्रीमती दमयन्ती भर्तारमवाप्याप्यायिता बभूवेत्यभिप्रायः । बिम्बप्रतिबिम्बभावेनोपमालङ्कारः ।

( ५३ ) सेति । एव समेत्य भर्त्रा सगत्य तन्द्रा आलस्यविशेषं व्यपनीय वर्तमानेति शेषः । व्यपनीततन्द्रेति पाठस्तु साधीयान् । शान्तज्वरा प्रशान्ततापा हर्षविवृद्धसत्त्वा हर्षेण विवृद्ध सत्त्व बलं यस्यास्तथाभूता । आनन्दवशात्परित्यक्तग्लानिरित्यर्थः । भैमी उदितेन उदय प्राप्तेन शीतांशुना शीता अंशवः किरणा यस्य तेन चन्द्रेण रात्रिरिव रराज । रात्रिपक्षे तन्द्रा आतपतापादिना रात्रौ सत्यामपि प्राणिनां यार्थेप्यौदासीन्यमित्येतद्रूपा व्यपनीयेति

रराज भैमी समवाप्तकामा शीतांशुना रात्रिरिवोदितेन ५२

इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि नलदमयन्तीमिलने षट्सप्ततितमोऽध्यायः ।

## सप्तसप्ततितमोऽध्यायः।



बृहदश्व उवाच—

अथ तां व्युषितो रात्रिं नलो राजा स्वलंकृतः ।
वैदर्भ्या सहितः कल्ये ददर्श वसुधाधिपम् ॥ १
ततोऽभिवादयामास प्रयतः श्वशुरं नलः ।
ततो नु दमयन्ती च ववन्दे पितरं शुभा ॥ २
तं भीमः प्रतिजग्राह पुत्रवत्परया मुदा ।
यथार्हं पूजयित्वा च समाश्वासयत प्रभुः ॥ ३
नलेन सहितां तत्र दमयन्तीं पतिव्रताम् ।

---

समानम् । शान्तज्वरा शान्तो ज्वरः सूर्यकरजन्यस्तापो यया यस्या वा तथाभूता । हर्षविवृद्धसत्त्वा हर्षेण विवृद्धा विशिष्टां वृद्धिमिव प्राप्ताः सत्त्वा जन्तवो यस्यां तथाभूतेत्यर्थः । उपमालङ्कारः ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां षट्सप्ततितमोऽध्यायः ।

---

( १ ) अथेति । तां रात्रिं व्युषितः तस्यां सकलायामपि रात्रौ कृतवसतिः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । व्युषित इति विपूर्वाद्वसतेर्निष्ठा । कल्ये प्रातः स्वलङ्कृतः सुष्ठु अलङ्कृतः सन् वसुधाधिपं पृथ्वीपतिं भीमं ददर्श ।

( २ ) तत इति । ततो दर्शनानन्तरं प्रयतः पवित्रः । 'पवित्रः प्रयतः पूतः' इत्यमरः । नलः श्वशुरं अभिवादयामास नमश्चकार । अभिवादनं च न हि करयोः कुड्मलीकरणरूपो लौकिको नमस्कारः किन्तु अभिवादयेऽमुकशर्माहम्भो इत्युच्चारपूर्वको नमस्कारः । स च पादोपसंग्रहणपूर्वकः । 'अभिवादात्परं विप्रो ज्यायांसमभिवादयन् । असौ नामाहमस्मीति स्वं नाम परिकीर्तयेत् ॥ भोःशब्दं कीर्तयेदन्ते स्वस्य नाम्नोऽभिवादनम् ।' इति मनुः । उपसंग्रहणप्रकारश्च तेनैव दर्शितः । यथा—व्यत्यस्तपाणिना कार्यमुपसंग्रहणं गुरोः । सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः । इति । ततोऽनु ततः पश्चात् ।

( ३ ) तमिति । पुत्रवत् यथा पुत्रं तथा परया मुदा आत्यन्तिकेन हर्षेण प्रतिजग्राह गृहीतवान् । हस्ताभ्यामुपादायात्मनः सकाशे उपवेशितवानित्यर्थः । यथार्हं अर्हशब्दोऽनार्हतापरः । भावप्रधानो ह्यसौ निर्देश इति ।

---

१ काल्यं ( क ) २ अतः परं 'अनुजग्राह महता सत्कारेण क्षितीश्वरः ॥' इत्यधिकं कपुस्तके ।

तामर्हणां नलो राजा प्रतिगृह्य यथाविधि ॥४
परिचर्यां स्वकां तस्मै यथावत्प्रत्यवेदयत् ।
ततो बभूव नगरे सुमहान्हर्षजः स्वनः ॥ ५
जनस्य संप्रहृष्टस्य नलं दृष्ट्वा तथाऽऽगतम् ।
अशोभयच्च नगरं पताकाध्वजमालिनम् ॥ ६
सिक्ताःसुमृष्टपुष्पाढ्या राजमार्गाः स्वलंकृताः ।

तेन नलस्य योग्यतानुरूपमित्यर्थः । पूजयित्वा बहु मानयित्वा समाश्वासयत सुखित कृतवान् । अर्धमेतदुत्तरान्वयि ।

( ४ ) नलेनेति । अर्धमेतत्पूर्वपद्योत्तरार्धेनान्वेति । अतः पर ' अनुजग्राह महता सत्कारेण क्षितीश्वरः । ' इत्यधिकमर्धं कपुस्तके पौनरुक्त्यायैवेत्युपेक्षणीयम् । तामर्हणा पूजा सत्कारमित्यर्थः । यथाविधि विधिवत् प्रतिगृह्य स्वीकृत्य । उत्तरपद्यान्वय्यर्धमिदम् ।

( ५ ) परिचर्यामिति । तस्मै भीमाय आत्मनः परिचर्या वृत्तान्तमिति चतुर्भुजः । परिपूर्वकस्तु चरतिर्नास्मिन्नर्थे सदृष्ट' किन्तु सेवायामेव प्रथित' । इत्थं हि सदृश्यते कोशेषु । तथा ह्यमरः ' वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासना । ' इति । अतश्च परिचर्याशब्दोऽत्र परिचर्यासाधने लाक्षणिक' । तेन आत्मनः परिचर्यां तत्सेवासाधनभूत समुचित कमप्युपहार तस्मै त बहुमन्तुमित्यर्थः । 'क्रियार्थोपपदस्य च कर्मणि स्थानिन' इति चतुर्थी । प्रत्यवेदयत् प्रतिलम्भयामास । विद्लृ लाभ इत्यतो णिचि लङ् । यथा तेनाय व हुमतस्तथाऽयमपि स्वकर्तृकसेवासाधन कमप्युपहार तस्मै प्रतिपादयामासेति भावः । तत इत्यर्धमुत्तरान्वयि । स्वन. शब्द' ।

( ६ ) केयामसौ शब्द इत्याह । जनस्येति । तथा तेन प्रकारेण आगत प्राप्त नल दृष्ट्वा सप्रहृष्टस्य अत्यन्तमानन्दितस्य जनस्य । तथागत तथा तस्यामभ्युदयमय्यामवस्थाया गत प्रविष्ट विद्यमानमिति वा । अशोभयदिति। जन इति विभक्तिविपरिणामेन सबध्यते । जनः कर्ता नगर पताकाध्वजमालिन पताकाः क्षुद्रा ध्वजाः ताश्च ध्वजाश्च मालाश्च सन्ति यस्मिंस्तथाभूत कृत्वेति शेषः अशोभयत् शोभायुक्त कृतवान् । अत्र नगरशब्दः पुंसि । लिङ्गमनियत लोकाश्रयत्वाल्लिङ्गस्येति भाष्यात् । अत एव च प्रयुञ्जते वैय्याकरणा अपि कवयः । यथा 'अलभ्य पौराभि सुविमलतपोराशिभिरपि' इति जगन्नाथः । अत्र च ' अशोभयच्च नगरीं पताकाध्वजमालिनीम् । ' इति सुसस्कृतः कपुस्तकमात्रसदृष्टः पाठः ।

( ७ ) सिक्ता इति । राजमार्गा. मार्गाणा राजानः प्रधानमार्गा इत्यर्थ' । सिक्ताः सुमृष्टपुष्पाढ्याः सुष्ठु मृष्टा. कृतसमार्जनाश्च पुष्पैराढ्याश्च । स्वलङ्कृताः अत्यन्तमलङ्कृता आसन्निति शेष' । पौराणा पुरेभवाना सौ-

१ वैदर्भ्या मोहना राजा ( ख ) २ अशोभयच्च नगरीं पताकाध्वजमालिनीम् ( क )

द्वारि द्वारि च पौराणां पुष्पभङ्गोपकल्पिताः ॥ ७
अर्चितानि च सर्वाणि देवतायतनानि च ।
ऋतुपर्णोऽपि शुश्राव बाहुकच्छद्मिनं नलम् ॥ ८
दमयन्त्या समायुक्तं जहृषे च नराधिपः ।
तमानाय्य नलं राजा क्षमयामास पार्थिवम् ॥९
स च तं क्षमयामास हेतुभिर्बुद्धिसंमतः ।
स सत्कृतो महीपालो नैषधं विस्मिताननः ॥ १०
उवाच वाक्यं तत्त्वज्ञो नैषधं वदतां वरः ।
दिष्ट्या समेतो दारैः स्वैर्भवानित्यभ्यनन्दत ॥ ११

कानां द्वारि द्वारि प्रतिद्वार पुष्पभङ्गोपकल्पिताः पुष्पभङ्गा उपकल्पिता इति च्छेदः । आर्षः पुनः सन्धिः । पुष्पभङ्गाः कुसुमसमूह इति चतुर्भुजः । पुष्पसम्मर्द इति च नीलकण्ठः । वस्तुतः पुनर्भङ्गो विच्छित्तिः । विच्छित्तिश्च वैचित्र्यम् । पुष्पशब्दश्च पुष्पाणामुपहाररूप विन्यासविशेष लक्षयति। ततश्च पुष्पोपहारवैचित्र्यमुपकल्पितमित्यर्थ सपद्यते । आसीच्च रीतिरियं प्राचाम् । सदृश्यते हि ' विरचितविविधकुसुमोपहारेष्वि ' त्यादीनि पदानि कादम्बर्यादौ । न्याय्य चात्र महोत्सवावसरे द्वारि द्वारि विचित्रकुसुमोपहारोपकल्पन पौराणामिति । ' कौटिल्ये भयविच्छित्त्यो ' रिति भङ्गशब्दार्थेषु हैमः ।

( ८-९ ) अर्चितानीति युग्मकमेतत् । देवतायतनानि देवमन्दिराणि अर्चितानि पूजितानि अलङ्कृतानीति यावत् । ध्वजचन्दनमालादिभिरलङ्करणमेव हि पूजा देवतायतनानामिति । बाहुकच्छद्मिन बाहुकस्य छद्म मिष तदस्त्यस्य तथाभूतम् । ' अत इनि ठनावि ' ति इनिः । बाहुकमिषेणात्रस्थितमित्यर्थः । छद्मशब्दः पुनरदन्त आर्षः । नल दमयन्त्या समायुक्तं सगत शुश्राव । नराधिप ऋतुपर्णः जहृषे जहर्ष आनन्द प्राप्तवान् । आर्षं मात्मनेपदम् । त नल आनाय्य दूतादिद्वारा आनीयेत्यर्थ. । आनयतेर्ण्यन्तात् क्त्वो ल्यप् । क्षमयामास क्षमा प्रार्थयामास । क्षमाशब्दात्प्रातिपदिकाद्धात्वर्थ इति णिचि लिट् ।

( १० ) स इति । बुद्धिसम्मतो बुध्या सम्मतो बहुमतः प्रशस्तबुद्धिमानित्यर्थः । स च स नलोपि । हेतुभिः कारणवचनैः । हेतुप्रदर्शनपूर्वकमित्यर्थः । स इत्यर्धमुत्तरान्वयि । महीपाल ऋतुपर्णः । उवाचेत्यनेन सबन्धः।

( ११ ) उवाचेति । तत्त्वज्ञः तत्त्व परमार्थ जानाति तथाभूतः । अवगतपारमार्थिकनलस्वरूप इत्यर्थः। वदता वरः वाग्मिषु श्रेष्ठः। स्वैः स्वीयैर्दारैर्भार्यया समेतो मिलितः । इति उक्त्वेति शेषः ।अभ्यनन्दत अभ्यनन्दयत्। अन्तर्भावितण्यर्थोऽत्र नन्दतिः । आत्मनेपद पुनरार्षम्।

१ पुष्पभङ्ग. प्रकल्पिता. । ( क. च. ) २ पार्थिवः ( क ) ३ संमितः ( क )
४ विस्मितो नलम् ( च ) ५ एतदर्धं कचपुस्तकयोर्नास्ति ।

कच्चित्तु नापराधं ते कृतवानस्मि नैषध ।
अज्ञातवासे वसतो मद्गृहे वसुधाधिप ॥ १२
यदि वाऽबुद्धिपूर्वाणि यदि बुद्ध्याऽपि कानिचित् ।
मया कृतान्यकार्याणि तानि त्वं क्षन्तुमर्हसि ॥ १३

नल उवाच—

न मेऽपराधं कृतवांस्त्वं स्वल्पमपि पार्थिव ।
कृतेऽपि च न मे कोपः क्षन्तव्यं हि मया तव ॥ १४
पूर्वं ह्यपि सखा मेऽसि संबन्धी च जनाधिप ।
अत ऊर्ध्वं तु भूयस्त्वं प्रीतिमाहर्तुमर्हसि ॥ १५
सर्वकामैः सुविहितैः सुखमस्म्युषितस्त्वयि ।
न तथा स्वगृहे राजन्यथा तव गृहे सदा ॥ १६
इदं चैव हयज्ञानं त्वदीयं मयि तिष्ठति ।
तदुपाकर्तुमिच्छामि मन्यसे यदि पार्थिव ॥ १७
एवमुक्त्वा ददौ विद्यामृतुपर्णाय नैषधः ।
स च तां प्रतिजग्राह विधिदृष्टेन कर्मणा १८

---

( १२ ) पुनरपि ऋतुपर्णस्य वचनमाह कच्चिदिति । तु किन्तु वसुधाधिप राजन् नैषध । कच्चिदिति प्रश्नेऽव्ययम् ।

( १३ ) क्षमा प्रार्थयते यदीति । बुद्धिपूर्वाणि ज्ञानपूर्वाणि । वा अथवा अबुद्ध्या अज्ञानेनापि । अकार्याणि कर्तुं योग्यानि कार्याणि तथा न भवन्तीत्यकार्याणि । त्वद्विषये कर्तुमयोग्यानि कर्माणीत्यर्थः ।

( १४ ) नेति । कृतेऽपि कृते सत्यपि । अपराध इत्यर्थात्सबध्यते । हिकारोऽवधारणे ।

( १५ ) पूर्वमिति । भूयः पुनरपि प्रीतिं मद्विषय इत्यर्थः । आहर्तुं आलम्भितुमिति यावत् । मयि स्नेह प्रविधातुमित्यर्थ. ।

( १६ ) सर्वकामैरिति । सर्वकामै.। मदीयै. सर्वैर्मनोरथैः सुविहितै त्वया सम्यक् सपादितै' उपलक्षित' उपलक्षणे तृतीया । सुख यथा तथा त्वयि त्वत्सकाशे उषितोऽस्मि कृतवसतिरस्मि । उषित इति वसेर्निष्ठा सप्रसारण च तथा स्वगृहे न उषित इत्यनुषञ्जनीयम् ।

( १७ ) इदमिति । इद मयानुभूयमान हयज्ञान अश्वशास्त्र त्वदीय त्वत्स्वामित्वविशिष्टम् । अक्षहृदय प्रयच्छता हि त्वया तन्निक्षेपतया मयि स्थापितमिति त्वदीयमेव तदिति भाव. । ( द्रष्टव्य ७२ अध्याये २९-तम पद्यम् ) उपाकर्तु प्रतिप्रदातुमित्यर्थ । उपाहर्तुमिति पाठस्तु साधीयान्

( १८ ) एवमिति । विधिदृष्टेन शास्त्रे साक्षात्कृतेन कर्मणा शास्त्रोक्तविधिनेत्यर्थः। प्रतिजग्राह स्वीकृतवान् ।

गृहीत्वा चाश्वहृदयं राजन् भाङ्गासुरिर्नृपः
निषधाधिपतेश्चापि दत्त्वाऽक्षहृदयं नृप ॥ १९
सूतमन्यमुपादाय ययौ स्वपुरमेव ह ॥
ऋतुपर्णे गते राजन्नलो राजा विशांपते ।
नगरे कुण्डिने कालं नातिदीर्घमिवाभवत् ॥ २०
इति श्रीमन्महाभारते आरण्यपर्वणि नलोपाख्यानपर्वणि
ऋतुपर्णदेशगमने सप्तसप्ततितमोऽध्यायः ।

## अष्टसप्ततितमोऽध्यायः ।



बृहदश्व उवाच—
स मासमुष्य कौन्तेय भीममामन्त्य नैषधः ।
पुरादल्पपरीवारो जगाम निषधान्प्रति ॥ १

( १९ ) गृहीत्वेति । अश्वहृदय अश्वशास्त्ररहस्यम् । निषधाधिपतेर्नलस्येत्यर्थः । शेषे षष्ठी । एतच्चात्र 'स तेऽक्षहृदय दाता राजाऽश्वहृदयेन वै' इति कर्कोटकवचनस्य सफलत्वसूचनायात्र निर्दिष्टं भगवता बृहदश्वेन । अक्षहृदयं हि प्रागेव समर्पितं नलायर्तुपर्णेनेति । ( द्रष्टव्या ७२ तमेऽध्याये त्रिंश पद्यम् ) यद्वा 'हे नृप राजन् ( युधिष्ठिर ) नृपो भाङ्गासुरिः ( प्रागेव ) अक्षहृदय दत्त्वा निषधाधिपतेश्चापि इदानीं अश्वहृदय गृहीत्वेति योजनीयम् अत्रार्थे निषधाधिपतेरिति पञ्चमी ।

( २० ) सूतमिति । अन्य सूत सारथिं, वार्ष्णेयस्यापि नलसारथित्वेन तद्ग्रहणायोगादिति भावः । उपादाय गृहीत्वा । हकारः पादपूरणे । विशां मराणां पते पालक राजन् युधिष्ठिर । नातिदीर्घकाल नातिचिरकालमिवेत्यर्थः । अभवत् आसीत् ।

इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यां सप्तसप्ततोऽध्यायः ।

( १ ) स इति । कौन्तेय कुन्तीपुत्र युधिष्ठिर । मास ( यावत् ) उष्य उषित्वा ( वास कृत्वा ) । उष्येतिच्छान्दसम् । छान्दसा अपि कचिद्भाषायां प्रयुज्यन्त इति तु भाषायां तत्प्रयोगः । 'वा च्छन्दसीति वक्तव्ये क्त्वापि च्छन्दसीतिवचनमसमासेऽपि ल्यबर्थम् ।' इति शरणदेवधृतो न्यासः । भीम आमन्त्य आपृच्छ्य । आङ्पूर्वको हि मन्त्रयतिरापृच्छतिवद्गमनाभ्यनुज्ञाप्रार्थनार्थः । 'चक्रवाकवधू ! आमन्त्रयस्व सहचरम्' इति शकुन्तला । पुरात् कुण्डिनाख्यात् ।

१ ततो गृह्याश्वहृदयं तदा भाङ्गासुरिर्नृप. ( च ) गीतो भागस्वारेर्नृप ( क ) २ नृप. ( क ) ३ अवसत् ( क. च. म. न. )

रथेनैकेन शुभ्रेण दन्तिभिः परिषोडशैः ।
पञ्चाशद्भिर्हयैश्चैव षट्शतैश्च पदातिभिः ॥ २
स कम्पयन्निव महीं त्वरमाणो महीपतिः ।
प्रविवेशाथ संरब्धस्तरसैव महामनाः ॥ ३
ततः पुष्करमासाद्य वीरसेनसुतो नलः ।
उवाच दीव्याव पुनर्बहुवित्तं मयार्ऽजितम् ॥ ४
दमयन्ती च यच्चान्यन्मम किंचन विद्यते ।
एष वै मम संन्यासस्तव राज्यं तु पुष्कर ॥ ५
पुनः प्रवर्ततां द्यूतमिति मे निश्चिता मतिः ।
पाणेनैकेन भद्रं ते प्राणयोश्च पणावहे ॥ ६

( २ ) अल्पपरिवारत्वमुपपादयति रथेनेति । परिषोडशैः षोडशानां परितो विद्यमानैः । उपषोडशैरित्यर्थः । 'सङ्ख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इति समासः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति डच् । पञ्चाशद्भिरिति । आर्षमिदम् । 'विंशत्याद्याः सदैकत्वे' इत्येकवचनस्याव-यवस्वभावित्वात् । एव षट्शतैरित्यपि । पदातिभिः पादचारिभिः ।

( ३ ) स इति । महीं कम्पयन्निव भीत्या कम्पयुक्तां कुर्वन्निव । अत्र हेतुः सुसंरब्धः अत्यन्त संरब्ध. क्षुब्धः । त्वरमाणः त्वरां कुर्वन् । तरसा वेगेन । प्रविवेश आत्मनो राजधानीमिति शेषः । महीपतिरित्यत्र महापुरी-मिति कपुस्तकपाठः साधुतरः ।

( ४ ) तत इति । पुष्कर नाम भ्रातर आसाद्य उपगम्य । वीरसेनसुत इति तेजस्वितातिशयो द्योत्यते । उवाच । वचनमाह दीव्यावेति । दीव्याव द्यूत करवाव । दीव्यते प्रार्थने लोट् । ननु कस्ते निर्धनस्य पण इति चेत्तत्राह बहुवित्तमिति ।

( ५ ) पणार्थं वस्तुन्यासव्यवस्थामाह दमयन्तीति । मम सन्यासः समी-चीनो न्यासः पणार्थे न्यसनीय द्रव्यम् । तव तु राज्य सन्यास इति सबध्यते ।

( ६ ) पुनरिति । एकेन पाणेन 'डाव' इति महाराष्ट्रया ख्यातेन । पाशक-लोपकान्त द्यूतकर्म तच्चजयपराजयान्त सकृदवसित पाण इत्युच्यते । ततश्च सत्याभिच्छाया पुनरुपक्रम्यते स द्वितीयः पाण. । एवमन्यदपि द्रष्टव्यम् पणन्ते पणीकुर्वन्त्यस्मिन्निति पाणः । पण व्यवहारे इत्यतो घञ् । व्यवहारश्च द्यूते पणकरणरूपः 'पणानामपणिष्टासौ' इति भट्टिः (८–१२१) । प्राणयोश्च प्राणयोरपि विषये पणावहे पण कुर्वः । वायुविशेषवचनः किल प्राणशब्दो बहुवचनान्तः । पञ्चत्वमापेदुषाम् । जीववचनस्तु प्राण्यतेऽनेनेति व्युत्पत्त्या सिद्ध एकवचनान्तः । एकत्वात्तस्येति । एकस्मिंस्तावत्पाणे जीवमेव पणीकरिष्याव इति भावः । पाणेनेति करणत्वविवक्षाया तृतीया ।

१ महापुरीम् ( क ) २ एकपाणेन ( क. न. म. ) पणेनैकेन ( न. )

जित्वा परस्वमाहृत्य राज्यं वा यदि वा वसु ।
प्रतिपाणः प्रदातव्यः परमो धर्म उच्यते ॥ ७
न चेद्वाञ्छसि तद्द्यूतं युद्धद्यूतं प्रवर्तताम् ।
द्वैरथेनास्तु वै शान्तिस्तव वा मम वा नृप ॥ ८
वंशभोज्यमिदं राज्यमर्थितव्यं यथातथा ।
येन केनाप्युपायेन वृद्धानामिति शासनम् ॥ ९
द्वयोरेकतरे बुद्धिः क्रियतामद्य पुष्कर ।
कैतवेनाक्षवत्यां तु युद्धे वा नाम्यतां धनुः ॥ १०
नैषधेनैवमुक्तस्तु पुष्करः प्रहसन्निव ।
ध्रुवमात्मजयं मत्वा प्रत्याह पृथिवीपतिम् ॥ ११
दिष्ट्या त्वदाऽर्जितं वित्तं प्रतिपाणाय नैषध ।

(७) ननु भो नाहमिदानीं द्यूतमिच्छामीति चेत्तत्रैव धर्म इत्याह जित्वेति। परस्व परस्य स्वं स्वत्वास्पदं वस्तु । किं तदित्याह राज्यमिति । जित्वा अभिभूय गृहीत्वा । प्रतिपाणः प्रतिदेवनभूतः पाणः प्रदातव्य इत्येष परमो धर्म उच्यते शास्त्रकृद्भिरिति भावः ।

(८) द्यूतानिच्छायामाह नेति । युद्धद्यूतं युद्धरूपं द्यूतं प्रवर्ततां आरब्धं भवतु । ततः किमित्याह । द्वैरथेनेति। द्वाभ्यां रथाभ्यां प्रवर्तमानेन रथारूढयोर्द्वन्द्वयुद्धेन करणभूतेन । शान्तिः शमो नाश इत्यर्थः ।

(९) कुतोऽयमाग्रह इति चेत्तत्राह । वंशभोज्यं वंशेन वंशक्रमेण भोज्यं उपभोक्तव्यमित्यर्थः । आर्षः कृत्याभावः । 'भोज्यं भक्ष्यं, इति भक्ष्य एव हि सः । अर्थितव्यं अभिलषणीयम् । यथातथा येन केनापि प्रकारेण वंशभोज्यमित्यनेन सबन्धः । शासनमाज्ञा ।

(१०) द्वयोरिति । द्वयोर्द्यूतयुद्धयोर्मध्ये एकतरे एकतरस्मिन्नित्यर्थः । आर्षः स्मिनोऽभावः । ' एकाच्च प्राचा ' मिति ह्यत्र डतरः। डतरान्तं च सर्वनाम । सर्वनामस्थश्च ङेः स्मिन् । कयोर्द्वयोरित्याह कैतवेन कपटेन अक्षवत्यां द्यूते । ' द्यूतोऽस्त्रियामक्षवती ' त्यमरः । द्यूतक्रियाया ह्यक्षा एव प्रमाणतया प्राधान्येन भवन्तीति । युद्धे युद्धविषये युद्धार्थमित्यर्थः । नाम्यतां । अवनमितं क्रियताम् । नमतेर्ण्यन्तात्कर्मणि लोट् । ' वा चित्तविराग ' इत्यतो वेत्यनुवृत्तेर्मित्वविकल्पाद्वा ह्रस्वत्वम् ।

(११) नैषधेनेति । आत्मजयं आत्मन उत्कर्षं ध्रुवं निश्चितं अवश्यम्भाविनमित्यर्थः । मत्वा प्रहसन्निव अवज्ञार्थः प्रहासः । प्रत्याह उत्तरयामास । पृथिवीपतिमिति निषधराज्ये पुष्करस्याधिकाराभावं द्योतयति ।

(१२) परिहासमाह । दिष्ट्येति । त्वया प्रतिपाणाय प्रतिपाणं कर्तुं वित्तं धनं आर्जितं संपादितमित्येतत् दिष्ट्या मे हर्षायेत्यर्थः । दिष्टेति हर्षेऽ-

१ पाणो हि धन उच्यते (क) पर हि धनमुच्यते(च) २ वा (क. च.) ३ निषधाधिपम् (क)

दिष्ट्या च दुष्कृतं कर्म दमयन्त्याः क्षयं गतम् ॥ १२
दिष्ट्या च ध्रियसे राजन्सदारोऽद्य महाभुज ।
धनेनानेन वै भैमी जितेन समलंकृता ॥ १३
मामुपस्थास्यति व्यक्तं दिवि शक्रमिवाप्सराः ।
नित्यशो हि स्मरामि त्वां प्रतीक्षेऽपि च नैषध ॥ १४
देवनेन मम प्रीतिर्न भवत्यसुहृद्गणैः ।
जित्वा त्वद्य वरारोहां दमयन्तीमनिन्दिताम् ॥ १५
कृतकृत्यो भविष्यामि सा हि मे नित्यशो हृदि ।
श्रुत्वा तु तस्य ता वाचो बह्वबद्धप्रलापिनः ॥ १६

---

व्ययम् । च किं च दमयन्त्या दुष्कृतं दुष्कृतरूपं पापरूपं कर्म । यस्य किल फलं भवद्भार्याभवनमिति भावः । क्षयं गतं नाशं प्राप्तम् । पणे कृतां हि तामहमवश्य जेष्यामि ततश्चासौ सुखमाप्स्यतीति नष्टमिदानीं तस्याः पापं कर्मेति भावः । एतदपि दिष्ट्या हर्षकरं म इत्यर्थः ।

( १३ ) दिष्ट्येति । ध्रियसे जीवसि धृङ् अवस्थाने इत्यतो लट् । 'आर्यपुत्र ध्रिय एषा ध्रिये' इत्युत्तरचरितम् । ( अं ४. ) । महाभुजेति परिहासः । सामर्थ्यशून्येति भावः । अत्र 'दिष्टं वै प्रीयसे राजन्मम लाभाय नैषध । इति पाठान्तरं नातिमनोरमम् । धनेनेत्युत्तरान्वय्यर्धम् । समलङ्कृता सम्यगलङ्कारविशिष्टा भैमी दमयन्ती कर्त्री अनेन धनेन सह ।

( १४ ) मामिति । शक्रं इन्द्रं अप्सराः स्वर्वेश्येव । सागरात्किल मथ्यमानादाविर्भूता अप्सरस इत्यद्भ्यः सरणात्ता अप्सरस इत्याख्यायन्ते । अप्परःशब्दस्य बहुत्व प्रायिकम् । तत एव 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि । ' इति शब्दार्णवः । व्यक्तं स्पष्टं यथा तथा उपस्थास्यति उपगमिष्यति । निःसन्देहमेव हि त्वां जेष्यामीति भावः । हिकारोऽवधारणे । नित्यशः प्रत्यहम् । आर्षःशम् । प्रतीक्षे प्रतिपालयामि । समागतं हि त्वां विजित्य दमयन्तीं विन्देयमिति मे विश्वास इतीवि भावः ।

( १५ ) देवनेनेति । असुहृद्गणैः शत्रुसमूहैः सह देवनेन द्यूतेन मम प्रीतिर्हर्षः न भवति । तत्कुतो वा देवने प्रवृत्तिरित्याह । जित्वेति । तु तथापीत्यर्थः । वरारोहां सुन्दरीं जित्वा त्वामभिभूय गृहीत्वा । कृतकृत्यो भविष्यामीत्युत्तरेण संबन्धः ।

( १६ ) कृतकृत्य इति । कृतकृत्यः कृतं कृत्यमात्मनः कर्तव्यं येन तथा भूतः कृतार्थ इत्यर्थः । हि यतः सा नित्यशः प्रत्यहं निरन्तरमिति यावत् हृदि हृदये अस्तीति शेषः । श्रुत्वेत्यर्धमुत्तरान्वयि । बहु यथा तथा अबद्धप्रलापिनः असंबद्धनिरर्थकभाषणशीलस्य तस्य पुष्करस्य ।

---

१ वै प्रीयसे ( क ) च प्रीयसे ( च. ) २ मम लाभाय नैषध ( क )सदारोऽरिनिबर्हण ( च ) ३ अतः परं 'पुनर्वते च ते बुद्धिर्दिष्ट्या पुरुषसत्तम ॥' इत्यधिकं कपुस्तके । ४ भवस्येवा-( क. ) अभयश्च ( च )

इयेष स शिरश्छेत्तुं खड्गेन क्षुपितो नलः ।
स्मयंस्तु रोषताम्राक्षस्तमुवाच नलो नृपः ॥ १७
पणावः किं व्याहरसे जितो न व्याहरिष्यसि ।
ततः प्रावर्तत द्यूतं पुष्करस्य नलस्य च ॥ १८
एकपाणेन वीरेण नलेन स पराजितः ।
सरत्नकोशनिचयैः प्राणेन पणितोपि च १९
जित्वा च पुष्करं राजा प्रहसन्निदमब्रवीत् ।
मम सर्वमिदं राज्यमव्यग्रं हतकण्टकम् ॥ २०
वैदर्भी न त्वया शक्या राजापसद वीक्षितुम् ।
तस्यास्त्वं सपरीवारो मूढ दासत्वमागतः ॥ २१
न त्वया तत्कृतं कर्म येनाहं विजितः पुरा ।
कलिना तत्कृतं कर्म त्वं च मूढ न बुध्यसे ॥ २२

( १७ ) इयेषेति । इयेष अभिलषितवान् । शिर. पुष्करस्य मस्तकम् । तु तथापि । इच्छायां सत्यामपीत्यर्थ. । स्मयन्किंचिद्धसन् । आर्ष आत्मनेपदाभावः । अहो अप्रभविष्णोरवष्टब्धस्य प्रलापमात्रसारत्वमेतस्येति चिन्तयतः स्मितोदय. । उवाच उक्तवानेव न तु शिरश्चिच्छेदेति भावः ।

(१८) वचनमाह पणाव इति । पणाव. पणावहे पणविन्यासपूर्वकं द्यूतं कुर्व इत्यर्थः । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वादात्मनेपदाभावः । किं किमर्थं व्याहरसे वदसि । व्याङ्पूर्वो हि हरतिर्वचने । ' व्याहार उक्ति 'रित्यमरः । ञित्वादात्मनेपदम् । जित इति । मयेति शेष. । अवश्यं त्वां जेष्यामि ततश्च न व्याहर्तुं प्रभविष्यसीत्यलमनेन पुरो गर्जनेनेति भावः ।

( १९ ) एकेति । एकपाणेन एकेनैव पाणेन ' डाव ' इति ख्यातेन करणभूतेन । सरत्नकोशनिचयैः रत्नैः सह वर्तमानैः कोशानां निचयैः प्राणेन जीवेन च प्रकृत्यादित्वात्तृतीया । पणित सञ्जातपण. । तारकादित्वादितच् । कोशनिचयं च जीवितं च पणीकृतवानपीत्यर्थः ।

( २० ) जित्वेति । अव्यग्रं अनाकुलम् । हतकण्टकं हताः कण्टका भवादृशाः क्षुद्राः शत्रवो यस्य तथाभूतम् । ' कण्टको न स्त्रियां क्षुद्रशत्रौ ' इत्यमरः । इदं सर्वं राज्यं मम । मया जितत्वादिति भावः ।

( २१ ) वैदर्भीति । राजापसद राजसु अपसद अपकृष्ट ( नीच ) । वीक्षितुं द्रष्टुमपि कुतः पुनरुपगन्तुमिति भावः ।

( २२ ) न केवलमिदानीमेव सर्वदापि त्वं जय्य एव । पुरा तु मे पराजयो न भवत्कर्तृक इत्याह । नेति । येन कर्मणा पुराऽहं विजितः तत्कर्म । केन तर्हि कृतमिति चेत्तत्राह । कलिनेति । त्वं चेति । चकारस्त्वर्थे तु किंतु त्वं नावबुध्यसे तेन कृतमिति न जानासि । अत एवात्मनि तत्कर्तृत्वमारोपयसीति भाव. ।

१ भद्र ते ( क. भ. न. म. )

नाहं परकृतं दोषं त्वय्याधास्ये कथंचन ।
यथासुखं वै जीव त्वं प्राणानवसृजामि ते ॥ २३
यथैव सर्वसंभारं स्वमंशं वितरामि ते ।
तथैव च मम प्रीतिस्त्वयि वीर न संशयः ॥ २४
सौहार्दं चापि मे त्वत्तो न कदाचित्प्रहास्यति ।
पुष्कर त्वं हि मे भ्राता स जीव शरदः शतम् ॥ २५
एवं नलः सान्त्वयित्वा भ्रातरं सत्यविक्रमः ।
स्वपुरं प्रेषयामास परिष्वज्य पुनः पुनः ॥ २६
सान्त्वितो नैषधेनैवं पुष्करः प्रत्युवाच तम् ।
पुण्यश्लोकं तदा राजन्नभिवाद्य कृताञ्जलिः ॥ २७
कीर्तिरस्तु तवाक्षय्या जीव वर्षायुतं सुखी ।

---

( २३ ) अहं पुनरेतज्जानामीति न त्वामपराधिनमाकलयामीति प्राह । नेति । परकृतं अन्येन कृतं दोषं अपराधं कथंचन केनापि प्रकारेण त्वयि नाधास्ये नारोपयिष्यामि । ते तव प्राणान् अवसृजामि त्यजामि न तु हरामीत्यर्थः । तुभ्यं यच्छामीति वा ।

( २४) यथैवेति । यथैव यस्मात्कारणादेव । सर्वसंभारं सर्वे संभारा उपकरणानि यस्मिंस्तथाभूतं स्वं स्वीयं त्वदीयमिमं अंशं सपदि भागं ते तुभ्यं वितरामि ददामि । विपूर्वको हि तरतिर्दाने । तथैव च तस्मादेव च कारणात् हे वीर त्वयि मम प्रीतिः अस्ति । अत्र संशयो नेति विभाव्यतां भवतेति भावः ।

( २५ ) सौहार्दमिति । सौहार्दं सुहृद्भावः कर्तृभूतः । युवादित्वाद्भावेऽण् 'हृद्भगे' त्यादिनोभयपदवृद्धिः । त्वत्तः त्वद्विषयकमित्यर्थः । आद्यादित्वात्तसिः सप्तम्यर्थे वैषयिके चाधारे सप्तमी । न प्रहास्यति न न्यूनीभविष्यति । आर्षं परस्मैपदम् ओहाङ्त्यागे इत्यतः कर्मकर्तरि लृट् । प्रयुज्यते चायमेव हान्यर्थे । यथा ' सुविहितप्रयोगतया आर्यस्य न किंचित्परिहास्यते ' इति शाकुन्तले । कथमेतदित्याह पुष्करेति । हि यतः । शतं शरदो वर्षाणि अविच्छिन्नं शतसंवत्सरपर्यन्तमित्यर्थः । जीव आशिषि लोट् । ' हायनोऽस्त्री शरत्समाः । ' इति वर्षपर्यायेष्वमरः ।

(२६) एवमिति । सान्त्वयित्वा मधुरैर्वचोभिर्गतखेदं कृत्वा । पुनः पुनः परिष्वज्य आलिङ्ग्य । एतेन प्रेमातिशयोऽभिव्यज्यते । स्वपुरं स्वं पुष्करस्य स्वत्वास्पदीभूतं पुरं प्रेषयामास गमनानुज्ञां दत्तवानित्यर्थः । अन्यथा हि पुनः पुष्करवचनं न संगच्छेत । अत्र वचनैस्तोषयामासेति पाठः सान्त्वनेनैव तोषणस्य गतार्थत्वात्स युक्तः । अत एवोत्तरत्र सान्त्वित इत्युक्तं न तु तोषित इति ।

( २७ ) सान्त्वित इति । अभिवाद्य नमस्कृत्य । अभिपूर्वको हि वादयतिः प्रणामार्थः । तत्र शास्त्रं प्रदर्शितः प्रागेव । कृताञ्जलिः बद्धाञ्जलिः सन् ।

( २८ ) कीर्तिरिति । अक्षय्या अनुपक्षया । ' क्षय्यजय्यौ शक्यार्थे '

---

१ नयैव ( क. १. ग. म. ) २ वचनैस्तोषयामास ( क )

यो मे वितरसि प्राणानधिष्ठानं च पार्थिव ॥ २८
स तथा सत्कृतो राज्ञा मासमुष्य तदा नृपः ।
प्रययौ पुष्करो हृष्टः स्वपुरं स्वजनावृतः ॥ २९
महत्या सेनया सार्धं विनीतैः परिचारकैः ।
भ्राजमान इवादित्यो वपुषा पुरुषर्षभ ॥ ३०
प्रस्थाप्य पुष्करं राजा वित्तमन्तमनामयम् ।
प्रविवेश पुरीं श्रीमानत्यर्थमुपशोभिताम् ॥ ३१
प्रविश्य सान्त्वयामास पौरांश्च निषधाधिपः ।
पौरा जानपदाश्चापि संप्रहृष्टतनूरुहाः ॥ ३२
ऊचुः प्राञ्जलयः सर्वे सामात्यप्रमुखा जनाः ।

इति निपातनात्साधु । वर्षायुत वर्षाणा दश सहस्राणि । उभयत्राप्याशिषि लोट् । यः मे प्राणान् वितरसि ददासि । अधिष्ठान अधिष्ठीयतेऽत्र तन्नगरमिति कल्पद्रुमः । कृत्यल्युटो बहुलमित्याधिकरणे ल्युट् ।

(२९–३०) स इति । युग्मकमेतत् । स नृपः पुष्करो राज्ञा नलेन सत्कृतः। मास उष्य उषित्वा । वसेः क्त्वो' ल्यप् । उष्येति च्छान्दसमित्यवोचाम। महत्या सेनया विनीतैः विनयवाद्भि· परिचारकै· सेवकैश्च सार्धं सह प्रययौ । कीदृशः स इत्याह भ्राजमान इति । आदित्यः सूर्य इव वपुषा शरीरेण भ्राजमानो दीप्यमानः ।

( ३१ ) प्रस्थाप्येति ' वित्तमन्त द्रव्ययुक्तम् । वित्तशब्दात् ' तदस्त्यस्यास्मिन्निति मतुप् ' इति मतुप् । यवादेराकृतिगणत्वान्न वः । वित्तवन्तमिति पाठस्तु साधुतरः । अनामय नास्त्यामयो यस्य तथाभूतम् । प्रस्थाप्य प्रयात कृत्वा । अत्यर्थं अत्यन्त उपशोभिता नृपागमनमहोत्सवेनालङ्कृता पुरीं प्रविवेश । एतेन नगराद्बहिरेव तावन्त कालमवस्थान द्योत्यते ।

'( ३२ )प्रविश्येति । पौरांश्च जानपदानपि इति चकारेण द्योत्यते । पौराः पुरवासिनो जानपदाश्च जनपदवासिनो लोकाः । सान्त्वयामास आत्मनो वियोगेन खिन्नान् मधुरया वाचा व्यपगतखेदांश्चकार । इतः परमर्धमाधिकं स्पष्टार्थं क पुस्तके। नैतदत्रावश्यकमिति प्रतिभाति । पौरा इति। सम्प्रहृष्टतनूरुहाः सम्प्रहृष्टानि विकसितानि उद्गम्यावस्थितानीत्यर्थः तनूरुहाणि रोमाणि येषा, तथाभूताः । आनन्दातिशयवशाज्जातरोमाञ्चा इति भावः । रोम्णा हि संयुज्यमानो हृष्यतिस्तेषामुद्गमनमाभिधत्ते यत्र किल रोमहर्ष इति भाषाविदा व्यपदेशः । ' रोमहर्षश्च जायते ' इति गीता । अभवन्निति शेषः ।

( ३३ ) ऊचुरिति । सामात्यप्रमुखाः अमात्याश्च प्रमुखा नागरिकेषु प्रधानपुरुषाश्च तैः सहवर्तमानाः । प्राञ्जलयः सन्त ऊचुः । वचनमाह अत्रेति । उपाभिषेचितुं पुनः शतक्रतु इन्द्रम् । तस्य हि शत क्रतव इति

१ विर न । (त) २ अ. र. पर ' हितेषु चैषा मनतं पितृवाचहितोऽभवत् ॥ ' ' इत्यर्धमधिकं क पुस्तके ।

अद्य स्म निर्वृता राजन्पुरे जनपदेऽपि च ।
उपासितुं पुनः प्राप्ता देवा इव शतक्रतुम् ॥ ३२

इति श्रीमन्महाभारत आरण्यपर्वणि नलोपाख्यानपर्वणि
पुष्कराश्वासेऽष्टसप्ततमोऽध्यायः ।

## ऊनाशीतितमोऽध्यायः ।



बृहदश्व उवाच—

प्रशान्ते तु पुरे हृष्टे संप्रवृत्ते महोत्सवे ।
महत्या सेनया राजा दमयन्तीमुपानयत् ॥१
दमयन्तीमपि पिता सत्कृत्य परवीरहा ।
प्रास्थापयदमेयात्मा भीमो भीमपराक्रमः ॥ २
आगतायां तु वैदर्भ्यां सपुत्रायां नलो नृपः ।
वर्तयामास मुदितो देवराडिव नन्दने ॥३
ततः प्रकाशतां यातो जम्बूद्वीपे रराज सः ।

प्राप्ता देवा इव अद्य पुरे जनपदे राष्ट्र इत्यर्थः । वर्तमाना वयमिति शेषः। निर्वृताः सुखिनः संवृत्ता । भवतः पुनर्लाभादिति भावः । स्मेति पादपूरणे ।
इति श्रीनलोपाख्यानव्याख्यायां बालबोधिन्यामष्टसप्ततोऽध्यायः।

( १ ) प्रशान्त इति । हृष्टे निजनृपतिलाभेन हर्षं प्राप्ते तत एव च प्रशान्ते निरस्तस्तद्वियोगतापे सति । राजा नलः । उपानयत् पितृकुलादानयत् । अतः परं श्लोकद्वयमधिकं कपुस्तके नावश्यकमिति न व्याख्यायते ।

( २ ) दमयन्तीमिति । अमेयात्मा अमेयः परमार्थतो विज्ञातुमशक्य आत्मा मनो यस्य तथाभूतः । गूढेङ्गित इत्यर्थः । अमेयात्मा महामना इति वा । पिता दमयन्त्या इत्यर्थात् । भीमो राजा ।

( ३ ) आगतायामिति । सपुत्रायां पुत्रेण पुत्र्या च सह वर्तमानायां वैदर्भ्यां दमयन्त्यां आगतायां सत्यां मुदितो हृष्टः नृपो नलः देवराट् देवानां राजा इन्द्रः नन्दने एतत्संज्ञके वन इव वर्तयामास ववृते । वृतेर्निवृत्तप्रेषणाण्णिचि लिट् । भाषार्थस्य वा चौरादिकस्य वृतेर्धातूनामनेकार्थत्वाद्वर्तने वृत्तिः।

( ४ ) तत इति । प्रकाशतां यातः सर्वजनविदितत्वं प्राप्तः । अज्ञातं हि वासं वसन्नेष नासीत्प्रकाशतामनुप्राप्त इतीदं वचनम् । स जम्बूद्वीपे जम्बूपलक्षितो द्वीपो जम्बूद्वीपः संप्रति आशियाअमेरिकायूरपइतिख्यातदेशत्रितयरूपः । तस्मिन् । अत्र हि पुरा महान् जम्बूवृक्ष आसीदित्युपवर्णित

१ अतः 'परं पुण्यश्लोकं तु राज्यस्थं श्रुत्वा भीमो महीपतिः । मुदा परमया युक्तो बभूव भरतर्षभ ॥ अथ हृष्टमना राजा महत्या सेनया सह । सुतां प्रस्थापयामास पुण्यश्लोकाय धीमते ॥' इत्यधिकं कपुस्तके । २ स राजसु । नः स्वे, चावसद्राज्ये ( ख. च ) 'स राजसु' इत्येतावत्नमपुस्तकयोरपि ।

पुनः शशास तद्राज्यं प्रत्याहृत्य महायशाः ॥
ईजे च विविधैर्यज्ञैर्विधिवच्चाप्तदक्षिणैः ।
तथा त्वमपि राजेन्द्र ससुहृद्वक्ष्यसे चिरात् ॥ ५
दुःखमेतादृशं प्राप्तो नलः परपुरंजयः ।
देवनेन नरश्रेष्ठ सभार्यो भरतर्षभ ॥ ६
एकाकिनैव सुमहन्नलेन पृथिवीपते ।
दुःखमासादितं घोरं प्राप्तश्चाभ्युदयः पुनः ॥ ७
त्वं पुनर्भ्रातृसहितः कृष्णया चैव पाण्डव ।

---

पुराणेषु । तद्योगादेव चेयमाख्यैतस्य । यथा चोक्तस्य देशत्रितयस्य जम्बूद्वीपत्वं तथा प्रतिपादितं 'प्राचां भूगोलविज्ञाने'ऽस्माभिः । विस्तरभिया तु नात्र प्रपञ्च्यते । सामान्यस्तु निरक्षप्रदेशात उदीचीन भूमेरर्धं जम्बूद्वीप इति प्राचां *सिद्धान्त इत्यवबोध्यम् । प्रत्याहृत्य रिपोः सकाशात्प्रतिगृह्य । आदरातिशुं*-ज्ज्वलमूलकत्वं प्रत्यादानस्य द्योतयति ।

( ५ ) ईज इति । आप्तदक्षिणैः आप्ता पर्याप्ता प्रचुरेति यावत् दाक्षिणा येषु तथाभूतैः । यज्ञैः करणभूतैः ईजे देवान्पूजयामासेत्यर्थः । देवपूजार्थाद्यजतेर्लिट् । तथा नलवत् हे राजेन्द्र ससुहृत् समित्रः सह स्वसपक्षैरित्यर्थः अचिरादविलम्बितमेव वक्ष्यसे स्वीय राज्य प्राप्स्यसि । वह प्रापण इत्यतो लृट् । स्वरितेत्त्वादात्मनेपदम् । वक्ष्यसे दीव्यसे । वश कान्तावित्येतस्य रूपमिति महाभारतस्य व्याख्याता नीलकण्ठः । वश कान्तावित्यत्र पुनः *कान्तिशब्दो न द्युत्यर्थः । इच्छार्थो ह्यसौ कमेर्धातोः स्त्रियां क्तिनि निष्पन्नः* अत एव च प्रयुञ्जते वैय्याकरणाः 'वष्टि भागुरिरल्लोप'मित्यादि । अन्येपि 'निःस्वो वष्टि शतम्' इत्यादि । वस्तुतः पुनरत्र 'वक्ष्यस' इति चिरकालिकोपि कतिपयपुस्तकसंदृष्टोऽपि च पाठो लेखकप्रमादमूलक एव । 'यक्ष्यसे' इत्येतेनैव त्वत्र भवितव्यम् । दृष्टान्तवाक्ये हि ( पूर्वार्धे ) 'ईज' इति यजिरेव प्रयुक्त इति । ततश्च तथा नलवत् शत्रुंजयपुरःसरमितिभावः यक्ष्यसे यज्ञैर्देवान्पूजयिष्यसि' इत्यर्थः । चपुस्तके तु सुहृदो द्रक्ष्यस इति पाठः संदृश्यते । तत्र आर्षमात्मनेपदम् ।

( ६ ) इत्थं नलोपाख्यानमाख्याय नलापेक्षयाऽल्पमेव ते व्यसनमिति माऽत्र शोकं कार्षीरिति युधिष्ठिर वक्तुमुपक्रमते । दुःखमिति । एतादृश पूर्वोक्तप्रकारम् । देवनेन द्यूतेन हेतुभूतेन । हेतौ तृतीया ।

( ७ ) नलदुःखतो युधिष्ठिरदुःखस्य वैषम्यमाह त्रिभिः एकाकिनैवेति। एकाकिनैव असहायेनैव । 'एकादाकिनिचासहाय' इत्याकिनिच् । दमयन्त्यास्तु परित्यक्तत्वाच्च दुःखपरिहारे साहाय्याभावाच्चैकाकिनेत्युक्तिः । घोर भयङ्करं दुःखमासादितं प्राप्तम् । अभ्युदय उत्कर्षः । 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इति वैशेषिकसूत्रम् ।

( ८ ) तत्र पुनरेतद्विपरीतमेवेत्याह त्वमिति । पुनः किन्तु त्व भ्रातृस-

रमसेऽस्मिन्महारण्ये धर्ममेवानुचिन्तयन् ॥ ८
ब्राह्मणैश्च महाभागैर्वेदवेदाङ्गपारगैः ।
नित्यमन्वास्यसे राजंस्तत्र का परिदेवना ॥ ९
कर्कोटकस्य नागस्य दमयन्त्या नलस्य च ।
ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम् ॥ १०
इतिहासमिमं चापि कलिनाशनमच्युत ।
शक्यमाश्वासितुं श्रुत्वा त्वद्विधेन विशांपते ॥ ११
अस्थिरत्वं च संचिन्त्य पुरुषार्थस्य नित्यदा।

हितो चक्षुभिर्युक्तः । कृष्णया द्रौपद्या चैव सहित इत्येकदेश सबध्यते । धर्ममेव अनुचिन्तयन् सातत्येन विभावयन् सन् अस्मिन्महारण्ये रमसे क्रीडसीवेत्यर्थ । रमुक्रीडायामित्यतो लट् । नात्र ते दु खलेशोऽपीति भाव । रमसे नन्दसीति वा । एवमपि हि प्रयुज्यते रमिरिति ।

( ९ ) ब्राह्मणैरिति । महाभागैर्महात्माभि । नित्य अन्वास्यसे उपास्यसे। अनुपूर्वो ह्यास्तिरुपासने । 'अन्वासन स्नेहबस्तावुपास्तावनुशोचन ' इति मेदिनी । ' अन्वासितमरुन्धत्या ' इति कालिदास । तत्र तस्यामवस्थाया अस्यामवस्थायामिति यावत् । परिदेवना परिदेवने हेतु शोकजनकमित्यर्थ का किं न किमपीत्यर्थ । परिदेवनेति परिपूर्वाद्देवलेर्विलापार्थाण्णिचि 'ण्यासश्रन्थो युच्' इति युच स्त्रियाम् । तत एव च किमोऽत्र स्त्रिया प्रयोग । परिदेवयति विलापयतीति परिदेवना विलापहेतुरित्यर्थ ।

( १० ) कर्कोटकस्येति । राजर्षे ऋतुपर्णस्य । सबुद्धचतपाठे तु हे राजर्षे युधिष्ठिर [1] कीर्तन नामोच्चारणम् । यद्वाऽत्रर्तुपर्णादयस्तत्तद्वृत्तान्ते लाक्षणिका । ततस्तद्वृत्तान्तकीर्तनमित्यर्थ । कलिनाशन कलेर्नाशयितृ अस्तीति शेष ।

( ११ ) इतिहासमिति । इतिहास पुरावृत्त ( प्राचीनमाख्यानम् ) यस्मिन्किलाख्यायमान इतिहपद प्रयुज्यते स्म प्राचीनै । तत एव च इतिह ( पदं ) आस्तेऽस्मिन् इतिहास ' इति घञन्तमेनमाचक्षते । प्रायिक चैत दिति पुरावृत्तमात्रे रूढ इतिहासशब्द । अच्युत नास्ति च्युत धर्मादिभ्य परिभ्रंशो यस्य तथाभूत युधिष्ठिर । त्वद्विधेन त्वत्सदृशेन आश्वासितु धैर्यमालम्बितु शक्यम् ।

(१२ ) अस्थिरत्वमिति । पुरुषार्थस्य पुरुषेच्छाविषयीभूतस्य वस्तुन । इच्छावाची स्वल्पर्थशब्दस्तद्विषये लाक्षणिक काममनोरथादिवत् । अस्थिरत्व एकरूपतयावस्थानस्याभाव संचिन्त्य विचार्य । तस्य अभिलषितस्य वस्तुनो राज्यादे उदये प्रादुर्भावे व्यये विनाशेऽपि वा सति चिन्तयितु चिन्ता कर्तु नार्हसि । न हि चिन्तया शक्यते भावाना स्वभाव परिवर्तयितुमिति ,

1 वससऽस्मि महारण्य (च) कथाश्चापि समाकर्ण्य (क)

तस्योदये व्यये चापि न चिन्तयितुमर्हसि ॥ १२
श्रुत्वेतिहासं नृपते समाश्वसिहि मा शुचः ।
व्यसने त्वं महाराज न विषीदितुमर्हसि ॥ १३
विषमावस्थिते दैवे पौरुषेऽफलतां गते ।
विषादयन्ति नात्मानं सत्त्वापाश्रयिणो नराः ॥ १४
ये चेदं कथयिष्यन्ति नलस्य चरितं महत् ।
श्रोष्यन्ति चाप्यभीक्ष्णं वै नालक्ष्मीस्तान्भजिष्यति ॥ १५
अर्थास्तस्योपपत्स्यन्ते धन्यतां च गमिष्यति ।
इतिहासमिमं श्रुत्वा पुराणं शश्वदुत्तमम् ॥ १६
पुत्रान्पौत्रान्पशूंश्चापि लभते नृषु चाग्र्यताम् ।
सारोग्यः प्रीतिमांश्चैव भविष्यति न संशयः ॥ १७
भयं पश्यसि यच्च त्वमाह्वयिष्यति मां पुनः ।

---

निष्फलैवात्र चिन्तेति भावः । चतुर्भुजस्तु पुरुषार्थशब्द द्वितीयपुरुषार्थवाचिन मन्वानः 'पुरुषार्थस्यार्थस्ये ' ति व्याचष्टे ।

( १३ ) श्रुत्वेति । इतिहास नलोपाख्यानरूप श्रुत्वा समाश्वसिहि धैर्यमालम्बस्व । मा शुचः । शोक मा कार्षीः । शोचतेर्लुङि इरित्वादङ् वा । न माङ्योग इत्यटो निषेध' । विषीदितु विषत्तुमित्यर्थः । आर्षः सदेः सीदादेशश्छेट च ।

( १४ ) दैव इति । दैवे विषमावस्थिते विषम प्रतिकूल अ वास्थितमवस्थान यस्य तथाभूते सति । पौरुषे उद्यमे । स हि पुरुषस्येति । अफलतां फलशून्यता गते सति । सत्त्वापाश्रयिणः सत्त्वं धैर्यमेवापाश्रय आलम्बन अस्त्येषा तथाभूता नराः आत्मान न विषादयन्ति न खेदयन्ति ।

( १५ ) नलचरितस्य श्रवणे पठने च फलमाह त्रिभिः । य इति । अभीक्ष्ण पुनः पुनः । ' मुहुः पुनः पुनः शश्वदभीक्ष्ण ' मित्यमरः । अलक्ष्मीः लक्ष्मीविरोधि दारिद्र्यम् । विरोधे नञ् । भजिष्यति सेविष्यत उपसर्पिष्यतीत्यर्थः ।

( १६ ) अर्था इति । तस्य नलचरितस्य कथयितुः श्रोतुश्च अर्था मनोरथाः उपपत्स्यन्ते सपत्स्यन्ते सकला भविष्यन्तीत्यर्थः धन्यता पुण्यवत्तां गमिष्यति । स इति विभक्ति विपरिणमय्य योजनीयम् । 'सुकृती पुण्यवान्धन्य ' इत्यमरः । इतिहासमित्यर्धमुत्तरान्वयि । पुराण प्राचीन इतिहास शश्वन्निरन्तरमसकृद्वा ।

( १७ ) पुत्रानिति । नृषु मनुष्येषु अग्र्यतां श्रेष्ठत्वं च लभते । सारोग्य आरोग्येण सहितः । प्रीतिमान् हर्षयुक्तः । 'मुत्प्रीतिः प्रमदो हर्ष' इत्यमरः ।

( १८ ) इत्थ फलमभिधाय माहात्म्याधान प्रतिजानीते । भयमिति । यदिति यदीत्यर्थेऽव्ययम् । न किंच त्व यत् यदि भय भीतिहेतु अभ्रमसङ्ग-

---

१ आरोग्यप्रीतिमांश्चैव ( क. म. ) अरोग. प्रीतिमांश्चैव ( न. च. )

अक्षज्ञ इति तत्तेऽहं नाशयिष्यामि पार्थिव ॥ १८

वेदाक्षहृदयं कृत्स्नमहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥ १९

वैशंपायन उवाच—

ततो हृष्टमना राजा बृहदश्वमुवाच ह ।
भगवन्नक्षहृदयं ज्ञातुमिच्छामि तत्त्वतः ॥ २०

ततोऽक्षहृदयं प्रादात्पाण्डवाय महात्मने[२] ।

---

मित्यर्थः । पश्यसि द्रक्ष्यसीत्यर्थः । तदेति शेषः । मां आह्वयिष्यसि आह्वयेत्यर्थः । प्रयुज्यते हि लोडर्थे लृडपि काचित्काविभिः । यथा 'आस्व तावन्मुहूर्तं ततो गमिष्यसि ।' इति । किमाह्वानेनेति चेत्तत्राह । अहं अक्षज्ञः द्यूताभिज्ञः इति हेतोः ते तव तत् भयं नाशयिष्यामि ।

( १९ ) वेदेति । अहं कृत्स्नं अशेषं अक्षहृदयं द्यूतरहस्यं वेद जानामि । उपपद्यस्व तेनाक्षहृदयेन उपपन्नो ( युक्तः ) भव । प्रसन्नः संतुष्टोऽहं ते ब्रवीमि उपदिशामीत्यर्थः ।

(२०) तत इति। तत्त्वतः परमार्थतः। अक्षहृद्यस्य पारमार्थिक स्वरूपमित्यर्थः। अतःपरमर्धमेकमाधिक कपुस्तक आवश्यकामिति प्रतिभाति। स्पष्टार्थं त्वेतत्।

( २१ ) तत इति । प्रादात् बृहदश्व इति शेषः । दत्त्वा च उपस्प्रष्टुं स्नातुम् । 'उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि' इति मेदिनी । अश्वशिरः एतदाख्यं तीर्थम् । अश्वहृदयामिति यन्नीलकण्ठस्तु दत्त्वापदेन प्रतारितः । 'उक्त्वा चाशु सरोऽगच्छदि' ति तु कपुस्तकमात्रसन्दृष्टः सुसंस्कृतः पाठः । एवंविधाः पुनः पाठा अर्धमुग्धाना लेखकानामेव स्वरूपमुपस्था-

---

१ अतः पर 'कौन्तेयेनैवमुक्तस्तु बृहदश्वो महामुनिः।' इत्यर्धमधिक कपुस्तके। २ अतः पर 'लब्ध्वा च पाण्डवो राजा विशोकः समपद्यत । बृहदश्व उवाच—पुनरेव तु वक्ष्यामि यस्त्वत्तो दुःखितो नृपः । तं शृणुष्व महाराज सर्वदुःखापनुत्तये ॥ इक्ष्वाकूणां कुले जातो महात्मा पृथिवीपतिः । त्रिशङ्कुरिति विख्यातो राजराजो महाद्युतिः ॥ हरिश्चन्द्रस्ततो जज्ञे गुणरत्नाकरो नृपान् । ततो विशेषैर्विविधैर्यज्ञैर्विपुलदक्षिणैः ॥ स तु लोके वरः पुंसां पुण्यश्लोको महायशाः । सत्यवादी मधुरवाक्सत्येन बहुभाषिता ॥ तस्य भार्याऽभवद्भूमौ सौशील्यसमलङ्कृता । उशीनरस्य राजर्षेर्दुहिता पुण्यलक्षणा ॥ स्वयंवरे महाभागं वरयामास भामिनी । हरिश्चन्द्र समेताना राज्ञां मध्ये पतिं विभुम् ॥ तया सह महीपालः सत्यवत्या मनोज्ञया । रेमे च सुचिरं कालं राजा राज्यमवाप्य च ॥ तस्यां देव्यां हरिश्चन्द्राज्जज्ञे राजीवलोचनः । पुत्रः पुण्यवतां श्रेष्ठो लोहिताश्व इति श्रुतः ॥ देव्या पुत्रेण सहितः पुण्यश्लोको महायशाः । वसिष्ठयाज्यो नृपतिरीजे पुण्यैर्महाध्वरैः । एतस्मिन्नेव काले तु विश्वामित्रो दिवं गतः । पुरुहूतपुरीं रम्यामाजगामेन्द्रसेवया ॥ उपस्थाने च

( उत्तरपृष्ठे द्रष्टव्यम् )

सूते दुरात्मभिः क्लिष्टाः कृष्णया तारिता वयम् ।
जयद्रथेन च पुनर्वनाच्चापि हृता बलात् ॥ २
अस्ति सीमन्तिनी काचिद्दृष्टपूर्वाऽपि[1] वा श्रुता ।
पतिव्रता महाभागा यथेयं द्रुपदात्मजा ॥ ३

मार्कण्डेय उवाच—

शृणु राजन्कुलस्त्रीणां महाभाग्यं युधिष्ठिर ।
सर्वमेतद्यथाप्राप्तं सावित्र्या राजकन्यया ॥ ४
आसीन्मद्रेषु धर्मात्मा राजा परमधार्मिकः ।
ब्रह्मण्यश्च महात्मा च सत्यसन्धो जितेन्द्रियः ॥ ५

(२) सूत इति । दुरात्मभिः दुष्टचित्तैः कौरवैः क्लिष्टाः क्लेशिताः । क्लिश्यतिरत्रान्तर्भावितण्यर्थः । तारिताः क्लेशस्य पारं गमिताः । द्रौपद्यैव हि दुःशासनेनाभिघृष्यमाणयाऽऽहूय श्रीकृष्ण परित्रात आत्मेति तस्याः सान्निध्यादेव क्लेशानामिसरणादिति भावः । जयद्रथेनेति जयन्परान्पराभवन् रथो यस्य तथाभूत एतन्नामा नृपविशेषः तेन । एष च सिन्धूनामधिपतिर्दुर्योधनभगिन्या दुःशलाया भर्ता । सोऽयं कदाचिद्विवाहकामुकः शिबित्रिगर्तादिदेशाधिपतिभिः सह शाल्वान् गच्छन् मध्येमार्गे भगवतो मुनेस्तृणबिन्दोराश्रमे कदम्बशाखामालम्ब्य सविलासमवतिष्ठमानां लोकातिशायिलावण्यां काञ्चन स्त्रियमवैक्षिष्ट । विशामता तावत्केयमिति च कामाकुलः शिबिदेशाधिपतिं कोटिकाश्यमाज्ञापयामास । तेन च विज्ञाय पाण्डवानामियं भार्येति निवेद्यमानोऽपि स्वयमेवैनामुपगम्याभिप्रार्थ्य चाननुमन्यमानां बलादेवापजहार । अथ क्षणादेव मृगयातः प्रतिनिवृत्ताः पाण्डवा विज्ञाय वृत्तमिदं समभिपत्य हत्वा च भूयसो भूपान्पराजित्य गृहीत्वा च जयद्रथं द्रौपदीं प्रत्याजह्रुरिति द्रौपदीहरणपर्वकथाऽत्रानुसन्धेया ।

(३) अस्तीति । यथा यादृशी इयं द्रुपदात्मजा तथेति शेषः काचित् कापि सीमन्तिनी स्त्री । प्रशस्तः सीमन्तः केशवर्त्म 'भाग'इति पुंसि महाराष्ट्रया ख्यातः अस्त्यस्यास्तथाभूता सुन्दरीत्यर्थः । 'केशेषु वर्त्म सीमन्तः' इति हैमः । 'नारी सीमन्तिनी वधूः' इत्यमरः । स्त्रीविशेषवचनोऽपि शब्दोऽयमत्र स्त्रीसामान्यवाचितया प्रयुक्तः । अस्तीति प्रश्ने काकुः ।

(४) अस्तीत्युत्तरणीये शिरोवेष्टनप्राणायाममभीरुः सावित्र्युपाख्यानमेवोत्तरत्वेनोपन्यस्यति । शृण्विति । एतत्प्रसिद्धतमतयाऽङ्गुलिनिर्देशार्हमिव भासमानम् कुलस्त्रीणां तत्कुलजानां स्त्रीणाम् । कुलशब्दोऽत्र सत्कुलवाची शाकपार्थिवादित्वाच्च समासः । यथा येन प्रकारेण प्राप्तं तं प्रकारं शृण्वित्यर्थः ।

(५) आसीदिति । मद्रेषु मद्रदेशे । एष च देशः पाश्चिमेन पञ्चाम्बुनाशीत् । सम्प्रति पुनर्मद्रासइत्याख्यायमानो भिन्न एतस्माद्देशः । सत्यसन्धः सत्यप्रतिज्ञः । 'सन्धा प्रतिज्ञा मर्यादे' त्यमरः ।

1 अथवा ( च ) २वरस्त्रीणां ( च )

यज्वा दानपतिर्दक्षः पौरजानपदप्रियः ।
पार्थिवोऽश्वपतिर्नाम सर्वभूतहिते रतः ॥ ६
क्षमावाननपत्यश्च सत्यवाग्विजितेन्द्रियः ।
अतिक्रान्तेन वयसा संतापमुपजग्मिवान् ॥ ७
अपत्योत्पादनार्थं च तीव्रं नियममास्थितः ।
काले नियमिताहारो ब्रह्मचारी जितेन्द्रियः ८
हुत्वा शतसहस्रं स सावित्र्या राजसत्तम ।[१]
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥ ९

---

( ६ ) यज्वेति । यजते स्मेति यज्वा कृतयज्ञः । 'सुयजोर्ङ्वनिप् ।' इति ङ्वनिप् । दानपतिः दानक्रियाया अधीश्वरः । भूयिष्ठ प्रदातेत्यर्थः । अश्वपतिः एतन्नामा पार्थिवः पृथिव्या ईश्वरो राजा ।

( ७ ) क्षमावानिति । क्षमावान् सहिष्णुताशाली सत्यवाक् जितेन्द्रियश्च सः अनपत्यः सन् अतिक्रान्तेन वयसा तारुण्येन हेतुभूतेन सताप अनपत्यताजन्य उपजग्मिवान् प्राप्तवान् । तारुण्यस्य व्यपगमादनपत्यतया ताप प्रापदित्यर्थः । वयःशब्दोऽत्र तारुण्यवाची । 'वयसि गते क कामविकारः ॥' इति श्रीशङ्कराचार्याः ।

( ८–९ ) अपत्योत्पादनार्थमिति । नियम व्रत आस्थित. समाश्रितवान् सन् काले नियतसमये नियमिताहार नियमितो निगृहीत आहारो येन तथाभूतः । आहारमवह्रासयन्निति यावत् । परिमिताहार[२] इति पाठान्तरन्तु नातिमनोरमम् । आहारकालश्च निर्दिष्टो मनुना 'सायंप्रातर्द्विजातीनामशनं श्रुतिचोदितम् । नान्तरा भोजन कुर्याच्चान्द्रायणसमो विधिः ।' इति ब्रह्मचारी ब्रह्मणि ज्ञाने तपसि वाऽवश्य चरति तथाभूत । प्रकृते पुनः शब्दोऽयं ब्रह्मचर्यवन्तमेव लक्षयति तद्धर्मविशिष्टत्वात् । ब्रह्मचर्यं च सर्वथा स्त्रीसङ्गमत्यागः । ( दृश्यता पातञ्जलयोगशास्त्रे यमसूत्रभाष्यम् २–३० ) । राजसत्तम युधिष्ठिर सावित्र्या गायत्रीमन्त्रस्य । शतसहस्र लक्ष हुत्वा प्रतिमन्त्रमेकाऽऽहुतिरिति लक्षाहुतिप्रक्षेपात्मक होम कृत्वेत्यर्थ. । हवनसाधने मन्त्रे हवनकर्मत्वमुपचारात् । स च पादत्रयात्मको विज्ञायते प्रायेणेदानीन्तनैर्ब्राह्मणैः । 'त्रिभ्य एव तु वेदेभ्यः पाद पादमदूदुहत् । तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापति ।' इति मनुः । काले नियमिताहार इति स्वोक्त विशदयति षष्ठ इति । षष्ठे षष्ठे काले सूर्योदयतः प्रभृति षष्ठे षष्ठे मुहूर्ते । मुहूर्तश्च घटिकाद्वितयम् । षष्ठे काले त्वमपि लभसे देव विश्रान्ति मह्नः ।' इति कालिदासः । एव च न मनूक्तवद् द्विः किन्तु सकृदेव भुक्तवानिति भाव. ।

---

१ इतोऽर्धद्वयं नास्ति पुस्तके २ परिमिता (क. न. म. च)

पुत्रा मे बह्वो देवि भवेयुः कुलभाजनाः ॥ १४
तुष्टाऽसि यदि मे देवि वरमेतं वृणोम्यहम् ।
संतानं परमो धर्म इत्याहुर्मां द्विजातयः ॥ १५

सावित्र्युवाच—
पूर्वमेव मया राजन्नभिप्रायमिमं तव ।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः ॥ १६
प्रसादाच्चैव तस्मात्ते स्वयंभुविहिताद्भुवि ।
कन्या तेजस्विनी सौम्य क्षिप्रमेव भविष्यति ॥ १७

---

चाह श्रुतिः 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् भवति । यज्ञेन देवेभ्यो ब्रह्मचर्येणर्षिभ्यः प्रजया पितृभ्य ' इति । ऋणत्रयापाकरणमन्तरा मोक्षानधिकारस्मरणाच्च । स्मर्यते हि मनुना ' ऋणत्रयमपाकृत्य मनो मोक्षे निवेशयेत् । ' इति । अपत्यार्थः अपत्यान्यर्थः प्रयोजनं यस्य तथाभूतः । समारम्भः तीव्रनियमाश्रयणरूपः समीचीन उद्यमः कुलभाजनाः कुलस्य मे वंशस्य भाजना आश्रयभूता इति यावत् । आर्षं पुस्त्वम् । कुलस्य कुलीनत्वस्य भाजनभूता वा ।

(१५) तुष्टेति । यदि तर्हीति शेषः । कुतोऽयं वर इत्याह सन्तानमिति । सन्तानं संततिः अपत्यं तदुत्पत्तिरित्यर्थः । परमः उत्कृष्टः धर्मः । धर्मसाधनत्वात्तस्येति भावः । हेतुहेतुमतोरभेदोपचारः ।

( १६ ) पूर्वमिति । अभिप्रायं आशयं ज्ञात्वा । ज्ञानदृष्ट्येति भावः । भगवान् भगानि ऐश्वर्यादीनि षट् सन्त्यस्य तथाभूतः । ' ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भगमितीङ्गना ' इति । 'ऐश्वर्यमव्ययमनुपाधिमती च लक्ष्मीर्ज्ञानं च वीर्ययशसी च विरागता च। एते गुणाः षडपि ते भगशब्दयोक्ताः सन्तीत्यनेन भगवन् भगवानसि त्वम् ॥ ' इति श्रुतिसूक्तिमालायां श्रीहरदत्ताचार्यः । पूज्यो वा ' नैघण्टुकाश्च भगवन्तमुशन्ति पूज्यम् । ' इत्यपि स एव । पितामहो ब्रह्मा । स हि पितॄणां जनकानामपि पिता जनक इति । 'परमेष्ठी पितामह' इति ब्रह्मपर्यायेष्वमरः। ते तव पुत्रार्थं उक्तः ।

( १७ ) प्रसादादिति । तस्मात् यस्मान्मयोक्त तस्माद्धेतोः । स्वयंभुविहितात् स्वयंभुना ब्रह्मणा कृतात् । 'स्वयम्भूश्च स्वयंभुश्च' इति द्विरूपकोशे श्रीहर्षः ( ८८ प. ) । शब्दश्चायं भुर औणादिके डुप्रत्यये निष्पन्नः । स्वयंभूविहितादिति कपुस्तकपाठस्तु सुसंस्कृत एव । प्रसादात् अनुग्रहात् । भुवि भूलोके तेजस्विनी प्रशस्ततेजोविशिष्टा।प्राशस्त्ये 'अस्मायो' त्यादिना विनिर्मत्वर्थे।

---

१ भावनाः ( व. च. न. म ) २ संतानं हि परो ( च ) ३ स्वयंविहितवरदम् ( न )

उत्तरं च न ते किंचिद्व्याहर्तव्यं कथंचन ।
पितामहनिसर्गेण तुष्टा ह्येतद्ब्रवीमि ते ॥ १८

मार्कण्डेय उवाच—

स तथेति प्रतिज्ञाय सावित्र्या वचनं नृपः ।
प्रसादयामास पुनः क्षिप्रमेतद्भविष्यति ॥
अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः । १९
स्वराज्ये चावसद्वीरः प्रजा धर्मेण पालयन् ॥
कस्मिंश्चित्तु गते काले स राजा नियतव्रतः ॥ २०
ज्येष्ठायां धर्मचारिण्यां महिष्यां गर्भमादधे ।
राजपुत्र्यास्तु गर्भः स मालव्या भरतर्षभ ॥ २१

---

( १८ ) उत्तरमिति । उत्तर इतः पर ते त्वया किंचित् ' किं वा कन्यया ? पुन एव मे भूयादि' त्यादि । किमपि न व्याहर्तव्य न वक्तव्यम् । व्याङ्पूर्वो हि हरतिर्वचनार्थः । कुत एवमित्याह पितामहेति । पितामहस्य ब्रह्मणो निसर्गेण दानेन हेतुभूतेन । पितामहेनैव दत्तमेतादिति नात्र किमपि वक्तव्यमिति भावः । निसर्गशब्दश्चात्र दानार्थः । उत्सर्गादिषु सृजतेस्तथार्थदर्शनात् । उपसर्गास्तु द्योतका एवेति । ' निसर्गेण आज्ञये ' ति चतुर्भुजः नीलकण्ठोऽप्येवम् ।

( १९ ) स इति । प्रतिज्ञाय । अङ्गीकृत्य । एतत् कन्याप्राप्तिकार्यं क्षिप्र भविष्यति भवत्वित्यर्थः । इति प्रसादयामास अनुग्रह प्रार्थयामासेत्यर्थः प्रातिपदिकाद्धात्वर्थ इति णिच् । अन्तर्हिताया अदर्शन गताया सत्याम् ।

( २० ) स्वराज्य इति धर्मेण न्यायेन । ' धर्माः पुण्ययमन्याये ' त्यमरः । कस्मिंश्चित् । कियतिचिदित्यर्थः । दृश्यते हि किमः केवलस्यापि परिमाणार्थकता ' कः कालस्तत्र गतस्ये ' त्यादौ । नियतव्रतः नियतमेकरूपमनन्यथाभूतमित्यर्थः व्रत यस्य तथाभूतः । इतः पर त्रिंश पद्य यावत्पूर्वपूर्वपद्योत्तरार्धमुत्तरोत्तरपद्यपूर्वार्धान्वयि ।

( २१ ) ज्येष्ठायामिति । धर्मचारिण्या धर्मचरणशीलाया ज्येष्ठाया महिष्या राज्ञ्याम् । पट्टाभिषिक्तनृपपत्नीवचनोऽपि महिषीशब्दोऽत्र राजपत्नीसामान्यवचनो विशिष्टवाचकानामिति न्यायात् । मालव्या मालवदेशोद्भवाया राजपुत्र्याः । मालवीति देशतः प्रवृत्त राज्ञ्या नाम । मालवाश्च सम्प्रति ' माळवा ' इति महाराष्ट्रेषु ख्याता । ' अवन्तीतः पूर्वभागे गोदावर्यास्तथोत्तरे । मालवाख्यो महादेशो धनधान्यपरायणः । ' इति शक्तिसंगमतन्त्रम् ।

(२२) व्यवर्धतेति । यथा शुक्ले (पक्षे) अम्बरे आकाशे तारापतिश्चन्द्रः तथेति

---

१ नियोगेन ( क ) २ नास्तीद कपुस्तके ३ मानव्या ( क न. म. ) राजपुत्र्यां तु गर्भं स मालव्यां ( च )

व्यवर्धत यथा शुक्ले तारापतिरिवाम्बरे ।
प्राप्ते काले तु सुषुवे कन्यां राजीवलोचनाम् ॥ २२
क्रियाश्च तस्या मुदितश्चक्रे च नृपसत्तमः ।
सावित्र्या प्रीतया दत्ता सावित्र्या हुतया ह्यपि ॥ २
सावित्रीत्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ।
सा विग्रहवतीव श्रीर्व्यवर्धत नृपात्मजा ॥ २४
कालेन चापि सा कन्या यौवनस्था बभूव ह ।
तां सुमध्यां पृथुश्रोणीं प्रतिमां काञ्चनीमिव ॥ २५
प्राप्तेयं देवकन्येति दृष्ट्वा सम्मेनिरे जनाः ।
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ॥ २६
न कश्चिद्वरयामास तेजसा प्रतिवारितः ।

---

शेषः । इवशब्दस्याधिक्यमार्षत्वात् सोढव्यम् । काले प्रसूतिसमये प्राप्ते सति राजीवलोचनां राजीवे कमले इव मनोहरे लोचने नेत्रे यस्यास्तथाभूताम् । ' परं शतसहस्राभ्यां पत्र, राजीवपुष्करे ' इति कमलपर्यायेषु हैमः । सुषुवे प्रसूतवती । षूङ् प्राणिगर्भविमोचन इत्यतो लिट् ।

( २३ ) क्रिया इति । तस्याः कन्यायाः क्रिया जातकर्मादिरूपाः । मुदितो हृष्टः । तस्याश्च सावित्रीतिनाम्न' करणे हेतुमाह सावित्र्येति । अत्र सावित्रीशब्दो देवताविशेषं च गायत्रीं चाचष्टे ।

( २४ ) सावित्रीति । अत इत्यध्याहारः । तथेति चार्थेऽव्ययम् । विप्राः पिता चेत्येते चक्रुरित्यर्थः । विग्रहवती मूर्तिमती । विग्रहो हि शरीरम् । ' शरीर वर्ष्म विग्रहः । ' इत्यमरः । श्रीर्लक्ष्मीः शोभा या । नृपात्मजा राजपुत्री सावित्री ।

( २५ ) कालेनेति । कालेन कियतापि समयेन । यौवनस्था तारुण्ये वर्तमाना । यूनो हि भावो यौवनम् । युवादित्वादण् भावे । पृथुश्रोणीं पृथुः श्रोणी नितम्बो यस्यास्तथाभूताम् । काञ्चनीं सुवर्णमयीं प्रतिमामिव । गौरत्वादिति भावः ।

( २६ ) प्राप्तेति । दृष्ट्वा इयं देवकन्या प्राप्ता इति जना मेनिरे मतवन्तः । एवमति लावण्यवतीमप्येनां न कोऽपि वरयांचकारेत्याह तामिति । तु किन्तु । पद्मपलाशाक्षीं पद्मस्य कमलकुसुमस्य पलाशे पत्रे इव ( मनोहरे विशाले च ) अक्षिणी यस्यास्तथाभूताम् । तेजसा कान्त्यतिशयेन ज्वलन्तीमिव वर्तमानां ताम् ।

( २७ ) नेति । तेजसा । तदीयेन कान्त्यतिशयेन प्रतिवारितो निवारितः सोढुमक्षमत्वात्तस्यास्तेजसः प्रतिनिवृत्त इति भावः । कश्चित्कोपि न वरयामास न वृतवान् भार्यात्वेन न प्रार्थयामासेत्यर्थः । अथ अनन्तरं शिरःस्नाता शिरसा स्नाता सा उपोष्य उपवास कृत्वा । व्रतादिविशेषमन्तरा न

---

१ तदा ( च ) २ प्रतिवारितः ( च )

अथोपोष्य शिरःस्नाता देवतामभिगम्य सा ॥ २७
हुत्वाग्निं विधिवद्विप्रान्वाचयामास पर्वणि ।
ततः सुमनसः शेषाः प्रतिगृह्य महात्मनः ॥ २८
पितुः समीपमगमद्देवी श्रीरिव रूपिणी ।
साऽभिवाद्य पितुः पादौ शेषाः पूर्वं निवेद्य च ॥ २९
कृताञ्जलिर्वरारोहा नृपतेः पार्श्वमास्थिता ।
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानां च वरैर्नृपतिर्दुःखितोऽभवत् ॥ ३०
राजोवाच—
पुत्रिप्रदानकालस्ते न च कश्चिद् वृणोति माम् ।

---

किल नार्यः शिरःस्नानं कुर्वन्तीत्यत उक्तं शिरःस्नातेति । देवता अभिगम्य उपगम्य । देवता समुपास्येत्यर्थः ।

( २८ ) हुत्वेति । पर्वणि कालविशेषे । प्रदर्शितानि च पर्वाणि विष्णुपुराणे 'चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा । पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥' इति । हुत्वा हवनेन तर्पयित्वेत्यर्थः । ब्राह्मणान् वाचयामास स्वस्तीतिशेषः । ब्राह्मणान् स्वस्ति वाचयामासेत्यर्थः । मङ्गलकामुकैः किल सपूज्य ब्राह्मणाः प्रार्थ्यन्ते 'मह्यं नमस्कुर्वाणायाशीर्वचनमपेक्षमाणायास्मिन् कर्मणि स्वस्तीति भवन्तो ब्रुवन्तु' इति । ततश्च ब्राह्मणा 'आयुष्मते स्वस्ती' ति निः पठन्तीति सोऽयं विधिः स्वस्तिवाचनमित्युच्यते । ततः स्वस्तिवाचनानन्तरं शेषाः प्रसादभूताः प्रसादतया दत्ता वा सुमनसः पुष्पाणि । 'स्त्रियः सुमनसः पुष्पं' मित्यमरः । 'प्रसादाशिजनिर्माल्यदाने शेषेति कीर्तिता' इति विश्वः । निर्माल्यस्थानीयानां पुष्पाणां पार्थक्येन निर्देशाच्छेषापदस्य प्रसाददत्तत्वेवार्थः । 'तयेति शेषामिव भर्तुराज्ञाम्' इति कालिदासः ( कुमारसम्भवे ) । प्रतिगृह्य ब्राह्मणेभ्यः स्वीकृत्य महात्मन इति पितुरित्यनेनोत्तरेण सबन्धः ।

( २९ ) पितुरिति । रूपिणी मूर्तिमती श्रीरिव । देवी श्रीरिव रूपिणी सौन्दर्यवतीति वार्थः । अगमत् गमेर्लुङ् । लृदित्वादङ् । सा सावित्री अभिवाद्य प्रणम्य पूर्वं प्रथमं शेषाः विप्राणां प्रसादपुष्पाणि निवेद्य पित्रे समर्प्य ।

( ३० ) कृताञ्जलिरिति । वरारोहा सुन्दरी कृताञ्जलिः बद्धाञ्जलिः सती नृपतेः राज्ञोऽश्वपतेः पार्श्वं समीपप्रदेशं आस्थिता आश्रितवती । समीपे स्थितवतीत्यर्थः । तु किन्तु नृपतिः तां देवरूपिणीं देवानां रूपं सौन्दर्यमस्त्यस्या तथाभूतां स्वां सुतां यौवनस्थां वरैः अयाच्यमानां च दृष्ट्वेति सबन्धः ।

( ३१ ) पुत्रीति । हे पुत्रि ते प्रदानकालः विवाहसमयः । अयमिति शेषः अस्ति । 'वैवानस किमनया व्रतमाप्रदानात्' इति कालिदासः । वृणोति प्रार्थयते त्वद्विषय इत्यर्थः । एष किल प्राचां विशेषतश्च क्षत्रियाणा-

स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥ ३१
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरये त्वं यथेप्सितम् ॥ ३२
श्रुतं हि धर्मशास्त्रेषु पठ्यमानं द्विजातिभिः ।
तथा त्वमपि कल्याणि गदतो मे वचः शृणु ॥ ३३
अप्रदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते पितरि पुत्रश्च वाच्यो मातुररक्षिता ॥ ३४
इदं मे वचनं श्रुत्वा भर्तुरन्वेषणे त्वर ।
देवतानां यथा वाच्यो न भवेयं तथा कुरु ॥ ३५
मार्कण्डेय उवाच ।
एवमुक्त्वा दुहितरं तथा वृद्धांश्च मन्त्रिणः ।

माचारो यदमी आत्मनोऽनुरूपा कन्यका पितरमस्या याचन्ते स्मेति । अतः गुणैः आत्मनः सदृश योग्यम् । 'सदृशमेतत्पुरुवशप्रदीपस्य भवतः ' इति शकुन्तला । भर्तार पतिं अन्विच्छ अन्वेषय ।

( ३२ ) प्रार्थित इति । प्रार्थितः अभिलषितः । मम मह्यमित्यर्थः । शेषे षष्ठी । विमृश्य युक्तौ न वायामीति विचार्य प्रदास्यामि ततश्च त्व यथेप्सितं यथेच्छ वरय ।

( ३३ ) ननु भो यदि केनापि न व्रियते ततः किमिति प्रदानायास इति चेत्तत्राह । श्रुतमिति । द्विजातिभिर्ब्राह्मणैः। वर्णत्रयसाधारणोऽपि रूढो ब्राह्मणेषु द्विजातिशब्दः । धर्मशास्त्रेषु स्मृतिग्रन्थेषु ' श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः । ' इति मनुः । पाठ्यमान व्यक्ततयोच्यमानम् । पठ व्यक्तया वाचीत्यतः कर्मणि लटः शानच् । वच इति काकाक्षिगोलकन्यायेन संबध्यते । तथा तत्प्रकार तादृशमित्यर्थः । न तु साक्षात्तदेवेति भावः । एतेन क्वचिद्विपरिवृत्तावपि पदस्य प्रामाण्यमव्याहतमेवेति ध्वन्यते ।

( ३४ ) अप्रदातेति । अप्रदाता समुचिते समये कन्याया विवाहस्याकर्ता पिता वाच्यः वक्तुं अपवदितुं योग्यः । दोषभाजन भवतीत्यर्थः । 'ऋहलोरिति ण्यत् ' ' वचोऽशब्दसंज्ञाया 'मिति कुत्वाभावः । अनुपयन् समुचिते काले भार्यामनुपगच्छन् । वचनमेतादृशं स्मर्यते मनुना ' कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः । मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता । 'इति (१-४)अत्र च प्रथमे तृतीये च पादे मनागिव भेद इत्यत एव प्रागुक्त 'तथे'ति-

( ३५ ) इदमिति । त्वर त्वरां कुरु । ञित्वरा संभ्रम इत्यतो लोट् । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । यथा येन प्रकारेण देवानां वाच्यः अपवादार्हः । काले कन्याया अप्रदानादिति भावः ।

( ३६ ) एवमिति । आनुयात्र अनुयात्रासंबन्धि सैन्यवाहनादिकं व्यादि

१ यथेच्छमि ( च ) २ नास्तीदं कपुस्तके

व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ ३६
साऽभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३७
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३८
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३९
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥ ४०

इति श्रीमन्महाभारते आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सावित्रीस्वयंवरे द्विनवत्यधिकद्विशततमोऽध्यायः ।

## त्रिनवत्यधिकद्विशततमोऽध्यायः ।



मार्कण्डेय उवाच ।

अथ मद्राधिपो राजा नारदेन समागतः ।

देश एतदस्या अनुयात्र भवत्वित्याज्ञापयामास । गम्यतामिति अचोदयत् प्रेरितवांश्च । अनुयात्रा च रक्षणार्थं पश्चाद्गमनम् ।

( ३७ ) सेति । मनस्विनी प्रशस्त मनोऽस्त्यस्याः सा सावित्री अभिवाद्य नमस्कृत्य पितुः वचन आज्ञाय आज्ञात्वेन स्वीकृत्य आविचारितं यथातथा निर्जगाम वरान्वेषणार्थं निर्गतवती ।

( ३८ ) सेति । हैम हेम्नो विकार सुवर्णमयमित्यर्थः । आस्थाय अधिष्ठाय । स्थविरैर्वृद्धैः सचिवैर्वृता परिवृता । राजर्षीणां राजानश्च ते ऋषयश्च तेषां वानप्रस्थाश्रमे वर्तमानाना राज्ञामित्यर्थः । हकारः पादपूरणे ।

( ३९ ) मान्यानामिति । मान्याना सम्मानार्हाणा वृद्धानाम् । अभ्यगच्छत उपगतवती । आर्षमात्मनेपदम् ।

( ४० ) एवमिति । एव यथा वनान्यभ्यगच्छत् तथा । सर्वेषु मध्येमार्गं मासादितेषु निखिलेषु तीर्थेषु ऋषिभिर्जुष्टाम्बुषु नद्यादिस्थानेषु द्विजमुख्यान ब्राह्मणश्रेष्ठेभ्यः । शेषे षष्ठी । धनोत्सर्गं द्रव्यदान कुर्वती । ' अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ' इति तीर्थशब्दार्थेषु मेदिनी ।

इति श्रीसावित्र्युपाख्यानव्याख्यायां बालबोधिन्यां द्विनवत्यधिकद्विशततमोऽध्यायः ।

( १ ) अथेति । अथ सावित्रीप्रयाणोत्तरम् । मद्राधिपो मद्रदेशाधिपती राजा अश्वपतिः । नारदेन मुनिना समागतः सगतः सन् कथायोगेन कथा·

१ अनुयात्रांश्च ( ख. ) २ वरारोहा ( क )

उपविष्टः सभामध्ये कथायोगेन भारत ॥ १
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३

नारद उवाच—

क्व गताऽभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि ॥ ४

अश्वपतिरुवाच—

कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
एतस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ५

मार्कंडेय उवाच—

सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ॥ ६

सावित्र्युवाच—

आसीत्साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।

सम्बन्धेन सभामध्ये उपविष्टः । तेन साकं कथाः कुर्वाण उपविष्ट आसीदित्यर्थः । हे भारत युधिष्ठिर ।

( २ ) तत इति । ततोऽश्वपतेरुपवेशनानन्तरं । सावित्री मन्त्रिभिः सह पितुर्वेश्म गृहं आजगाम ।

( ३ ) नारदेनेति । नारदेन सह आसीनं उपविशन्तं उपविष्टमिति यावत् । आस्तेर्लटः शानचि 'ईदासः' इतीत् । उभयोर्द्वयोः पितुर्नारदस्य च पादाभिवादनं पादयोः प्रणामं चक्रे ।

( ४ ) क्वेति । हे नृप अश्वसेन सुतः कस्मात्प्रदेशात् युवतीं तरुणीं सतीं । यौतेः शन्त्वान् ङीपि रूपमिदम् । तच्च रूढ्या तरुणीमाचष्टे । ' युवती युवतिः समे ' इति द्विरूपकोशे श्रीहर्षः ( १४३ ) । एनां भर्त्रे पत्ये किमर्थं न संप्रयच्छसि न ददासि । दाणो लटि 'पाघ्रे' त्यादिना यच्छादेशः ।

( ५ ) कार्येणेति । अनेन पतिसबन्धिनैव कार्येण हेतुभूतेन प्रेषिता । यः अनया वृतः तमिति शेषः । भर्तारं एतस्याः अस्याः सकाशात् शृणु ।

(६) सेति । विस्तरेण ब्रूहि इति पित्रा संचोदिता सम्यक् प्रेरिता दैवतस्येव तस्य पितुरित्यर्थः वचनं प्रतिगृह्य अङ्गीकृत्य इदं वक्ष्यमाणं अब्रवीत् ।

( ७ ) आसीदिति । द्युमत्सेन इति ख्यातो धर्मात्मा धर्मे आत्मा मनो यस्य तथाभूतो धर्म एवात्मा यस्य तथाभूतो वा क्षत्रियः पृथिवीपतिः राजा आसीत् । अस्तिश्चात्र पृथिवीपतिनैव सबध्यते नैव पुनर्द्युमत्सेनेन ।

१ भद्र ( क ) २ मदस्या. शृणु देवर्षे भर्ता वै योऽनया वृतः ( क ) ३ सदैव तस्य ( क. न. म. ) ४ नासीद कपुस्तके । ५ देशेषु ( च )

व्यादिदेशानुयात्रं च गम्यतां चेत्यचोदयत् ॥ ३६
साऽभिवाद्य पितुः पादौ व्रीडितेव मनस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥ ३७
सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥ ३८
मान्यानां तत्र वृद्धानां कृत्वा पादाभिवादनम् ।
वनानि क्रमशस्तात सर्वाण्येवाभ्यगच्छत ॥ ३९
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥ ४०

इति श्रीमन्महाभारत आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सावित्रीस्वयंवरे द्विनवत्यधिकद्विशततमोऽध्यायः ।

## त्रिनवत्यधिकद्विशततमोऽध्यायः ।

मार्कण्डेय उवाच ।

अथ मद्राधिपो राजा नारदेन समागतः ।

---

देश एतदस्या अनुयात्र भवत्वित्याज्ञापयामास । गम्यतामिति अचोदयत् प्रेरितवांश्च । अनुयात्रा च रक्षणार्थं पश्चाद्गमनम् ।

( ३७ ) सेति । मनस्विनी प्रशस्त मनोऽस्त्यस्याः सा सावित्री अभिवाद्य नमस्कृत्य पितुः वचन आज्ञाय आज्ञात्वेन स्वीकृत्य अविचारित यथातथा निर्जगाम वरान्वेषणार्थं निर्गतवती ।

( ३८ ) सेति । हैम हेम्नो विकार सुवर्णमयमित्यर्थः । आस्थाय अधिष्ठाय । स्थविरैर्वृद्धैः सचिवैर्वृता परिवृता । राजर्षीणा राजानश्च ते ऋषयश्च तेषां वानप्रस्थाश्रमे वर्तमानाना राज्ञामित्यर्थः । हकारः पादपूरणे ।

( ३९ ) मान्यानामिति । मान्याना समानार्हाणा वृद्धानाम् । अभ्यगच्छत उपगतवती । आर्षमात्मनेपदम् ।

( ४० ) एवमिति । एव यथा वनान्यभ्यगच्छत् तथा । सर्वेषु मध्येमार्गं प्राप्तादितेषु निखिलेषु तीर्थेषु ऋषिभिर्जुष्टाम्बुषु नद्यादिस्थानेषु द्विजमुख्यान ब्राह्मणश्रेष्ठेभ्यः । शेषे षष्ठी । धनोत्सर्गं द्रव्यदान कुर्वती । " अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु ' इति तीर्थशब्दार्थेषु मेदिनी ।

इति श्रीसावित्र्युपाख्यानव्याख्यायां बालबोधिन्यां द्विनवत्यधिकद्विशततमोऽध्यायः ।

---

( १ ) अथेति । अथ सावित्रीप्रयाणोत्तरम् । मद्राधिपो मद्रदेशाधिपती राजा अश्वपतिः । नारदेन मुनिना समागतः सगतः सन् कथायोगेन कथा-

---

१ अनुयात्रांश्च ( ग. ) २ वपस्विनी ( क )

उपविष्टः सभामध्ये कथायोगेन भारत ॥ १
ततोऽभिगम्य तीर्थानि सर्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥ २
नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव शिरसा चक्रे पादाभिवादनम् ॥ ३

नारद उवाच—
क्व गताऽभूत्सुतेयं ते कुतश्चैवागता नृप ।
किमर्थं युवतीं भर्त्रे न चैनां संप्रयच्छसि ॥ ४

अश्वपतिरुवाच—
कार्येण खल्वनेनैव प्रेषिताद्यैव चागता ।
एतस्याः शृणु देवर्षे भर्तारं योऽनया वृतः ॥ ५

मार्कण्डेय उवाच—
सा ब्रूहि विस्तरेणेति पित्रा संचोदिता शुभा ।
दैवतस्येव वचनं प्रतिगृह्येदमब्रवीत् ॥ ६

सावित्र्युवाच—
आसीत्साल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।

---

सम्बन्धेन सभामध्ये उपविष्टः । तेन साकं कथाः कुर्वाण उपविष्ट आसीदित्यर्थः । हे भारत युधिष्ठिर !

( २ ) तत इति । ततोऽश्वपतेरुपवेशनानन्तरं । सावित्री मन्त्रिभिः सह पितुर्वेश्म गृहं आजगाम ।

( ३ ) नारदेनेति । नारदेन सह आसीनं उपविशन्तं उपविष्टमिति यावत् । आस्तेर्लटः शानचि 'ईदासः' इतीत । उभयोर्द्वयोः पितुर्नारदस्य च पादाभिवादनं पादयोः प्रणामं चक्रे ।

( ४ ) क्वेति । हे नृप अश्वसेन सुता, कस्मात्प्रदेशात् युवतीं तरुणीं सतीं । यौतेः शत्रन्तान् ङीपि रूपमिदम् । तच्च रूढ्या तरुणीमाचष्टे । ' युवती युवतिः समे ' इति द्विरूपकोशे श्रीहर्षः ( १४३ ) । एनां भर्त्रे पत्ये किमर्थं न सम्प्रयच्छसि न ददासि । दाणो लटि 'पाघ्रे' त्यादिना यच्छादेशः ।

( ५ ) कार्येणेति । अनेन पतिसम्बन्धिनैव कार्येण हेतुभूतेन प्रेषिता । यः अनया वृतः तमिति शेषः । भर्तारं एतस्याः अस्याः सकाशात् शृणु ।

(६) सेति । विस्तरेण ब्रूहि इति पित्रा संचोदिता सम्यक् प्रेरिता दैवतस्येव तस्य पितुरित्यर्थः वचनं प्रतिगृह्य अङ्गीकृत्य इदं वक्ष्यमाणं अब्रवीत् ।

( ७ ) आसीदिति । द्युमत्सेन इति ख्यातो धर्मात्मा धर्मे आत्मा मनो यस्य तथाभूतो धर्म एवात्मा यस्य तथाभूतो वा क्षत्रियः पृथिवीपतिः राजा आसीत् । अस्तिश्चात्र पृथिवीपतित्वेनैव सम्बध्यते नैव पुनर्द्युमत्सेनेन ।

---

१ भद्र ( क ) २ तदस्याः शृणु देवर्षे भर्ता वै योऽनया वृतः ( क ) ३ सदैव तस्य ( क. न. म. ) ४ नास्तीदं कपुस्तके । ५ देशेषु ( च )

द्युमत्सेन इति ख्यातः पश्चादन्धो बभूव ह ॥ ७
विनष्टचक्षुषस्तस्य बालपुत्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन्पूर्ववैरिणा ॥ ८
स बालवत्सया सार्धं भार्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥ ९
तस्य पुत्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्तेति मनसा वृतः ॥ १०

नारद उवाच—
अहो बत महत्पापं सावित्र्या नृपते कृतम् ।
अजानन्त्या यदनया गुणवान्सत्यवान्वृतः ॥ ११

---

पश्चात् पृथिवीपतित्वप्राप्त्यनन्तरं कियतापि कालेन । हकारः पादपूरणे । सिन्धूनां हि राजा साल्वदेशश्च काम्यकादुदीच्यां दिश्यासीदिति प्रतीयते । सिन्धुराजो हि जयद्रथः साल्वान् गच्छन्मध्येमार्गं काम्यके तृणबिन्दोराश्रमे द्रौपदीं दृष्ट्वा प्रजहारेति द्रौपदीहरणपर्वण्युपवर्णितम् । सिन्धवश्च काम्यकं दक्षिणेन वर्तन्ते ।

(८) विनष्टेति । विनष्टचक्षुषः विनष्टे चक्षुषी यस्य तथाभूतस्य बालपुत्रस्य बालः पुत्रो यस्य तथाभूतस्य च धीमतो ज्ञानिनो द्युमत्सेनस्य । अस्मिंश्छिद्रे प्रतीकाराक्षमे विपत्समये । पूर्ववैरिणा प्रागेव शत्रुतामापन्नेन केनापि सामीप्येन हेतुना समीपवर्तित्वादिति भावः । सामन्तेनेति पाठस्तु साधुतरः । सीमन्तेन एतन्नाम्ना भूपेन । एषा किल राज्ञां नीतिर्यत्परेषां छिद्रमालोक्य प्रहरन्तीति ।

( ९ ) स इति । सः अपहृतराज्यो द्युमत्सेनः । बालवत्सया बालो नाल्ये वर्तमानो वत्सः पुत्रो यस्यास्तथाभूतया भार्यया सार्धं सह । महाव्रतः महान्ति व्रतानि नियमाश्चान्द्रायणादयो यस्य तथाभूतः सन् । तपः तेपे समाचचारेत्यर्थः । तपः कर्मको हि तपतिराचारार्थ एव सदृष्ट इति ।

( १० ) तस्येति । पुरे नगरे जातः उत्पन्नः तपोवने तपसः सम्बन्धिन्यरण्ये संवृद्धः । एतेन नागरिकत्वं च पुण्यशीलत्वं चास्मिन् गम्यमानं वरणार्हतामेतस्य द्योतयति । सत्यवान् मे मया अनुरूपो भर्ता इति मनसा करणभूतेन वृतः ।

( ११ ) अहो इति । अहो बतेति खेदे । 'अहो बत महात्पापं कर्तुं व्यवसिता वयम्' इति गीता । अजानन्त्येति अज्ञानमेवात्र हेतुरिति द्योत्यते । आर्षो नुम् । पापं अनिष्टं कर्म सत्यवद्वरणरूपम् । वैधव्यजनकत्वात्तस्येति भावः । 'पापमनिष्टे' इति कल्पद्रुमः । गुणवान् सद्गुणशाली । एष च वरणे हेतुः ।

( १२ ) सत्यवच्छब्दस्य प्रवृत्तिनिमित्तमाचष्टे सत्यमिति । यथेति तथा

---

१ सीमन्तेन ( च ) २ वै ( च )

सत्यं वदत्यस्य पिता सत्यं माता प्रभाषते ।
तथाऽस्य ब्राह्मणाश्चक्रुर्नामैतत्सत्यवानिति ॥ १२
बालस्याश्वाः प्रियाश्चास्य करोत्यश्वांश्च मृन्मयान् ।
चित्रेपि विलिखत्यश्वांश्चित्राश्व इति चोच्यते १३

राजोवाच—

अपीदानीं स तेजस्वी बुद्धिमान्वा नृपात्मजः ।
क्षमावानपि वा शूरः सत्यवान्पितृवत्सलः ॥ १४

नारद उवाच—

विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।

---

शब्दबलाल्लभ्यते यथा यस्मात् । तथा तस्मादित्यर्थः । सत्यवानित्येतत् अस्य द्युमत्सेनपुत्रस्य नाम चक्रुः कृतवन्तः सत्यवानेतदि नामकरणे कृत नामेत्यर्थः । यत्पुनर्भारतमञ्जर्यां सत्त्ववानित्येवास्य नाम सदृश्यते तदेतल्लेखकप्रमादमूलकमेव ।

( १३ ) अथास्य लौकिक नामान्तर च तत्र प्रवृत्तिनिमित्त चाह बाल स्येति । अस्य सत्यवतो बालस्य बाल्ये वर्तमानस्य अश्वाः प्रियाः । एष च मृन्मयाश्वकरणे चित्रेऽश्वलेखने च हेतुः । करोति कृतवानित्यर्थः । मृन्मयान् मृदो विकारभूतान् । ' नित्य वृद्धाशरादिभ्य ' इति मयट् । नत्वस्यासिद्धत्वान्न णत्वम् । विलिखति आलिपतीत्यर्थः । अत इति शेषः । चित्राश्वः चित्रभूता अश्वा यस्य तथाभूतः । द्वितय हि वाच्य चित्रपदस्य मूर्तयश्च मृदादिमय्य आलेख्यानि चेति उभयविधाश्वनिर्माणाच्चित्राश्व इति सङ्केतस्येति भावः।

( १४ ) किंतावद्दुरुन्नेय एव कोपि दोषः सत्यवद्वरणहेतुः किंवा शक्योऽपि विज्ञातुमुपेक्षितः सावित्र्येति जिज्ञासमान पृच्छति अपीति । इदानीं अतिक्रान्तबालभावे समय इत्यर्थः । तेजस्वी 'अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । कालात्ययेप्यसहन तत्तेजः समुदाहृतम् ' इत्येवमुक्त तेजोऽस्त्यस्य तथाभूतः । विक्रमशाली वा । ' तेजो दीप्तौ प्रभावे च स्यात्पराक्रमरेतसोः । ' इति द्व्याभिधानिका आचक्षते । वस्तुतः पुनरत्र दीप्तिशालीत्येव तेजस्विपदस्यार्थः। उत्तरानुरोधात् । पितृवत्सलः पित्रोर्वत्सलः स्निग्धः। पितृपद चात्रैकशेषेण मातापितृवाचि । ' स्निग्धस्तु वत्सल ' इत्यमरः।

( १५ ) विवस्वानिति । विवांसि रश्मयः सन्त्यस्य स विवस्वान्सूर्य इव। ' तसौ मत्वर्थ ' इति भत्वात्स रुत्वम् । मतौ बुद्धिविषये बृहस्पतिः सुराणामाचार्य इव । स हि बृहत्या वाचः पतिरिति। पारस्करादिषु निपातनात्साधुः । ' वाग्वै बृहती तस्या एष पति ' रिति च्छान्दोग्योपनिषत् । महेन्द्रो देवेन्द्रः । ' भूतेन्द्रभारतेशात्प्राङ्महच्छन्दो निरर्थकः ' इति केशवमिश्रः। इदि परमैश्वर्य इत्यतो निष्पन्नस्याभिधयैव देवाधिपतित्वाचित्वादिन्द्रशब्दस्य महच्छन्दोऽत्र निरर्थक इति तदीयोऽभिप्रायः । सामान्यतस्तावच्छ्रेष्ठवाचि-

महेन्द्र इव वीर्येश्च वसुधेव क्षमान्वितः ॥ १५

अश्वपतिरुवाच ।

अपि राजात्मजो दाता ब्रह्मण्यश्चापि सत्यवान् ।
रूपवानप्युदारो वाऽप्यथवा प्रियदर्शनः ॥ १६

नारद उवाच—

सांकृते रन्तिदेवस्य स्वशक्त्या दानतः समः ।
ब्राह्मण्यः सत्यवादी च शिनिरौशीनरो यथा ॥ १७

---

तया प्रयुज्यमानत्वमवेक्षमाणा इन्द्रशब्दस्य प्रयुञ्जते महच्छन्दमत्र भाषाविद इति स्थितिरेषा । वसुधा पृथिवीव क्षमान्वितः सहिष्णुतायुक्तः ।

( १६ ) अपीति । अपीति प्रश्नेऽव्ययम् । दाता दानशीलः । ददातेस्ताच्छीलिकस्तृन् । ब्रह्मण्यः ब्रह्मभ्यो ब्राह्मणेभ्यो हितः । 'खलयवे' त्यादिना 'तस्मै हितमि'त्यर्थे यत् । अत्र च ब्रह्मशब्दो ब्राह्मणमात्रवाचीति भाष्यम् । उदारः महान् दक्षिणो वा । 'उदारो दातृमहतोर्दक्षिणेऽप्यभिधेयवत् । ' इति मेदिनी । प्रियदर्शनः प्रियं दर्शनं साक्षात्कारो यस्य तथाभूतः अपि अस्ति वेति प्रश्नः ।

( १७ )सांकृतेरिति । साङ्कृतेः संकृतिपुत्रस्य । बाह्वादेराकृतिगणत्वात्संकृतिपदादपत्यार्थे इञ् । आर्षत्वाद्वा साधु । रन्तिदेवस्य एतन्नाम्नः 'तुल्यार्थैरतुलोपमाभ्यां तृतीयाऽन्यतरस्याम्' इति षष्ठी। समः सदृशः। दानतः दानकर्मणि आद्यादित्वात्तसि सप्तम्यर्थे । रन्तिदेवश्चातिमात्र दानशूर इति पुराणेषु च भारते चोपवर्णितम् । 'सहस्र तुभ्यमित्युक्त्वा ब्राह्मणान् सम्प्रपद्यते । अन्वाहार्योपकरण द्रव्योपकरण च यत् ॥ घटा. पात्र्यः कटाहानि स्थाल्यश्च पिठराणि च । नास्ति किञ्चिदसौवर्णं रन्तिदेवस्य धीमतः । ' इति महाभारते शान्तिपर्वणि । 'स्रोतोमूर्त्या भुवि परिणता रन्तिदेवस्य कीर्तिम् । ' इति कालिदासः । औशीनर उशीनरस्यापत्य शिबि. एतन्नामा भूपः । अयमेव शिबिरपि । बवयोः सावर्ण्यात् । औशीनर इति शिवादेराकृतिगणत्वादण् । शिबिः किल महाभागः कमपि जिघत्सुना श्येनेनानुगम्यमान कपोत परित्राणार्थमात्मनोऽङ्कमुपागतमवैक्षिष्ट । श्येनोऽप्यनुपदमेवागतो दीयतामेतन्मे भक्ष्यमित्यभाषिष्ट । राजा तु शिबि. शरणमनुप्राप्त कपोतमन्तरा यत्किमपि वा दास्यामीति प्रत्यवदत । ततः श्येनः कपोतोन्मित राज्ञो मास ययाचे । राजा च तुलायामेकतः कपोतमारोप्यान्यतः स्वयमेव स्वशरीरादुत्कृत्त मास न्यक्षैप्सीत् । नैव पुनस्तत्कपोततुल्यतामापेदे । अन्ततस्तु राजा स्वयमेव तुलामारूढवान् । ततश्च गगनात्कुसुमवृष्टिः समपतत् । श्येनश्च प्रकटीकृत्यात्मनः पारमार्थिकीमिन्द्रस्वरूप राज्ञ आशिषः प्रायच्छत् । कपोतोऽप्यग्न्यात्मना प्रादुर्भूय राजानं प्रशशंसेत्यग्निपुराणगता कथाऽत्रानुसन्धेया ।

---

१ घटाश्च ( च )

यथातिरिव चोदारः सोमवत्प्रियदर्शनः ।
रूपेणान्यतमोऽश्विभ्यां द्युमत्सेनसुतो बली[1] ॥ १८
स दान्तः स मृदुः शूरः स सत्यः स जितेन्द्रियः ।
स मैत्रः[2] सोनसूयश्च स ह्रीमान्धृतिमांश्च[3] सः ॥ १९
नित्यशश्चार्जवं तस्मिन्स्थितिस्तस्यैव[4] च ध्रुवा ।
संक्षेपतस्तपोवृद्धैः शीलवृद्धैश्च कथ्यते ॥ २०

अश्वपतिरुवाच—
गुणैरुपेतं सर्वैस्तं भगवन्प्रब्रवीषि[5] मे ।
दोषानप्यस्य मे ब्रूहि यदि सन्तीह केचन ॥ २१

नारद उवाच—
एक एवास्य दोषो हि गुणानाक्रम्य तिष्ठति ।

---

( १८ ) ययातिरिति । ययातिः पुरोः पिता । सोमवच्चन्द्रवत् । अश्विभ्यां अश्विनीकुमारापेक्षया अन्यतमः अत्यन्त भिन्नः । ततोऽप्यतिमानमेव सुन्दरत्वादिति भावः । अश्विनौ च सौन्दर्ये प्रथिततमौ देववैद्यौ । एप च शब्दो नित्यं द्विवचनान्तः । द्वित्वात्तयोः ।

( १९ ) स इति । सः स एवेत्यर्थः सर्वं वाक्यं सावधारणमिति न्यायात् । एवमुत्तरत्राप्यत्र श्लोके । दान्तो दमविशिष्टः । दमश्च बाह्येन्द्रियनिग्रहः । मृदुः सौम्यस्वभावः । जितेन्द्रियो निगृहीतान्तःकरणः । अत्रेन्द्रियशब्दो मनोमात्रवचनो दमेन बाह्येन्द्रियनिग्रहस्योक्तत्वात् । मैत्रः मैत्रीविशिष्टः सर्वत्र मित्रतया वर्तमान इत्यर्थः । 'मित्रभावो मैत्री मित्रतया वर्तते' इति 'मैत्रः करुण एव च' इति श्रीमद्भगवद्गीतापद्य ( १२।१३ ) भाष्ये श्रीशंकराचार्याः । 'मैत्रो ब्राह्मण उच्यते' इति श्रीमनुवचनव्याख्याया 'मित्रमेव मैत्र इति स्वार्थेऽण्' इति मेधातिथिः । अनुसूयः असूया परगुणेषु दोषारोपः स नास्त्यस्मिंस्तथाभूतः । 'गुणान्न गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते सानसूया प्रकीर्तिता ।' इति बृहस्पतिः । धृतिः संतोषः।

( २० ) नित्यश इति । नित्यशो नित्यं आर्जवं ऋजुता सारल्यं शाठ्यविपरीतो गुणः तस्मिंस्तास्मिन्नेवेत्यर्थः । स्थितिर्मर्यादा । इतीति शेषः इति तपोवृद्धैस्तपसा वृद्धैः शीलेन सदाचारेण वृद्धैश्च सक्षेपतः कथ्यते ।

( २१ ) गुणैरिति । इह अस्मिन्सत्यवति । यदि सन्ति तदेति शेषः । मे मह्यम् ।

( २२ ) एक इति । हिशब्दोऽवधारणे । गुणानाक्रम्य अभिभूय । तेन

---

१ इतः परं 'स वदान्यः तेजस्वी धीमांश्चैव क्षमान्वितः ।' इत्यधिकं कपुस्तके। २ सन्मैत्रः ( क ) ३ द्युतिमान् ( क. म. न. ) ४ धृतिस्तत्रैव ( क ) ५ भगवान्प्रब्रवीति ( च )

४

स च दोषः प्रयत्नेन न शक्यंश्चातिवर्तितुम् ॥ २२
एको दोषोऽस्ति नान्योऽस्य सोऽद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति ॥ २३

राजोवाच--

एहि सावित्रि गच्छस्व अन्यं वरय शोभने ।
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः ॥ २४
यथा मे भगवानाह नारदो देवसत्कृतः ।
संवत्सरेण सोऽल्पायुर्देहन्यासं करिष्यति ॥ २५

सावित्र्युवाच--

सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ २६

---

गुणानामप्यनादरणविपक्षे पातनेन नैष्फल्यादिति भावः । अतिवर्तितु अतिक्रमितुम् ।

( २३ ) एक इति । दोषः कन्याप्रदानानर्हत्वप्रयोजको धर्म इत्यर्थः । दोषान्तरस्यात्यन्ताभावविनिवेदनायासौ पुनरुक्तिः । दोषमाचष्टे अद्यप्रभृति वर्तमानादिवसात्प्रभृति संवत्सरेण क्षीणायुः सन् देहन्यास देहत्याग करिष्यति मरिष्यतीत्यर्थः ।

( २४ ) नारदवचनतः सावित्र्याः प्रतिनिवर्तनकामुकोऽश्वपतिः प्रेम्णैव नामात्मनः समीपमाहूय वरान्तरान्वेषणे प्रवर्तयति । एहीति । आगमनोत्तर प्राह गच्छस्वेति । आर्षमात्मनेपदम् । ' गच्छ त्वमि ' ति पाठस्तु साधुतमः । शोभन इति अल्पायुषे प्रदानस्यात्यन्तमनुचितत्व द्योतयति । अन्यस्य वरणे हेतुमाह तस्येति । चकारो हेत्वर्थः ।

( २५ ) दोषस्वरूपमाह । देवसत्कृतो देवैः सत्कारं प्रापितः । नारद आह ब्रवीति । एतेन श्रद्धेयता दोषास्तित्वस्य द्योत्यते ।

( २६ ) 'अप्रदाता पिता वाच्य' इति धर्मशास्त्रवचसा वरवरणे प्रवर्तयतः पितुः समाधानाय धर्मशास्त्रीय वचनमेव किंचिद्विपरिवर्त्य प्रतिवचनतयोपन्यस्यति सकृदिति। मनुसंहितायां नवमाध्याये सप्तचत्वारिंश पद्यमिदम् । 'सकृत्सकृ'दित्यत्र पुन' 'सता सकृदि'ति मनुवचने । अंशः पित्रादिधनविभागो धर्मतो विहितः सकृत् सकृदेव । सर्वं वाक्यं सावधारणमिति न्यायात् । निपतति भवति । इत्थमेव हि व्याचष्टे कुल्लूकः । कन्या सकृदेव प्रदीयते । सकृत्प्रदत्तायाः पुनर्दानं नास्तीत्यर्थः । कन्याभिन्नेऽप्यर्थे धनादौ ददामीति सकृदेवाह वदति दातेत्यर्थात् । यद्ददानीत्येकदा प्रतिश्रुतं तत्र पुनर्वचनान्तरेणापरस्मै दातु युक्तमित्यर्थः । एतानि त्रीणि सकृत्सकृदेकैकवारमेव भवन्ति न पुनरधिकवारमित्यर्थः ।

---

१ शक्यमतिवर्तितुम् ( क. न. म. ) शक्य अतिवर्तितुम् ( च ) २ गच्छ त्वं ( । ) ३ सकृत ( च )

दीर्घायुरथवाऽल्पायु सगुणो निर्गुणोऽपि वा ।
सकृद् वृतो मया भर्ता न द्वितीयं वृणोम्यहम् ॥ २७
मनसा निश्चयं कृत्वा ततो वाचाऽभिधीयते ।
क्रियते कर्मणा पश्चात्प्रमाणं मे मनस्ततः ॥ २८

नारद उवाच—

स्थिरा बुद्धिर्नरश्रेष्ठ सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात्कथंचन ॥ २९
नान्यस्मिन्पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव ॥ ३०

राजोवाच—

अविचाल्यमेतदुक्तं तथ्यं च भवता वच. ।
करिष्याम्येतदेव च गुरुर्हि भगवान्मम ॥ ३१

(२७) तत. किमित्याह । दीर्घायुरिति । दीर्घायुष्ट्वस्य सगुणत्वस्य चात्मनः समतत्वादादितो निर्देश. । पराभिमततया ऽन्ययोः परस्तादिति बोध्यम् । मया भर्ता सकृद्वृतः स्वीकृत. । भर्तुश्च स्वीकारस्तस्मा आत्मनो दानम् । तच्चैकवारमेव भवतीति धर्ममर्यादेति प्राह न द्वितीय वृणोतीति । धर्मविरुद्धत्वादिति भाव । तदाह मनु. 'न द्वितीयश्च साध्वीना कचिद्भर्तोपदिश्यते ' इति ।

(२८) इतश्च न मयाऽन्यो वरीतु शक्य इत्याह मनसेति । आदितस्तावद्य. कोऽप्यर्थो मनसा निश्चीयते तत. परमसावुच्यते तदनु च कार्यात्मनाऽसौ परिणमयते । तदत्र सर्वत. पूर्वभाविनो मनस एवोत्तरत्र कारणतया विना च मनस. प्रवृत्तिं क्रियाया अनुत्पादान्मम च मनसोऽन्यत्र प्रवृत्तेरभावाचान्य भर्तारमङ्गीकर्तुं प्रभवामीति भाव. । ततः तस्माद्यस्माद्वाक्क्रिययोर्निष्पत्तिस्तदेकायत्ता तस्मादित्यर्थ. । प्रमाण एकान्ततः समाननीयमनुल्लङ्घनीयमित्यर्थ. ।

(२९) स्थिरेति । बुद्धिर्निश्चयः । धर्मधर्मिणोरभेदोपचारात् । अस्माद् धर्मात् धर्मरूपात्सत्यवद्वरणात् कथंचन केनापि प्रकारेण ।

(३०) गुणवते कन्यका प्रतिपादनीयेत्येष हि धर्मः । गुणवांश्च सत्यवानिति युक्तमेवास्मै प्रदानमेतस्य इत्याचिख्यासुः सत्यवतो गुणवत्ता प्राह । नेति । वैकारोऽवधारणे । प्रदान सत्यवत इत्यर्थात् । मे मह्य रोचते । ' रुच्यर्थाना प्रीयमाण ' इति सप्रदानत्वाच्चतुर्थी ।

(३१) अविचाल्यमिति । अविचाल्य विचालयितुमशक्य न्याय्यत्वादिति भाव. । विचालन चान्यथाकरणम् । तथ्य सत्य प्रमाणभूतमित्यर्थः । गुरुः उपदेष्टा । अनतिक्रमणीयो गुरोरादेश इति भाव. ।

१ भगवता (च) २ वै (च)

नारद उवाच—

अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ॥ ३२

मार्कण्डेय उवाच—

एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजाऽपि दुहितुः सर्वं वैवाहिकमकारयत् ॥ ३३

इति श्रीमन्महाभारत आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि नारदानुमतौ त्रिनवत्यधिकद्विशततमोऽध्यायः ।

चतुर्नवत्यधिकद्विशततमोऽध्यायः ।



*मार्कण्डेय उवाच—

अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।[1]
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ १

( ३२ ) अविघ्नमिति । तव दुहितुः कन्यायाः प्रदाने विवाहविषये अविघ्नं विघ्नस्याभावः अस्तु । अर्थाभावेऽव्ययीभावः तावदिति वाक्यालङ्कारे । साधयिष्यामि गमिष्यामि । 'प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यते' इति दर्पणम् । न चैतन्नाट्यमात्रविषयकमिति भ्रमितव्यम् । लोकेऽप्रयुज्यमानानां नाट्ये प्रयोगासम्भवात् । 'साधयामो वयम्' इति शाकुन्तला ।

( ३३ ) एवमिति । खं आकाशं उत्पत्य आकाशं उत्पतनं कृत्वेत्यर्थः । त्रिदिवं स्वर्गं । तृतीये हि तद्दिवं लोक इति । संख्यावचना हि शब्दा वृत्तिविषये पूरणार्थतामप्यापद्यन्ते । अत एव हि प्रयुञ्जते कवयः 'त्रिभागशेषासु निशासु' इत्यादि । वैवाहिकं विवाहसंबन्धि सम्भारजातम् ।

इति श्रीसावित्र्युपाख्यानव्याख्यायां त्रिनवत्यधिकद्विशततमोऽध्यायः ।

*मार्कण्डेयः भृगोर्मुनेः पौत्रो मृकण्डोर्नाम मुनेः पुत्रः । मृकण्डुशब्दात् 'शुभ्रादिभ्यश्च' इति ढक् (एयः) । एष किल चिरजीवीत्याख्यायते । एतद्विषये च नानाविधाः कथाः पाद्मनारसिंहादिषु पुराणेषु सदृश्यन्ते ।

( १ ) अथेति । तं नारदोक्तमर्थं अल्पायुः सत्यवानित्येतद्रूपं विचिन्तयन् नृपो राजाश्वपतिः कन्याप्रदाने कन्यायाः प्रदाननिमित्तम् । वैवाहिकं विवाहसंबन्धि भाण्डं भूषणादिकमुपकरणजातमिति यावत् । 'भाण्डं पात्रे वणिङ्मूलधने भूषाश्वभूषयोः ।' इति मेदिनी । समानिन्ये समीलितवान् एकीकृतवानित्यर्थः । सम्पूर्वको ह्यानयतिः समेलने । 'समानयंस्तुल्यगुणं वधूवरं चिरस्य वाच्यं न गतः प्रजापतिः ।' इति शाकुन्तला ।

१ एवं ( च ) २ प्रदानाय वैवाहिकमचिन्तयत् ( च ) ३ तत ( च )

तती वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ २
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भयामेव द्विजैः सार्धं राजर्षि तमुपागमत् ॥ ३
तत्रापश्यन्महाभागं सालवृक्षमुपाश्रितम् ।
कौश्यां बृष्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४
स राजा तस्य राजर्षेः कृत्वा पूजां यथाऽर्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५
तस्यार्ध्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ६

(२) तत इति । वृद्धान् ज्ञानेनेत्यर्थः । 'यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ।' इति स्मृतिः । वयसा ज्येष्ठान्वा । ऋत्विजः याजकान् । 'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते ।' इति कात्यः । ऋतुषु यजन्ति ऋत्विजः । 'ऋत्विग्दधृग्' गित्यादिना क्विन् । सपुरोहितान् पुरोहितसहितान् । पुरोहिताश्च 'वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादवचोयुक्त एष राजपुरोहितः ।' इति चाणाक्योऽक्तलक्षणाः । पुण्ये पवित्रे शुभफलदायिनीत्यर्थः ।

(३) मेध्यारण्यमिति । सोऽश्वपतिः । मेध्यं पवित्रं अरण्यं मेध्यारण्यम् । 'पूतं पवित्रं मेध्यं चे'त्यमरः । द्युमत्सेनाश्रमं सत्यवतः पितुराश्रमम् । पद्भ्यामेव न तु वाहनादिनेत्यर्थः । राजर्षिं राजानमृषिं क्षत्रियकुलोत्पन्नमृषिमित्यर्थः ।

(४) तत्रेति । तत्राश्रमे । महाभागं महान् भागो भाग्यं यस्य तथाभूतम् । सालवृक्षं सालः 'सालई' इति ख्यातो वृक्षविशेषस्तमुपाश्रितम् । कौश्यां कुशानां दर्भाणामियं कौशी दर्भविनिर्मितेत्यर्थः तस्यां बृष्यां आसने । 'व्रतिनामासनं बृषी' इत्यमरः । वृषीत्यप्यत्र । वृषन्तः सीदन्ति (उपविशन्ति) अस्यां वृषी । पृषोदरादित्वात्साधु । समासीनं सम्यगुपविष्टमित्यर्थः ।

(५) स इति । यथार्हतः यथायोग्यम् । अर्हशब्दो भावप्रधानः । वाचा सुनियतः अत्यन्तं नियन्त्रितः । नियन्त्रितवाणीक इत्यर्थः । प्रकृत्यादित्वात्तृतीया । विनयानुकूलत्वाद्वाङ्नियन्त्रणस्य । आत्मनिवेदनं आत्मवृत्तनिवेदनम् । आत्मशब्द आत्मवृत्तान्ते लाक्षणिकः ।

(६) तस्येति । धर्मवित् धर्मवेत्ता । एतच्चार्घ्यादिदानस्यौचित्यं द्योतयति । तस्य अश्वपतेः । शेषे षष्ठी । अश्वपतय इत्यर्थः । अर्घ्यं पूजोपचारार्थं गन्धपुष्पाक्षतादिमिश्रितं वारि । 'अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः । अर्घः पूजोपचार इति महेश्वरः । गां धेनुं आवेद्य दत्त्वेत्यर्थः । अभ्यागताय किल धेनुः प्रतिपादनीयेत्याचारोऽयं प्राचाम् । राजा द्युमत्सेनः । राजानमश्वपतिम् । अब्रवीत् अपृच्छदित्यर्थः ।

[1] ऋत्विक्सभ्य (क.)

नारद उवाच—

अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत्सर्वेषां भद्रमस्तु वः ॥ ३२

मार्कण्डेय उवाच—

एवमुक्त्वा खमुत्पत्य नारदस्त्रिदिवं गतः ।
राजाऽपि दुहितुः सज्जं वैवाहिकमकारयत् ॥ ३३

इति श्रीमन्महाभारत आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि नारदानुमतौ त्रिनवत्यधिकद्विशततमोऽध्यायः ।

चतुर्नवत्यधिकद्विशततमोऽध्यायः ।



* मार्कण्डेय उवाच—

अथ कन्याप्रदाने स तमेवार्थं विचिन्तयन् ।[1]
समानिन्ये च तत्सर्वं भाण्डं वैवाहिकं नृपः ॥ १

( ३२ ) अविघ्नमिति । तव दुहितुः कन्यायाः प्रदाने विवाहविषये अविघ्न विघ्नस्याभावः अस्तु । अर्थाभावेऽव्ययीभावः तावदिति वाक्याल ङ्कारे । साधयिष्यामि गमिष्यामि । ' प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यते ' इति दर्पणम् । न चैतन्नाटयमात्रविषयकमिति भ्रमितव्यम् । लोकेष्वप्रयुज्यमानानां नाटये प्रयोगासम्भवात् । ' साधयामो वयम् ' इति शाकुन्तला ।

( ३३ ) एवमिति । 'ख आकाश उत्पत्य आकाश उत्पतन कृत्वेत्यर्थ' । त्रिदिव स्वर्गं । तृतीय हि तद्दिव लोक इति । सख्यावचना हि शब्दा वृत्ति विषये पूरणार्थतामप्यापद्यन्ते । अत एव हि प्रयुञ्जते कवयः ' त्रिभागशेषासु निशासु ' इत्यादि । वैवाहिक विवाहसंबन्धि सम्भारजातम् ।

इति श्रीसावित्र्युपाख्यानव्याख्याया त्रिनवत्यधिकद्विशततमोऽध्यायः ।

*मार्कण्डेयः भृगोर्मुनेः पौत्रो मृकण्डोर्नाम मुनेः पुत्र. । मृकण्डुशब्दात् ' शुभ्रादिभ्यश्च ' इति ढक् (एय') । एष किल चिरजीवित्याख्यायते । एतद्विषये च नानाविधा. कथाः पाद्मनारसिंहादिषु पुराणेषु सदृश्यन्ते ।

( १ ) अथेति । त नारदोक्तमर्थं अल्पायु सत्यवानित्येतद्रूप विचिन्तयन् नृपो राजाश्वपति' कन्याप्रदाने कन्याया. प्रदाननिमित्तम् । वैवाहिक विवाहसम्बन्धि भाण्ड भूषणादिकमुपकरणजातमिति यावत् । ' भाण्ड पात्रे वणिङ्मूलधने भूषाश्वभूषयोः । ' इति मेदिनी । समानिन्ये समेलितवान् एकीकृतवानित्यर्थ । सपूर्वको ह्यानयतिः समेलने । ' समानयस्तुल्यगुण वधूवर चिरस्य वाच्य न गतः प्रजापतिः । ' इति शकुन्तला ।

१ सर्वे ( च ) २ प्रदानाय वैवाहिकमचिन्तयत् ( घ ) ३ सत. ( च )

तत्तो वृद्धान्द्विजान्सर्वानृत्विजः सपुरोहितान् ।
समाहूय दिने पुण्ये प्रययौ सह कन्यया ॥ २
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्धं राजर्षिं तमुपागमत् ॥ ३
तत्रापश्यन्महाभागं सालवृक्षमुपाश्रितम् ।
कौश्यां बृष्यां समासीनं चक्षुर्हीनं नृपं तदा ॥ ४
स राजा तस्य राजर्षेः कृत्वा पूजां यथाऽर्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥ ५
तस्यार्घ्यमासनं चैव गां चावेद्य स धर्मवित् ।
किमागमनमित्येवं राजा राजानमब्रवीत् ६

(२) तत इति। वृद्धान् ज्ञानेनेत्यर्थः। 'यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः।' इति स्मृतिः। वयसा ज्येष्ठान्वा। ऋत्विजः याजकान्। 'वृताः कुर्वन्ति ये यज्ञमृत्विजो याजकाश्च ते।' इति कात्यः। ऋतुषु यजन्ति ऋत्विजः। 'ऋत्विग्दधृ' गित्यादिना किन्। सपुरोहितान् पुरोहितसहितान्। पुरोहिताश्च 'वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः। आशीर्वादवचोयुक्त एष राजपुरोहितः।' इति चाणक्योऽक्तलक्षणाः। पुण्ये पवित्रे शुभफलदायिनीत्यर्थः।

(३) मेध्यारण्यमिति। सोऽश्वपतिः। मेध्य पवित्र अरण्य मेध्यारण्यम्। 'पूतं पवित्रं मेध्यं च' त्यमरः। द्युमत्सेनाश्रमं सत्यवतः पितुराश्रमम्। पद्भ्यामेव न तु वाहनादिनेत्यर्थः। राजर्षिं राजानमृषिं क्षत्रियकुलोत्पन्नमृषिमित्यर्थः।

(४) तत्रेति। तत्राश्रमे। महाभागं महान् भागो भाग्यं यस्य तथाभूतम्। सालवृक्षं सालः 'सालई' इति ख्यातो वृक्षाविशेषस्तमुपाश्रितम्। कौश्या कुशानां दर्भाणामियं कौशी दर्भविनिर्मितेत्यर्थः तस्या बृष्या आसने। 'व्रतिनामासनं बृषी' इत्यमरः। वृषीत्यप्यत्र। व्रुवन्तः सीदन्ति (उपविशन्ति) अस्यां बृषी। पृषोदरादित्वात्साधुः। समासीनं सम्यगुपविष्टमित्यर्थः।

(५) स इति। यथार्हतः यथायोग्यम्। अर्हशब्दो भावप्रधानः। वाचा सुनियतः अत्यन्तं नियन्त्रितः। नियन्त्रितवाणीक इत्यर्थः। प्रकृत्यादित्वात्तृतीया। विनयानुकूलत्वाद्वाग्नियन्त्रणस्य। आत्मनिवेदनं आत्मवृत्तनिवेदनम्। आत्मशब्द आत्मवृत्तान्ते लाक्षणिकः।

(६) तस्येति। धर्मवित् धर्मवेत्ता। एतच्चार्घ्यादिदानस्यौचित्यं द्योतयति। तस्य अश्वपतेः। शेषे षष्ठी। अश्वपतय इत्यर्थः। अर्घ्यं पूजोपचारार्थं गन्धपुष्पाक्षतादिमिश्रितं वारि। 'अर्घ्यमर्घार्थे पाद्यं पादाय वारिणि' इत्यमरः। अर्घः पूजोपचार इति महेश्वरः। गां धेनुं आवेद्य दत्त्वेत्यर्थः। अभ्यागताय किल धेनुः प्रतिपादनीयेत्याचारोऽयं प्राचाम्। राजा द्युमत्सेनः। राजानमश्वपतिम्। अब्रवीत् अपृच्छदित्यर्थः।

१ ऋत्विग्मध्य (क.)

यथौ स्वमेव भवनं युक्तः परमया मुदा ॥ १६
सत्यवानपि तां भार्यां लब्ध्वा सर्वगुणान्विताम् ।
मुमुदे सा च तं लब्ध्वा भर्तारं मनसेप्सितम् ॥ १७
गते पितरि सर्वाणि संन्यस्याभरणानि सा ।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥ १८
परिचारैर्गुणैश्चैव प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥ १९
श्वश्रूं शरीरसत्कारैः सर्वैराच्छादनादिभिः ।
श्वशुरं देवसत्कारैर्वाचः संयमनेन च ॥ २०

दासादि । राजार्हमुपकरणमिति कल्पद्रुमः । परिच्छाद्यतेऽनेनेति परिच्छदः । 'पुंसि संज्ञायां घः प्रायेण' इति घः । 'छादेर्घेऽद्व्युपसर्गस्य' इत्युपधाह्रस्वः स्व स्वीयं, एवकारोऽत्र नातिसार्थकः । भवनमेवेति भिन्नक्रमो वा ।

( १७ ) सत्यवानिति । सर्वगुणान्वितामिति मनसेप्सितामिति च प्राप्तौ मोदे हेतुः ।

( १८ ) अथ सावित्र्या भर्तृकुलानुरूपां वृत्तिमाह गत इति । पितरि गते सति । पितुर्हि समक्षमेव स्वीक्रियमाणो मुनिदारवेषः कदाचित्खेदयेत्पितरमिति तद्गमनोत्तरमेव तत्स्वीकारः । सर्वाणि आभरणानि अलङ्करणानि संन्यस्य त्यक्त्वा । काषाय काषायेण रागेण रक्तं वस्त्रम् । 'तेन रक्तं रागात्' इत्यण् । जगृहे गृहीतवती । ग्रहेर्लिट् । स्वरितेत्त्वादात्मनेपदम् ।

( १९ ) परिचारैरिति । परिचरणानि परिचाराः । परिचरणक्रियाः । भावे घञ् । सेवाभिरित्यर्थः । गुणैः सद्गुणैः प्रश्रयेण विनयेन । 'समौ विनयप्रश्रयौ' इत्युत्तरचरितम् । दमेन 'विकारहेतुविषयसंनिधानेऽप्यविक्रियत्वं मनसो दमनं दम इति सनन्दवचनात् शीतातपादिद्वन्द्वसहिष्णुता दम' इति गोविन्दराजः' इति मन्वर्थमुक्तावल्यां (६–९२) कुल्लूकः । सर्वकामक्रियाभिः सर्वाभिः कामाभिः श्वश्रूश्वशुराद्यभिलषिताभिः क्रियाभिः । सर्वत्र करणे तृतीया । कामशब्दोऽत्र तद्विषये लाक्षणिकः । सर्वेषां तुष्टिं संतोषं आदधे चकार जनयामासेत्यर्थः । 'आधत्ते हि तयोः प्रयोग उभयोरामोदमामोदम्' इति विश्वगुणादर्शः ।

( २० ) सामान्यतः सर्वेषां सन्तोषजननमभिधाय विशिष्य श्वश्रूप्रभृतीनां सन्तोषजननमाह । श्वश्रूमिति । श्वश्रूं आच्छादनादिभिः वस्त्रपरिधानप्रभृतिभिः शरीरसत्कारैः शरीरस्य सम्बन्धिभिः उपचारैः । सत्क्रियते शोभनत्वमापाद्यत एभिः सत्काराः । करणे घञ् । श्वशुरं देवसत्कारैः देवतुल्यैः सत्कारैरर्हणाभिः । वाचः संयमनेन नियमेन च । कदाचिदप्रियमुक्तवत्यपि तस्मिन्नप्रियवचनाप्रदानार्थं वाचः संयमनम् । पर्वतोपत्यादिरुत्तरेण संबन्धः ।

१ भ. ५६१।

अवैधव्याशिषस्ते तु सावित्र्यर्थे हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवननिवासिनः ॥ १२
एवमस्त्विति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात्तपस्विनाम् ॥ १३
तं कालं तं मुहूर्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्तं नारदवचश्चिन्तयन्ती सुदुःखिता ॥ १४
ततस्तु श्वश्रूश्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ॥ १५

श्वश्रूश्वशुरावूचतुः—

व्रतं यथोपदिष्टं तु तथा तत्पारितं त्वया ।
आहारकालः संप्राप्तः क्रियतां यदनन्तरम् ॥ १६

---

( १२ ) अवैधव्येति । विधवाया भावो वैधव्य तन्न भवतीत्यवैधव्य तस्य सम्बन्धिनीराशिषः । ऊचुः उक्तवन्तः । दत्तवन्त इति यावत् ।

( १३ ) एवमिति । ध्यानयोगपरायणा ध्यानरूपो योग एव परायण प्रधान आश्रयो यस्यास्तथाभूता प्राधान्येभीष्टाया देवताया ध्यानमेव कुर्वाणेत्यर्थः । ध्यान च यस्मिन्नभीष्टे देवतादौ मन आवध्यते तत्र प्रत्ययैकतानता । तदाह भगवान् पतञ्जलिः 'तत्र प्रत्ययैकतानता ध्यानम' इति । ध्यानस्य योगाङ्गत्वेऽपि योगत्वोक्तिरङ्गाङ्गिनोरभेदोपचारात् । मनसा प्रत्यगृह्णात् प्रतिगृहीतवती स्वीकृतवतीत्यर्थः । मनःशब्दश्चात्राकृत्रिमत्वं बुद्धिपूर्वत्व वा स्वीकारस्याभिद्योतयति । एवंविध एव हि स्थले करणतयोपन्यस्यते मनोवाची शब्दः । यथा 'हृदयेनाभ्यनुज्ञातो यो धर्मस्त निबोधत' इति मनुः ।

( १४ ) तमिति । त सत्यवन्निधने हेतुभूत काल समय तत्र च त नारदनिर्दिष्टं मुहूर्तं घटिकाद्वितय प्रतीक्षन्ती प्रतीक्षमाणेत्यर्थः । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदे लटः शता । 'उगितश्चे' ति ङीप् । नारदवचः यथोक्त उक्तमनतिक्रम्य वर्तमान, अवश्यम्भावीत्यर्थः । चिन्तयन्ती सती सुदुःखिता बभूवेति शेषः ।

(१५) तत इति । एकान्त आस्थिता आश्रितवतीम् । एष हि मनस एकतानतार्थमाश्रयणीयो भवतीति । भरतसत्तम भरतकुलोत्पन्नेषु श्रेष्ठ युधिष्ठिर !

( १६ ) व्रतमिति । यथा उपदिष्टं उक्त तथा तेन प्रकारेण तत् पारित समापितम् । आहारकालो भोजनसमयः । व्रतपारणाकाल इत्यर्थः । संप्राप्तः ततो यत् अनन्तर करणीयमिति शेषः । तदिति यच्छब्दयलाल्लभ्यम् । भोजनमिति भाव । क्रियताम् ।

सावित्र्युवाच—

अस्तं गते मयाऽऽदित्ये भोक्तव्यं कृतकामया ॥ १७
एष मे हृदि संकल्पः समयश्च कृतो मया

मार्कण्डेय उवाच—

एवं संभाषमाणायाः सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान्प्रस्थितो वनम् ॥ १८
सावित्री त्वाह भर्तारं नैकस्त्वं गन्तुमर्हसि ।
सह त्वया गमिष्यामि न हि त्वां हातुमुत्सहे ॥ १९

सत्यवानुवाच—

वनं न गतपूर्वं ते दुःखः पन्थाश्च भाविनि ।
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ॥ २०

सावित्र्युवाच—

उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न माऽर्हसि ॥ २१

(१७)अस्तमिति । आदित्ये रवौ अस्त गते सति कृतकामया कृतः निर्वर्तितः कामः अभिलषितोऽर्थो यया तथाभूतया भोक्तव्यम् । सङ्कल्पो विचार इत्यर्थः । समयः प्रतिज्ञा ।

( १८ ) एवमिति । सावित्र्याः भोजन प्रति भोजनविषये एव सभाषमाणायाः सत्याः । आर्षत्वादनादराभावेऽपि षष्ठी । सत्यवान् स्कन्धे भुजशिरसि परशु कुठार आदाय गृहीत्वा । आधायेति पाठ साधुः । विनिधायेत्यर्थः । वन प्रस्थितः विनिर्गतः ।

( १९ ) सावित्रीति । तु किन्तु । आह ब्रवीति उक्तवतीत्यर्थः । एकः असहायः । गमिष्यामि आगमिष्यामीत्यर्थः । उपसर्गाणा द्योतकत्वात् । हि यस्मात् त्वां हातु त्यक्तु नोत्सहे ।

(२०) वनमिति । ते त्वया वन न गतपूर्वं पूर्वं न गतम् । 'भूतपूर्वे चरडि'ति निर्देशात्साधु । पन्थाः मार्गश्च दुःखो दुःखहेतुः । च किंच व्रतोपवासक्षामा व्रतस्य संबन्धिना उपवासेन भोजननिवृत्त्या क्षामा क्षीणतामाप्ता दुर्बलीभूतेत्यर्थः । क्षामेति 'क्षायो म' इति निष्ठायां तो मः । 'क्षाम क्षामकपोलमाननमि' ति शकुन्तला । पद्भ्या चरणाभ्या कथ गमिष्यसि । वनगमनस्यानभ्यस्तत्वात्तत्र च पथो दुःखकरत्वात्तत्रापि च तवोपवासक्षामत्वाद्दशास्य गमनामिति भावः ।

( २१ ) उपवासादिति । उपवासात् भोजनाभावाद्धेतुभूतात् मे ग्लानिः दौर्बल्यकम्पकार्यानुत्साहादिप्रयोजको धर्मः न नास्ति । उक्ता किल ग्लानिः दर्पणे विश्वनाथेन 'रत्यायासमनस्तापक्षुत्पिपासादिसंभवा । ग्लानिर्निष्प्राणताकम्पकार्यानुत्साहतादिकृत् ॥' इति । परिश्रमः वनगमनजन्यो नास्ति न भविष्यतीत्यर्थः । वर्तमानसामीप्ये भविष्यति लट् । मा मा प्रतिषेद्धु निषेद्धु नार्हसि ।

1 समाषमाणाया सावित्र्या ( ख )

सत्यवानुवाच—

यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।
मम त्वामन्त्रय गुरू न मां दोषः स्पृशेदयम् ॥ २२

मार्कण्डेय उवाच—

साऽभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
अयं गच्छति मे भर्ता फलाहारो महावनम् ॥ २३
इच्छेयमभ्यनुज्ञाता आर्यया श्वशुरेण ह ।
अनेन सह निर्गन्तुं न मेऽद्य विरहः क्षमः ॥ २४
गुर्वग्निहोत्रार्थकृते प्रस्थितश्च सुतस्तव ।
न निवार्यो निवार्यः स्यादन्यथा प्रस्थितो वनम् ॥ २५
संवत्सरः किंचिदूनो न निष्क्रान्ताऽहमाश्रमात् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे ॥ २६

( २२ ) यदीति । प्रिय वननयनरूपमिष्टमर्थं करिष्यामि । गुरू मातापितरौ । ' त्रयः पुरुषस्यातिगुरवो भवन्ति । माता पिता आचार्यश्च । ' इति विष्णुः । आमन्त्रय आपृच्छस्व । मन्त्रयतेराङ्पूर्वकस्यानुदात्तेत्त्वेनात्मनेपदस्यावश्यकत्वेऽपि निवृत्तप्रेषणात्पुनर्णिचि णिचश्चेति परस्मैपदमपि । किमर्थमेतावदित्याह नेति । अयं उपोषितायाः वननयनरूपो दोषः मां न स्पृशेत् मयि न सङ्क्रामतु। ताभ्यां ह्यनुज्ञाते नाहं दोषभाग् भविष्यामीत्यर्थः ।

( २३ ) सेति । महाव्रता महत् व्रतं नियमो यस्यास्तथाभूता । वचनमाह अयमिति । फलाहारः गच्छति फलानि आहर्तुं आनेतुं गच्छतीत्यर्थः । आङ्पूर्वाद्धरतेः ' अण् कर्मणि च ' इत्यण् ।

( २४ ) ततः किमित्याह इच्छेयमिति । आर्यया श्वश्रूदेव्या । हकारश्चार्थे अव्ययानामनेकार्थत्वात् । अनेन भर्त्रा सह निर्गन्तु इच्छेयम् । कुत इत्याह नेति । विरहः पतिवियोगः क्षमः सोढुं शक्यः ।

( २५ ) ननु भो अयमेव तावद्विनिवार्यतां वनगमनकामुको भर्तेति चेन्नैतद्युक्तमित्याह गुर्विति । गुर्वग्निहोत्रार्थकृते गुरोः पितुः अग्निहोत्रस्य अग्नौ होमस्य अर्थः कार्यं तस्य कृते तदर्थं समिदाहरणार्थमित्यर्थः । तव सुत इत्यनेन समिदाहरणादेरवश्यकर्तव्यता द्योत्यते । अत एव च न निवार्यो निवारयितुं न योग्यः। अन्यथा कार्यान्तरोद्देशेन प्रस्थाने तु निवार्यः स्यात्।

( २६ ) आत्मनो गमने हेत्वन्तरमाह संवत्सर इति । संवत्सरो वर्षम् किंचित् ऊनः ततः प्रभृतीति शेषः । अहं आश्रमात् न निष्क्रान्ता न बहिर्गता। हिकारश्चार्थेऽवधारणे वा । परं आत्यन्तिकं कौतूहलं कौतुकम् । कौतूहलं च ' रम्यवस्तुसमालोके लोलता स्यात्कुतूहलम् ।' इत्युक्तलक्षणम् । (दर्पणे)। कुसुमितं सञ्जातानि कुसुमानि पुष्पाणि यस्मिंस्तथाभूतम्। तारकादित्वादितच्।

१ गुरून् ( क ) २ अभ्यनुज्ञातमार्ययाः श्वशुरस्य ( च ) ३ न हि मे ( च )

द्युमत्सेन उवाच—

यतः प्रभृति सावित्री पित्रा दत्ता स्नुषा मम ।
नानयाऽभ्यर्थनायुक्तमुक्तपूर्वं स्मराम्यहम् ॥ २७
तदेषा लभतां कामं यथाभिलषितं वधूः ।
अप्रमादश्च कर्तव्यः पुत्रि सत्यवतः पथि ॥ २८

मार्कण्डेय उवाच—

उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥ २९
सा वनानि विचित्राणि रमणीयानि सर्वशः ।
मयूरगणजुष्टानि ददर्श विपुलेक्षणा ॥ ३०
नदीः पुण्यवहाश्चैव पुष्पिताश्च नगोत्तमान् ।
सत्यवानाह पश्येति सावित्रीं मधुरं वचः ॥ ३१

---

( २७ ) यत इति । पित्रा दत्ता सावित्री यतो यस्मात् कालात् प्रभृति मम स्नुषा ततः प्रभृतीति शेषः । अभ्यर्थनायुक्तं वचनमित्यर्थात् । उक्तपूर्वं पूर्वमुक्तं अहं न स्मरामि । एतेन प्रार्थनाया विधानानर्हत्वं द्योत्यते ।

( २८ ) तदिति । तत् तस्मात्कारणात् । वधू स्नुषा सावित्री । ' वधूः स्नुषा नवोढा स्त्रीभार्यास्पृक्काङ्गनासु च ' इति विश्वः । हे पुत्रि स्नुषे ! पथि मार्गे सत्यवतः अप्रमादः अनवधानताभावः सावहितत्वमित्यर्थः । कर्तव्यः त्वयेति शेषः । यथायं मार्गेऽनवहितो न स्यात्तथा विधीयतामिति भावः । चकारस्त्वर्थे ।

( २९ ) उभाभ्यामिति । उभाभ्यां श्वश्र्वा च श्वशुरेण चेति द्वाभ्याम् । विदूयता प्रत्यासन्नत्वात्सत्यवतो मरणस्य विशेषतो दूयमानेन । आर्षं परस्मैपदम् । हृदयेन उपलक्षिता सत्यपि । उपलक्षणे तृतीया । दूयमानहृदयापीत्यर्थः । हसन्तीव पत्युः परितोषायेति भावः ।

( ३० ) सेति । विचित्राणि विशेषत आश्चर्यजनकानि । हेतुहेतुमतोरभेदात् । सर्वशः सर्वत्र । मयूरगणजुष्टानि मयूराणां गणैः सेवितानि । तद्युक्तानीत्यर्थः । मयूररवघुष्टानीति पाठे मयूराणां रवैः शब्दैर्घुष्टानि नादितानीत्यर्थः । विपुलेक्षणा स्थूलनेत्रा ।

( ३१ ) नदीरिति । सत्यवान् कर्ता पुण्यवहाः पुण्यः पवित्रो वहः प्रवाहो यासां तथाभूता नदीः कर्मभूताः । पुष्पितान् संजातपुष्पान् तारकादित्वादितच् विकसितान्वा । पुष्प विकसने इत्यतो दैवादिकान्निष्ठा । नगोत्तमान् उत्तमान् वृक्षान् । ' शैलवृक्षौ नगावगौ ' इत्यमरः । ' नगोऽप्राणिष्वन्यतरस्याम् ' इति निपातनात्साधुः । पश्य इति मधुरं वचः आह ब्रवीति अवोचदिति यावत् ।

---

१ यदा ( क ) २ रवघुष्टानि ( ख ) मधुरस्वरः ( ख )

निरीक्षमाणा भर्तारं सर्वावस्थमनिन्दिता।
मृतमेव हि तं मेने काले मुनिवचः स्मरन् ॥ ३२
अनुव्रजन्ती भर्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥ ३३
इति श्रीमन्महाभारत आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
सावित्र्या वनगमने पञ्चनवत्यधिकद्विशततमोऽध्याय. ।

## षण्णवत्यधिकाद्विशततमोऽध्यायः ।



मार्कण्डेय उवाच—
अथ भार्यासहायः स फलान्यादाय वीर्यवान् ।
कठिन पूरयामास तत काष्ठान्यपाटयत् ॥ १
तस्य पाटयत. काष्ठं स्वेदो वै समजायत ।

( ३२ ) निरीक्षमाणेति । सर्वावस्थ सर्वा अवस्था यस्मिन्कर्मणि तद्यथा तथा भर्तार निरीक्षमाणा । सर्वै. प्रकारैर्निरीक्षमाणेत्यर्थ । काले तास्मिन्समये मुनिवचो नारदस्य मुनेर्वचन स्मरन् स्मरन्तीत्यर्थ । उगितश्चेति ङीपोऽभाव आर्ष. । मृतमेव मेने मरणकालस्यात्यन्तमेव सन्निहितत्वान्मुनेश्च वचनस्यान्यथाभावित्वादिति भाव ।

(३३) अनुव्रजन्तीति । मृदु अनुद्धत गतु शील यस्यास्तथाभूता सावित्री भर्तार अनुव्रजन्तीति अनुगच्छन्ती इवेति गम्यम् । मृत मेन इति हि प्रागुक्त ततश्च सावित्र्या गमनमनुगमनत्वेनोत्प्रेक्ष्यते । हृदय द्विधा द्विप्रकार विदीर्णमिति यावत् कृत्वा अत्र हेतुमाह तमिति । त भर्तुर्निधने प्रयोजकीभूत काल अवेक्षती पुरत पश्यन्तीव । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदे शतर्युगितश्चेति ङीप् । आगमशास्त्रस्यानित्यत्वान्न नुम् ।

इति श्रीसावित्र्युपाख्यानव्याख्यायां बालबोधिन्यां पञ्चनवत्यधिकद्विशततमोऽध्याय ।

(१) अथेति । भार्यासहाय भार्या सहाया साहाय्यकर्त्री यस्य तथाभूतः सम्मार्गाद्वितीय इत्यर्थं । स सत्यवान फलानि आदाय अवचित्य गृहीत्वा कठिन स्थाली 'तरोऽपि' इति महाराष्ट्रया ख्याताम् 'कठिनमपि निष्ठुरे स्यात्स्त्रीपेऽपि पिठु नपुसक स्थालयाम् ।' इति मेदिनी । काष्ठानि इन्धनार्थानि अपाटयत् विदारयामास । 'कठिन [illegible]' इति चतुर्भुज. ।

(२) तस्येति । काष्ठ एकवचनमिति गम्यते । अत एव च स्वेदस्य निर्हेतुकत्वात्[illegible] । स्वेदो धर्म समजायत सञ्जात ( अतिशयेनेति यावत् ) [illegible] । एतेन [illegible] । [illegible] निद्रानागमनविशोषि

व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ।
सोऽभिगम्य प्रियां भार्यामुवाच श्रमपीडितः ॥ २

सत्यवानुवाच—

व्यायामेन ममानेन जाता शिरसि वेदना ।
अङ्गानि चैव सावित्रि हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ॥ ३[1]
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम्[2] ।
तत्स्वप्तुमिच्छे कल्याणि न स्थातुं शक्तिरस्ति मे ॥ ४
सा समासाद्य सावित्री भर्तारमुपगम्य च ।
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥ ५
ततः सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्तं क्षणं वेलां दिवसं च युयोज ह ॥ ६

' यस्य *** अतिस्वेदोऽतिस्तम्भो विगतमांसशोणितेष्विव च सः ( स मुमूर्षुः ) ' इति ( शारीर १० अ. ) । तेन एककाष्ठविपाटनजन्येन व्यायामेन श्रमेण । शिरसि वेदना जज्ञे समुत्पन्ना । प्रियां भार्यां सावित्रीम् ।

(३) व्यायामेनेति । अङ्गानि अवयवा दूयन्त इति विपरिणामेन योजना दूयति दूयते परितप्यते । आर्षं परस्मैपदम् । दूङ् परिताप इत्यतो लट् । अस्वस्थ स्वास्थ्यशून्यमिव । हे मितभाषिणि मित परिमित भाषितु शील यस्यास्तथाभूते ।

( ४ ) शूलैरिति । इद शिर. शूलैर्विद्ध इव संलक्षयामि पश्यामि मन्य इत्यर्थः । तत् तस्मात् स्वप्तु शयितुम् इच्छे इच्छामि । आर्षमात्मनेपदम् । शयने हेतुमाह नेति ।

( ५ ) सेति । सा पतिसेवापरायणा सावित्री भर्तारं आसाद्य उपलभ्य तथाविधावस्थ ज्ञात्वेत्यर्थः । सर्वे गत्यर्था ज्ञानार्था इति वचनात् । उपगम्य समीपे गत्वा उत्सङ्ग आत्मनोऽङ्के अस्य पत्युः शिर कृत्वाऽवस्थाप्येत्यर्थः । करोतेः क्रियासामान्यार्थत्वात् । अत एव च किं करोति ? पचतीत्यादौ सामानाधिकरण्यम् । निषसाद उपविष्टवती ।

( ६ ) तत इति । तपस्विनी भर्तुस्तादृगवस्थागतत्वेनानुकम्पनीया तपोविशिष्टा वा । ' तपस्वी तापसे चानुकम्प्ये त्रिषु ' इति मेदिनी । नारदवचः अमुकस्मिन्दिवसे सत्यवान्देहन्यास करिष्यतीत्येवरूप । विमृशन्ती विचारयन्ती । त तदानीं वर्तमान मुहूर्तं घटिकाद्वय तत्र च क्षण मुहूर्तस्य द्वादशांश वेला पूर्वापराह्णादिरूप काल दिवस च युयोज ह मेलयामास । युजिरत्रान्तर्भावितण्यर्थः । मेलन च गणनादिभिस्तदेवेदमिति निर्धारणम् ।

१ नेदं कचपुस्तकयोर्दृश्यते । २ जज्ञे (च) ३ दह्यतीव ( च ) ४ अतः परं, भ्रमन्तीव दिशः सर्वाश्चक्रारूढं मनो मम । इत्यधिकं कपुस्तके ५ समासाद्याथ (च) ६ अतःपरं 'इन्त प्राप्तः स कालोऽयमिति चिन्तापरा सती॥' इत्यधिकं कपुस्तके

मुहूर्तादेव चापश्यत्पुरुषं रक्तवाससम् ।
बद्धमौलिं वपुष्मन्तमादित्यसमतेजसम् ॥ ७
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥ ८
तं दृष्ट्वा सहसोत्थाय भर्तुर्न्यस्य शनैः शिरः ।
कृताञ्जलिरुवाचार्ता हृदयेन प्रवेपती ॥ ९

सावित्र्युवाच—

दैवतं त्वाभिजानामि वपुरेतध्यमानुषम् ।
कामया ब्रूहि देवेश कस्त्वं किं च चिकीर्षसि ॥ १०

यम उवाच—

पतिव्रताऽसि सावित्रि तथैव च तपोन्विता ।
अतस्त्वामभिभाषामि विद्धि मां त्वं शुभे यमम् ॥ ११

---

( ७–८ ) मुहूर्तादिति । युग्मकमेतत् । रक्तवासस रक्त रक्तवर्णं वासो वस्त्र यस्य तथाभूतम् । बद्धमौलिं बद्धो मौलिः शिखा येन तथाभूतम् ।'मौलिः किरीटे धम्मिल्ले चूडायामनपुंसकम् ' इति मेदिनी । वपुष्मन्त प्रशस्त वपुः *शरीरमस्त्यस्य तथाभूतम् । प्राशस्त्ये मतुप् । श्यामावदात श्यामश्चासौ अव-*दातः शुभ्रश्च तम् । वर्णो वर्णेनेति समासः । श्याममिश्रशुभ्रवर्णमित्यर्थः । पाशहस्तं पाशो बन्धनरज्जुर्हस्ते यस्य तथाभूतम् । सत्यवतः पार्श्वे समीपे स्थित त सत्यवन्तमेव च निरीक्षन्त पश्यन्तम् । अनुदात्तेत्त्वलक्षणस्यात्मनेपद-स्यानित्यत्वेन परस्मैपदे लटः शता । पुरुषश्चाय यम इत्युत्तरत्र स्फुटीभविष्यति ।

( ९ ) तमिति । त पुरुष ( यमं ) सहसा युगपत् दिव्यतेजोऽवलोकनेन संभ्रान्तत्वादिति भावः । भर्तुः शिरः स्वाङ्कस्थ शनै आघातभियेति भावः । न्यस्य भूमौ निधाय आर्ता पीडिता । हृदयेन मनसा । प्रकृत्यादित्वात्तृतीया । प्रवेपती अत्यन्त कम्पमाना। अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदे लटः शता । आगमशास्त्रस्यानित्यत्वान्न नुम् । वेपमानहृदयेत्यर्थः । भियेति भावः । कृताञ्जलिर्बद्धाञ्जलिः सती उवाच ।

( १० ) वचनमाह । त्वा त्वा दैवत अभिजानामि जानामि सभावया-मीति यावत् । अभिरत्र धात्वार्थानुवर्ती । कुत एवमित्याह वपुरिति । हि एतत् पुरो दृश्यमान भवदीय वपुः शरीर अमानुष मानुष मनुष्यसंबन्धि न भवति तथाभूतम् । दिव्यमित्यर्थः । कामया इच्छया । हेतौ तृतीया । यस्मादहमिच्छामि तस्मादित्यर्थः । ब्रूहि ।

( ११ ) पतिव्रतेति । तपोऽन्विता तपसा युक्तासि अतः अस्माद्धेतोः । न ह्यपुण्येन सहास्मदृशा सल्लापयोग इति भावः । अभिभाषामि वदामि । प्रत्युत्तरयामीति यावत् । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । हे शुभे कल्याणि त्व मा यम विद्धि जानीहि ।

---

१ नेद वचपमवया' । २ अभिजानामि ( घ )

अयं ते सत्यवान्भर्ता क्षीणायुः पार्थिवात्मजः ।
नेष्यामि तमहं बद्ध्वा विध्येतन्मे चिकीर्षितम् ॥ १२

सावित्र्युवाच—

श्रूयते भगवन्दूतास्तवागच्छन्ति मानवान् ।
नेतुं किल भवान्कस्मादागतोसि स्वयं प्रभो ॥ १३

मार्कण्डेय उवाच—

इत्युक्तः पितृराजस्तां भगवान्स्वचिकीर्षितम् ।
यथावत्सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥ १४
अयं च धर्मसंयुक्तो रूपवान्गुणसागरः ।
नार्हो मत्पुरुषैर्नेतुमतोस्मि स्वयमागतः ॥ १५
ततः सत्यवतः कायात्पाशबद्धं वशंगतम् ।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ १६

( १२ ) एवं 'कस्त्वं' मित्यस्योत्तरमाख्याय 'किं चिकीर्षसी' त्यस्योत्तरमाह । अयमिति । पार्थिवात्मजः पृथिव्या ईश्वरस्य राज्ञो द्युमत्सेनस्य पुत्रः । क्षीणायुः क्षीणं विनष्टं आयुर्जीवनकालो यस्य तथाभूतः । अत इति शेषः । एतत्सत्यवतो नयनं मे चिकीर्षितं कर्तुमिष्टम् ।

( १३ ) श्रूयत इति । हे भगवन् पूज्य यम । तव दूता आगच्छन्ति न तु साक्षात् त्वमिति भावः । एवं सति भवान् स्वयं कस्मादागतः असि । मध्यमः पुरुष आर्षः । युष्मदस्मद्भिन्नकर्तृकतया प्रथमपुरुषस्यैव युक्तत्वात् ।

( १४ ) इतीति । इति एवं प्रकारेण उक्तः पृष्ट इत्यर्थः । पितृराजः पितॄणां राजा यमः । 'धर्मराजः पितृपतिः' इति यमपर्यायेष्वमरः । तथावत् यादृशमासीत्तादृशमित्यर्थः । तत्प्रियार्थं तस्याः सावित्र्याः प्रियार्थं, प्रचक्रमे आरब्धवान् । क्रमेर्लिट् । 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम् ।

( १५ ) अयमिति । चकारोऽवधारणार्थः रूपवान् सौन्दर्यशाली गुणसागरः गुणानां सागर इव अयं सत्यवान् धर्मसंयुक्तः धर्मेण सम्यक् संबद्धः मत्पुरुषैर्नेतुं नार्हः अतो हेतोः स्वयमागतोऽस्मि ।

( १६ ) तत इति । ततः एववचनानन्तरम् । यमः सत्यवतः कायाच्छरीरात् वशं गतं आयत्तीभूतं पाशबद्धं अङ्गुष्ठमात्रं अङ्गुष्ठपरिमितम् । प्रमाणे मात्रच् । पुरुषं पुरी शरीरे शेते पुरुः वसति पुरुषो लिङ्गशरीरावृतो जीव इत्यर्थः । सदावृतस्यैव हि तस्य पारलौकिकफलभोक्तृत्वं प्राहुः । यः किल म्रियते तत्सदृशाकारः कोपि चेतन ऊर्ध्वं प्रयातीत्याधुनिका अपि पाश्चात्त्या वैज्ञानिका आचक्षते । यथा चैतत्तथा सप्रपञ्चं प्रतिपादितं संस्कृतचन्द्रिकायामस्माभिः । विस्तरभिया तु नात्र शक्यते प्रपञ्चयितुम् । निश्चकर्ष आकृष्टवान् । आकृष्य शरीराद्बहिश्चकारेत्यर्थः ।

१ इत आरभ्य त्रयोदशश्लोकान्तं मावचकपुस्तके नास्ति । २ उक्त्वा ( च )

ततः समुद्धृतप्राणं गतश्वासं हृतप्रभम् ।
निर्विचेष्टं शरीरं तद्बभूवाप्रियदर्शनम् ॥ १७
यमस्तु तं ततो बद्ध्वा प्रयातो दक्षिणामुखः ।
सावित्री चैव दुःखार्ता यममेवान्वगच्छत ।
नियमव्रतसंसिद्धा महाभागा पतिव्रता ॥ १८

यम उवाच—

निवर्त गच्छ सावित्रि कुरुष्वास्यौर्ध्वदैहिकम् ।
कृतं भर्तुस्त्वयाऽऽनृण्यं यावद्गम्यं गतं त्वया ॥ १९

( १७ ) तत इति । समुद्धृतप्राणं समुद्धृतः प्राण उपरिनिर्दिष्टोऽङ्गुष्ठसंमितः पुरुषो यस्मात्तथाभूतम् । एष एव हि हृदयमधिष्ठितः शरीरं चेष्टयति ' ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया । ' इति गीता । अतोऽङ्गुष्ठमानः 'अङ्गुष्ठमात्रः पुरुषो हृद्देशे यः प्रतिष्ठितः । ' इत्यन्यत्र । हृतप्रभं हृता नष्टा प्रभा कान्तिर्यस्य तथाभूतम् । निर्विचेष्टं निर्गता विचेष्टा चलनादि व्यापारो यस्मात्तथाभूतं अप्रियदर्शनं अप्रियं प्रीतेरविषयो दर्शनं साक्षात्कारो यस्य तथाभूतम् । अनाह्लादकमित्यर्थः।

(१८) यम इति । ततः यमः तं सत्यवन्तम् । दक्षिणामुखः दक्षिणस्यां मुखं यस्य तथाभूतः सन् । दक्षिणदिगभिमुखः सन्नित्यर्थः । नियमव्रतसंसिद्धा नियमैः शौचसंतोषादिभिः व्रतैः चान्द्रायणादिभिश्च हेतुभूतैः संसिद्धा सम्यक्सिद्धिं प्राप्ता । सिद्धयश्च ' अणिमा महिमा चैव गरिमा लघिमा तथा । प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्ट सिद्धयः । ' इत्युक्ताः । नियमव्रता व्रतेन त्रिदिनात्मकेनानुष्ठितेन संसिद्धेति वा योजनीयम् । एतच्च यमानुगमने सामर्थ्यमभिद्योतयति । महाभागा महान् भागो दैवं यस्यास्तथाभूता । एतेनास्या वैधव्यस्याननुभवनीयत्वं द्योत्यते । दुःखार्ता दुःखेन पीडिता सती । अन्वगच्छत अनुसृत्य गतवती । आर्षमात्मनेपदम् ।

( १९ ) निवर्तेति । निवर्त परावर्तस्व । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । अस्य सत्यवतः और्ध्वदैहिकं देहादूर्ध्वं ऊर्ध्वदेहः राजदन्तादित्वात् साधुः । तस्मिन् भवं और्ध्वदैहिकम् । अध्यात्मादित्वाट्ठञ् । अनुशतिकादित्वादुभयपदवृद्धिः । प्रेतमुद्दिश्य मरणदिनमारभ्य सपिण्डीकरणपर्यन्तं प्रत्यहं क्रियमाणः क्रियाकलाप और्ध्वदैहिकपदवाच्यः । ' मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम् । ' इत्यमरः । त्वया कर्त्री भर्तुः पत्युः संबन्धि आनृण्यं नास्ति ऋणं यस्या साऽनृणा तस्या भाव आनृण्यं तत् । प्रणयोपकारादिरूपं यदृणतुल्यं पत्युः सकाशात्प्राप्तं तत्तदीयसेवानुगमनादिना प्रतिनिर्यातितमित्यनृणासीत्यर्थः । यावत् गम्यं गन्तुं शक्यं तावत् त्वया गतम् अयमप्यानृण्येऽन्यतमो हेतुः ।

१ अतः परं ' भर्तुः शरीररक्षां च विधाय हि तपस्विनी । भर्तारमनुगच्छन्ती तथावस्थं सुमध्यमा । ' इत्यधिकं क.पुस्तके ।

सावित्र्युवाच—

यत्र मे नीयते भर्ता स्वयं वा यत्र गच्छति ।
मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥ २०
तपसा गुरुभक्त्या च भर्तुः स्नेहाद् व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः ॥ २१
प्राहुः साप्तपदं मैत्रं बुधास्तत्त्वार्थदर्शिनः ।
मित्रतां च पुरस्कृत्य किंचिद्वक्ष्यामि तच्छृणु ॥ २२
नानात्मवन्तस्तु वने चरन्ति धर्मं च वासं च प्रतिश्रयं च ।

( २० ) यत्रेति । यत्र नीयते येन केनापीत्यर्थात् । स्वयं आत्मना स्वेच्छयेत्यर्थः । चकारोऽप्यर्थः । मया च मयापीत्यर्थः । एषः पत्याविनाभावरूपः सनातनः सना सदा भवः सार्वकालिको नित्य इत्यर्थः । सनेति सदार्थेऽव्ययम् । तस्मात् ' सायचिर' मित्यादिना ट्यु' ( तन : ) ।

( २१ ) यावद्गम्य गतमित्यामिहित तत्र यावद्गम्य गन्तु शक्यमित्यर्थात् अतः परं न त्वया गन्तुं शक्यमिति द्योत्यते । तदेतदवबुध्य ततः परत्र गमन आत्मनः सामर्थ्याभाव प्रत्याख्यातुमाह तपसेति । तपसा द्वन्द्वाना सहनेन कृच्छ्रादीना चाचरणेन । ' तपो द्वन्द्वसहन, द्वन्द्वश्च जिघत्सापिपासे शीतोष्णे स्थानासने काष्ठमौन चाकारमौन च व्रतानि चैव कृच्छ्रचान्द्रायणसान्तपनादीनि यथायोगम् ' इति योगभाष्यम् । गुरुभक्त्या गुरूणा सम्बन्धिन्या भक्त्या परेणानुरागेण । ' सा परानुरक्तिरीश्वरे ' इति शाण्डिल्यः । ईश्वर इत्यविवक्षितम् । तेन गुर्वादिष्वपि परोऽनुरागो भक्तिरेव । अत एव च ' पूर्वेष्वनुरागो भक्ति ' रिति केचित् । भर्तु पत्यु स्नेहात्प्रणयात् । व्रतेन समनुष्ठितेन त्रिदिनात्मकेन । प्रसादेन अनुग्रहेण । मे गति गमनशक्तिरित्यर्थः । न प्रतिहता न कुण्ठिता । अत्र सर्वत्र हेतौ तृतीया ।

( २२ ) अत पर स्वाभीष्टसाधनार्थं भगवन्त यम वाचा प्रसादयितुकामा वचन आत्मनोऽधिकारमाह प्राहुरिति । तत्त्वार्थदर्शिनः तत्त्व पारमार्थिक अर्थं धर्मरहस्यरूप द्रष्टु विज्ञातु शील येषा तथाभूता बुधा विद्वासः मैत्र मित्रभावम् । आर्षो भावेऽण् । साप्तपद सप्ताना पदानामिद सप्तभिः पदैर्घटनीयमित्यर्थ । पदशब्दश्चात्र विभक्त्यन्तशब्दवचन चरणविन्यासवचनो वा । सप्तपद चाल्पलक्षकम् । तेन स्तोकेनापि सलापेन स्वल्पेनापि च सहयानेन सख्य घटत इति विदुषा मतमित्यर्थ । एव च त्वया सह कियदपि सल्पितवत्या, कियन्तमपि च पन्थानमतिक्रान्तवत्याः सपज त्वया मे सख्यमिति भाव' । चकारो हेत्वर्थः । अत इत्यर्थ । मित्रता पुरस्कृत्य अग्रे कृत्वा तामनुसृत्येत्यर्थः । अनुगम्यो ह्यनुगन्तुः पुरस्ताद्भवतीति । एतेन श्रवणस्यावश्यकत्व द्योत्यते ।

( २३ ) इह तावत्पत्युः प्रत्याहरणमेव सावित्र्याः परम कार्यम् । तदर्थं

१ परिश्रमं ( क, म )

विज्ञानतो धर्ममुदाहरन्ति तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ २३

च सचेष्टमाना सन्त यम अनुग्रहादिरूप सता धर्ममनुस्मारयन्ती तदालम्बनस्यावश्यकत्वं तत्परित्यागस्य चानर्हत्वमभिद्योतयितुकामा धर्मस्य प्राधान्य सोपपत्तिकमाह । नानेति । नाना अनेकविधाः आत्मवन्तः आत्मा जीवोऽस्त्येषा ते प्राणिनः कर्तार इत्यर्थः । वने अरण्ये । वन एव निवसन्तः स्मृतिप्रत्युपस्थिततयाऽत्र वनपदोपनिरन्धः । वस्तुतः पुनरविवक्षितमेवेदम् । धर्मं वेदबोधितकर्तव्यताक कर्म वास वसति प्रतिश्रय संश्रय समर्थनामाश्रयमित्यर्थः चरन्ति आचरन्ति आसेवन्त इत्यर्थः । तत्र च धर्मे विज्ञानतः हेतौ पञ्चम्यास्तसिल् । विशिष्टाज् ज्ञानाद्धेतुभूताद् निष्पद्यमानमित्यर्थाच्छेपः। आहुः वदन्ति । तत्त्वविद इति शेषः । तस्मात् हेतोः सन्तो मवादृशा इति भावः । धर्मं प्रधानमाहुः । वासः प्रतिश्रयश्च ज्ञानाज्ञानवत्साधारणः। पश्वादिष्वपि तद्दर्शनात् । धर्मः पुनर्विशिष्टज्ञानसाध्य एवेति स एव प्रधान इति सतामभिप्राय इति भावः । सत्पदेन त्वयापि धर्मप्राधान्यवादिनैव भवितव्यमित्याभिव्यज्यते । अनात्मवन्तः आत्मवन्तो बुद्धिमन्तो न भवन्ति ते न चरन्ति इति वाऽर्थः । धर्मादिचारिणः सर्वेऽपि बुद्धिमन्त एवेति भावः । '‘ज्ञानमस्ति समस्तस्य जन्तोर्विषयगोचरे ’ इत्युक्तेः । सामान्य तु ज्ञान न धर्मनिष्पादकमित्याशयेनोक्त विज्ञानत इति । विज्ञानतो विज्ञानाय मोक्षायेति वा । सार्वविभक्तिकस्तसि । धर्मेणैव हि परम्परया मोक्षो लभ्यत इति । एतेन च पद्येन यो न धर्मस्य प्राधान्यमभिमन्यते नासौ सन् यश्च धर्मं नालम्बते नासौ पश्वाद्यपेक्षया विशिष्टज्ञानसपन्न इति सता भवतापि धर्मावलम्बिना च धर्मप्रधानेन च भवितव्यमन्यथा पश्वादिसाधारण्यापत्तेरित्याभिव्यजते । नीलकण्ठस्तु ‘ अनात्मवन्तोऽजितेन्द्रियाः वने धर्म यज्ञादिरूप न चरन्ति । जितेन्द्रिया एव वने ग्रामे वा यज्ञादीन्स्त्रीसम्बन्धान् धर्मान् कुर्वन्ति। तेन गृहस्थवानप्रस्थयो. सग्रह. । वास गुरुकुलवास ब्रह्मचर्यम् । परिश्रम परित्यागरूपमाश्रम सन्यासम् । पाठान्तरे प्रतिश्रय प्रतिनिवृत्त. श्रयः कर्मफलाश्रयणमत्रेति प्रतिश्रय सन्यासम् । विज्ञानतः । चतुर्थ्यर्थे सार्वविभक्तिकस्तसिः । धर्मस्य फलमात्मविज्ञानामित्यर्थः ’ इति व्याचष्टे । चतुर्भुजस्तु “अनात्मवन्तो बुद्धिरहिताः। धर्मं ब्रह्मचर्यलक्षण वास गार्हस्थ्य” तृतीय वनम् प्रतिश्रय सन्यासम्’ प्रतिनिवृत्त श्रयः सुकर्मफलाश्रयणमत्रेति व्युत्पत्त्या। तदिद चतुष्टयमात्मवन्त एव चरन्तीत्यत्र हेतुमाह ‘विज्ञानतो धर्ममुदाहरन्ती'ति। ज्ञानपूर्वमाचरितमेव धर्मं धर्मं वदन्ति। ‘ज्ञात्वा चानुष्ठानम्’ इति स्मरणात्। तस्माद्धेतो.” इति विवृणोति । न पुनरत्र गार्हस्थ्यादिषु यस्य कस्यापि प्राधान्यमप्राधान्यमपि वा सावित्र्या विवक्षित सा हि पत्यु' प्रत्यादानाय यमस्यानुग्रहमभिलष्यन्ती तत एव च दयानुग्रहप्रभृतीन्सता धर्माननुस्मारयिष्यन्ती तदवलम्बनस्य चावश्यकत्वमव बोधयिष्यन्ती सामान्यतो धर्मस्य प्राधान्यविवक्षया पद्यमिदमाहेति । वास च प्रतिश्रय चेत्यत्र ‘प्रह्वे वा’ इति पिङ्गलसूत्रात् प्रे वा स्वः।

एकस्य धर्मेण सतां मतेन सर्वे स्म तं मार्गमनुप्रपन्नाः ।
मा वै द्वितीयं मा तृतीयं च वाञ्छेत्तस्मात्सन्तो धर्ममाहुः प्रधानम् ॥ ३४ ॥

यम उवाच—

निवर्त तुष्टोस्मि तवानया गिरा स्वराक्षरव्यञ्जनहेतुयुक्तया ।

( ३४ ) पुनरपि च स्थूणानिखननन्यायेन धर्मस्य प्राधान्यमवबोधयति । एकस्येति । सता मतेन सद्भिरभिमतेनेत्यर्थः एकस्य प्रधानपुरुषस्य सबन्धिना धर्मेण हेतुभूतेन सर्वे जनाः त प्रधानपुरुषाचरित मार्गं धर्मरूप श्रेयसः पन्थान अनुप्रपन्ना भवन्तीति शेषः । ' एके मुख्यान्यकेवलाः । ' इत्यमरः । अतः स एक इति शेषः । स एक' प्रधानपुरुष. कर्ता द्वितीय धर्मापेक्षया द्वितीय अर्थरूप पुरुषार्थ तृतीयं कामरूप च पुरुषार्थं मा वाञ्छेत् न कामयेत । सभावनाया लिङ् । विधिरपि व्यज्यते । तस्मात् हेतोः । वाञ्छेदित्यार्षत्वाद्वैकवचनम् । त मार्गमनुप्रपन्ना सर्वे द्वितीय तृतीय च न वाञ्छेयुरित्यर्थः । तस्मात् हेतोः । न खलु कश्चिदश्रेयास पन्थानमाश्रयति । श्रेयोर्थस्यैव प्रयत्नस्य सर्वत्र साक्षात्करणात् । समाश्रयन्ते च विहायार्थादिक प्रधानपुरुषाचरित धर्ममार्गं सर्वेऽपि । तत एव च प्रतीयते धर्मस्य प्राधान्यम् प्राधानपुरुषाचरितत्वाच्च सता सम्मतत्वाच्च । एतेन 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन । स यत्प्रमाण कुरुते लोकस्तदनुवर्तते ॥' इति प्रधानपुरुषस्य ते न न्याय्य. स्वधर्मपरित्यागः समवलम्बनमेव त्वस्यावश्यकमित्यभिव्यज्यते । अत्र नीलकण्ठ " एतेषामाश्रमधर्माणा समुच्चय वारयति । एकस्येति । चतुर्णामन्यतमस्य एकस्याश्रमधर्मेण सता मतेन दम्भादिरहितश्रद्धया सम्यगनुष्ठितेनेत्यर्थ । सर्वं वयमाश्रमा त मार्गं प्रपन्ना. स्म । अतो हेतो अस्मत्सदृशोऽग्निसाध्याना कर्मणा कर्ता धर्म च वास च प्रति श्रय चेतिपाठक्रमापेक्षया द्वितीय नैष्ठिक गुरुकुलवास दाराकरणरूप तृतीय पारिव्राज्य दारादित्यागरूप वा न वाञ्छेत् । ज्ञानहेतो· प्रधानभूतस्य धर्मस्यात्रेपि सिद्धेरित्यर्थः । मद्भर्तुर्हरणेनावयोर्धर्मं मा नाशयेति भावः । ' इति व्याख्यातवान् । चतुर्भुजस्तु " एकस्य चतुर्णामन्यतमस्याश्रमस्य । धर्मेणाचारेण । सर्वेऽन्ये धर्माः तन्मार्गं तस्याङ्गीकृतस्य मार्गं अन्वय. कृत्य प्रपन्ना गुणीभूताः । वै हेतौ । द्वितीय गार्हस्थ्य तृतीय वनवास धर्म स्वाश्रमोदित च प्रधानमाहुः । " इति विवृणोति । सावित्र्याः पुनराश्रमबलाबलप्रतिपादनरूपो धर्मशास्त्रीयो विषयो न प्रतिपिपादयिषित. । अप्रस्तुतत्वात्स्येति नैतदत्र विस्मरणीयम् ।

(२५) निवर्तेति । निवर्त परावर्तस्व प्रतिगच्छेत्यर्थ' । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । स्वराक्षरव्यञ्जनहेतुयुक्तया स्वरा अकारादयोऽक्षराणि कादीनि तेषु व्यञ्जनेन व्यञ्जनावृत्त्यिापारेण द्योतनरूपेण हेतुना आकूतेन च युक्ता तया ।प्रतिस्वर प्रतिव्यञ्जन च्चास्यामुक्तौ साभिप्रायत्व व्यङ्ग्य-

१ वाञ्छे ( क. म. )

वरं वृणीष्वेह विनाऽस्य जीवितं ददानि ते सर्वमनिन्दिते वरम्
सावित्र्युवाच—
च्युतः स्वराज्याद्वनवासमाश्रितो विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान्भवेन्नृपस्तव प्रसादाज्ज्वलनार्कसंनिभः ॥ २६
यम उवाच—
ददानि तेऽहं तमनिन्दिते वरं यथा त्वयोक्तं भविता च तत्तथा ।
तवाध्वना ग्लानिमिवोपलक्षये निवर्त गच्छस्व न ते श्रमो भवेत्
सावित्र्युवाच—
श्रमः कुतो भर्तृसमीपतो हि मे यतो हि भर्ता मम सा गतिर्ध्रुवा ।
यतः पतिं नेष्यसि तत्र मे गतिः सुरेश भूयश्च वचो निबोध मे ॥ २८
सतां सकृत्संगतमीप्सितं परं ततः परं मित्रमिति प्रचक्षते ।

विशिष्टत्व चेति भावः । गिरा वाचा तुष्टोऽस्मि अत इति शेषः । अस्य सत्यवतो जीवितं विना वरं अभ्यर्थनीयमर्थं वृणु याचस्व । ते तुभ्यम् ।

(२६) पत्या पाणौ गृहीतायाः साध्व्याः श्वशुरकुलस्यैवात्मीयत्वेनाभ्यर्हितत्वात्तस्यैवादितोऽभ्युदयमभ्यर्थयते च्युत इति । मम श्वशुरः स्वराज्यात् च्युतो भ्रष्टः वनवासमाश्रितः समाश्रितवान् सन् आश्रमे अस्तीति शेषः । स तव प्रसादादनुग्रहात् लब्धचक्षुः लब्धे चक्षुषी येन तथाभूतः बलवान् शत्रुपराजयसामर्थ्यविशिष्टो नृपो राजा ज्वलनार्कसंनिभः ज्वलनस्याग्नेः अर्कस्य सूर्यस्य च संनिभस्तुल्यः कान्त्या तेजसा चेति भावः । भवेत् प्रार्थनायां लिङ् ।

(२७) ददानीति । ददानि दद्याम् । विधौ लोट् । त्वया यदिति तच्छब्दबलाल्लभ्यम् । यथया उक्तं तत्तथा भविता भविष्यतीत्यर्थः । अध्वना मार्गेण मार्गस्याक्रमणेन गमनेनेत्यर्थः । ग्लानिं दौर्बल्यम् 'ग्लानिर्निष्प्राणता कम्पकार्यानुत्साहतादिकृत् ।' इत्युक्तेः । उपलक्षये पश्यामि । निवर्त अनुगमनतो निवृत्ता भव । पूर्ववत्परस्मैपदम् । गच्छस्व । आर्षमात्मनेपदम् ते तव । श्रममात्रफलकोऽयं मदनुयानव्यापार इति विरम्यतामस्मादिति भावः ।

(२८) श्रमस्यात्मनि सत्ताया असम्भवमाह श्रम इति । भर्तृसमीपतः पत्युः समीपे । सप्तम्यर्थे सार्वविभक्तिकस्तसिः । मे श्रमः कुतः कस्मात्कारणाद्भविष्यतीति शेषः । न कुतोऽपीति भावः । कुतो भर्तुः समीपे श्रमाभाव इत्याह यत इति । हि त्ववधारणे । यतो यस्मात् कारणात् मम भर्ता हि पतिरेव सा सुप्रसिद्धा ध्रुवा अविनश्वरी मोक्षादिरूपा गतिः। अतो यदर्थं चेष्टितव्यं तत्सांनिध्ये क इव श्रमसंभव इति भावः। ननु भो अशक्यमतः परं त्वया गन्तुमिति चेत् तदपि नास्तीत्याह यत इति । यतो यस्मिन् प्रदेशे । सप्तम्यर्थे तसिः । तत्र मे गतिः गमनं भविष्यतीति शेषः । भूयश्च पुनरपि । निबोध शृणु अवधारयेति वा ।

(२९) उक्तधर्मस्य प्राधान्यम् । सम्प्रति सन्तं यमं स्वधर्मे प्रवर्तयितु-

१ ददामि ( च )

सन्तस्ते चाप्यमित्रेषु दयां प्राप्तेषु कुर्वते ॥ ३५

यम उवाच—

पिपासितस्येव भवेद्यथा पयस्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं वरं वृणीष्वेह शुभे यदिच्छसि ॥ ३६

सावित्र्युवाच—

ममानपत्यः पृथिवीपतिः पिता भवेत्पितुः पुत्रशतं तथौरसम् ।

---

लोको मृत्युलोकः । 'अय लोको न पर इति मानी पुनः पुनर्वशमापद्यते मे ।' इति कठवल्ली । तेन सत्यवतो मरण नाश्चर्यमिति भावः । ये भक्तिपेशलाः भक्तौ पूज्येष्वनुरागे पेशला दक्षास्त एव मनुष्याः । नैव तु तदितर इति भावः । पूज्येष्वनुरागविधान किल प्रधान लक्षण मानुषत्वस्येति भावः । 'अपशवो वा एते गवाश्वादिभ्य' इत्यत्र यथा गवाश्वाभिन्नेषु पशुत्वाभावोक्तिर्गवाश्वयोः प्रधानत्वाख्यानायैवमेवात्रापि भक्तिपेशलभिन्नेष्वमनुष्यत्वोक्तिरिति द्रष्टव्यम् । तेन ममापि त्वद्भक्त्यनुष्ठानं नाश्चर्यमिति भावः । च किंच ये प्राप्तेषु समीपमुपागतेषु शरण प्रपन्नेष्वित्यर्थः । अमितेष्वपि मित्रभिन्नेषु उदासीनेष्वरिष्वपि या दया कृपा कुर्वते ते त एव सन्तः सत्पुरुषाः । तव त्वह मित्रमिति प्रागेवोपपादितम् । ततश्च मयि ते दयापि नाश्चर्यायेति भावः । एव च यद्यपि मरणधर्मत्वान्मृतः सत्यवांस्तथापि भक्ताया मय्यवश्य विधीयतां दया सता भवतेति गम्यते । 'पेशलो रुचिरे दक्ष' इति मेदिनी ।

(३६) पिपासितस्येति । इवकारोऽत्र सिद्धाप्रयोग. । यथा पिपासितस्य तृष्णावतः । 'उदन्या तु पिपासा तृट्' इत्यमरः । पिबते' सन्नन्तान्निष्ठा । पिपासाशब्दाद्वा तारकादित्वादितच् । यथा पयो जल भवेत् तथा तादृशं तृप्तिकरमित्यर्थः । इद पूर्वोक्तं वाक्य पदसमूहः समीरित उक्तम् । सदृष्टो हि उदीरयतीत्यत्र वचनार्थे ईरयतिः । उपसर्गस्तु द्योतक एव । 'वाक्य स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः ।' इति विश्वनाथः । वाक्यानामनेकत्वेऽप्येकत्वोक्तिर्महावाक्यत्वाभिप्रायेण । 'वाक्योच्चयो महावाक्यम् ।' इत्युक्तेः । शुभे कल्याणि । एतेन नामङ्गल ते भविष्यतीति व्यज्यते । वरशब्दश्च क्लीबलिङ्गोऽपीत्यवोचाम ।

(३७) प्रार्थितः श्वशुरस्याभ्युदयः । इदानीं पितुरभ्युदयं प्रार्थयते । ममेति । पृथिवीपतिः राजा मम पिता अनपत्यः नास्ति अपत्यं यस्य तथाभूतः अस्तीति शेषः । तथेति हेत्वर्थे निपातानामनेकार्थत्वात् । तस्मादित्यर्थः । पितुः मम जनकस्य औरस 'स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् । तमौरस विजानीयात्' इत्युक्तलक्षणम् । पुत्रशतं भवेत् । यमौरसमिति पाठस्तु साधुः । तथेति पादपूरणे वा । यत् पुत्रशत कुलस्य वंशस्य सन्तानविस्तारकर भवेत् तदिति संबन्धः । एव च पुत्रशतस्यापि पुत्रोत्पत्तिर्भव-

---

१ सन्तस्त्वेवापि मित्रेषु (क. म.) २ यमौरसम् (च)

कुलस्य संतानकरं च यद्भवेत्तृतीयमेतद्वरयामि ते वरम् ॥ ३७

यम उवाच—

कुलस्य संतानकरं सुवर्चसं शतं सुतानां पितुरस्तु ते शुभे ।
कृतेन कामेन नराधिपात्मजे निवर्त दूरं हि पथस्त्वमागता ॥ ३८

सावित्र्युवाच—

न दूरमेतन्मम भर्तृसंनिधौ मनो हि मे दूरतरं प्रधावति ।
अथ व्रजन्नेव गिरं समुद्यतां मयोच्यमानां शृणु भूय एव च ॥ ३९
विवस्वतस्त्वं तनयः प्रतापवांस्ततो हि वैवस्वत उच्यसे बुधैः ।

---

त्वयि प्रार्थितं भवति । एतदिति सामान्ये नपुंसकम् इममर्थमित्यर्थः । ते तव त्वया प्रदीयमानमित्यर्थः । कर्तरि षष्ठी । शेषे वा । त्वा वरयामि प्रार्थय इत्यर्थः ।

( ३८ ) कुलस्येति । सुवर्चसं शोभनं वर्चस्तेजो यस्य तथाभूतम् ।आर्षः समासान्तोऽच् । मया कृतेन कामेन अभिलाषेण हेतुभूतेन । एवमहमिच्छा मीत्यत इत्यर्थः । निवर्त निवर्तस्व । तत्र कारणमाह हीति । हि यतः । पथो मार्गस्य दूरं दूरत्वविशिष्टं भागम् पथो मार्गात् दूरमिति वा । यस्त्वया विशातुं शक्यस्ततो मार्गात्त्व दूरमनुप्राप्तासीत्यर्थः ।

( ३९ ) नेति । मम भर्तृसंनिधौ भर्तुः समीपे वर्तमानाया इति शेषः एतत् स्थानं दूरं न । दूरत्वं च सामीप्यं चेत्येतदपेक्षाकृतमेव । अवधिसापेक्षत्वात् । अहं च भर्तारमेवानयोरवधिमाकलयामि । तेन यद्भर्तुः सकाशाद् दूरं तदेव दूरमिति नैतन्मे दूरमिति भावः । भर्तृसंनिधाविति दूरत्वाभावे हेतुः । हिकारस्त्वर्थे मे मनस्त्वित्यर्थः । दूरतरं अतिशयेन दूरं धावति वेगेन गच्छति । मनोरथपथातीते मृतपतिप्रत्याहरणे प्रविष्टत्वादिति भावः । मनःपदं चात्राभिलाषपरम् । व्रजन्नेव न त्वमरयायेत्यर्थः । एतेन मदीयवचनश्रवणेन नैव ते कार्यव्याघातो भावीति द्योत्यते । समुद्यतां सम्यगुद्यतां नत्वपक्वामिति भावः। एतेनानौचित्यशङ्कापरिहारेण गिरः श्रवणार्हता व्यज्यते । उत्पूर्वस्य यच्छतिरुत्तमनार्थो दृष्टः । दण्डमुद्यच्छतीत्यादौ । स एव च निवृत्तप्रेषण उक्तिवाच्यत्राभिप्रेतः ।

( ४० ) अथेदानीं यमस्य महाकुलीनतां च धर्मपक्षपातितां चोपवर्ण्य तद्विपरीताचरणस्यान्याय्यत्वमभिव्यञ्जयति । विवस्वत इति । प्रतापवान् पराक्रमशाली त्वं विवस्वतः सूर्यस्य तनयः पुत्रः । प्रतापवानिति सूर्यपुत्रत्वे सन्देहाभावमभिद्योतयति । सोऽपि हि प्रतापवान् भवतीति । एतेन महाकुलीनत्वं द्योत्यते । वैवस्वतः विवस्वतः पुत्रः। अपत्यार्थोऽण् । च किं च त्वयेति शेषः । प्रजा लोकाः समेन अविषमेण धर्मेण न्यायेन रञ्जिता अनुरागं प्रापिताः अतो हेतोस्तव धर्मराजता अस्तीति शेषः । राजा प्रकृतिरञ्जनादित्यादौ रञ्जयतेरेव राजशब्दस्य निष्पत्तिमाचक्षते मुनयः । तेन राजशब्दो

---

१ मर्वनमो ( च ) २ जपा ( च ) ३ ह ( च )

समेन धर्मेण च रञ्जिता प्रजास्ततस्तवेहेश्वर धर्मराजता ॥ ४०
आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः ।
तस्मात्सत्सु विशेषेण सर्वः प्रणयमृच्छति ॥ ४१
सौहृदात्सर्वभूतानां विश्वासो नाम जायते ।
तस्मात्सत्सु विशेषेण विश्वासं कुरुते जनः ॥ ४२

यम उवाच—
उदाहृतं ते वचनं यदङ्गने शुभे न तादृक् त्वदृते श्रुतं मया ।
अनेन तुष्टोऽस्मि विनाऽस्य जीवितं वरं चतुर्थं वरयस्व गच्छ च ॥ ४३

रञ्जयितृवाची । पृषोदरादित्वात् साधुः । धर्मेण राजा रञ्जयिता धर्मराज इति । राजाहःसखिभ्य इति समासान्तष्टच् । ईश्वरेति मनोरथस्य सफलीकरणे सामर्थ्यमभिद्योतयति । सर्वोऽपि खल्वात्मनः कुलस्य चाधिकारस्य चानुरूप चेष्टते । त्वं तु महति कुले समुत्पन्नो महति चाधिकारे वर्तमान इत्यावश्यकस्ते कुलाद्यनुरूप आचारः । प्रार्थयितुः प्रार्थनाविघातो मादृश्या वैधव्ये विनिपातन च न ते कुलाद्यनुरूपमिति नैतद्युक्तमिति भावः । उत्तरत्र वक्ष्यमाणस्य विश्वासस्य विघातार्थं चेयं कुलानुस्मारणमयी प्रशंसा ।

( ४१ ) त्वयि नित्य प्रगाढो मे विश्वासो न युक्तो विहन्तुमित्यभिद्योतयितुं सामान्यतः सत्सु विश्वासमुपवर्णयति । आत्मनीति । यः यादृश इत्यर्थः[1] । सत्सु सत्पुरुषेषु विषये विश्वासो लोकानामित्यर्थात् । तथा तादृशः आत्मनि स्वस्मिन्नपि विषये न भवति नोत्पद्यते । इत्येष सामान्यो नियम इति भावः । तस्मात् आत्मापेक्षया सत्सुविषये विश्वासोदयात् । विशेषेण प्रणय विश्वास करोति । विश्वासश्चाय मे मनोरथं पूरयिष्यतीति निश्चयानुगता सभावना । एतेन त्वय्यपि मे स्वापेक्षया विशिष्टो विश्वास इति द्योत्यते । 'प्रणयः प्रसवे प्रेम्णि याञ्चाविस्रम्भयोरपि' इति मेदिनी ।

( ४२ ) कुतश्चायमेतावान्विश्वास इत्याह सौहृदादिति । सर्वभूतानां कर्तरि षष्ठी सकलप्राणिकर्तृक इत्यर्थः विश्वासो नाम सौहृदात् सुहृद्भावात् हेतुभूतात् जायते उत्पद्यते । यः किलात्मनः सुहृद्भवति तत्रैव सर्वोऽपि विश्वसितीत्यर्थः । तस्मात् सुहृद्भावाद्धेतुभूतादित्यर्थः । सन्तो हि सर्वत्रापि सौहार्दमाबध्नन्तीति । एतेन सततस्य सर्वत्रैव मय्यपि सौहार्दमेव न्याय्य नैव तु तद्विपरीताचरण, मम च विपत्त एवात्मापेक्षयापि त्वयि विश्वास इति तद्विघातस्ते कुलस्य चाधिकारस्य चाननुरूप एवेति द्योत्यते ।

( ४३ ) उदाहृतमिति । अङ्गने प्रशस्तान्यङ्गानि सन्त्यस्यास्तथाभूते सौन्दर्यशालिनीत्यर्थः । पामादित्वान्मत्वर्थे प्रशसाया नः । ते त्वया उदाहृतं उक्तम् । तादृक् तादृश त्वदृते त्वा विना । त्वदिति 'अन्यरादि' त्यादिना पञ्चमी । अनेन वचनेन ।

---

१ नरत्ति सा (क. म. न. प.) २ तावान् (प) ३ इत: परम् ग्रंथ चपुस्तके नास्ति ।

सतां सद्भिर्नाफलः संगमोऽस्ति सद्भ्यो भयं नानुवर्तन्ति सन्तः ॥ ४६
सन्तो हि सत्येन नयन्ति सूर्यं सन्तो भूमिं तपसा धारयन्ति ।
सन्तो गतिर्भूतभव्यस्य राजन्सतां मध्ये नावसीदन्ति सन्तः ॥ ४७
आर्यजुष्टमिदं वृत्तमिति विज्ञाय शाश्वतम् ।

---

पत्युः पत्युज्जीवनलक्षणो मयि विधातव्योऽनुग्रहरूपः स्वधर्मस्ते दुर्घट इति मास्म विगलितोत्साहो भूर्मा च व्यथिष्ठा द्योत्यते । आत्मनो मनोरथस्य साफल्य सत्यवन्निधनभीतेरभाव च प्रार्थयमाना पुनः सतामाचारोदाहरणव्याजेनाभीष्टमभिव्यञ्जयति । सतामिति । सता सद्भिः सह सगमः समागमः अफलः फलशून्यः नास्ति न भवति । तेन सत्या मे भवतः समागमो न निष्फलो भवेदिति द्योत्यते । सन्तः कर्तारः सद्भ्यो हेतुभूतेभ्यः भय भीतिं नानुवर्तन्ति नोपगच्छन्ति । एव च अहमपि सतस्त्वत्तो भर्तृवियोगरूप भय नानुविन्देयमित्यभिव्यज्यते । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वाच्चयेश्च वृतेश्च परस्मैपदम् ।

( ४७ ) सामर्थ्योद्बोधनपुरःसर प्रोत्साहयितु सता माहात्म्यमुपवर्णयति सन्त इति । सन्तः कर्तारः सत्येनात्मनाऽऽचरितेन करणभूतेन सूर्यं नयन्ति एकस्माद्देशादपर देश प्रापयन्ति । यत्किल सूर्यः पूर्वस्या दिश्युदितः पश्चिमां दिशमनुप्रयाति तत्र सता सत्यावलम्बनमेव हेतुरिति भावः । अर्थवादोऽयम्-सूर्यनयनरूमशक्यमप्यर्थं घटयन्ति किं पुन. सत्यवज्जीवनादिसदृशमिति भावः । तपसा तपःप्रभावेणेत्यर्थ. भूमिं धारयन्ति अवष्टम्भयन्ति । यदियमन्तरीक्षेऽपि विद्यमाना भूमिर्नाधस्तात्पतति तत्र सता तपसा कृत तदवष्टम्भनमेव हेतुरिति भावः । एव च भुवमप्यध. पातात्परित्रायमाणाना सता कइव मादृशामुद्धारे भार इति भावः । हे राजन् अनुरञ्जयितर्यम । राजशब्दो हि रञ्जयतेर्निष्पन्न इत्युपपादितमेव प्राक् । सन्त. सन्त एव भूतभव्यस्य भूतांना उत्पन्नाना भव्यना भवनार्हाणा उत्पत्स्यमानानामित्यर्थः । एकवचन जात्यभिप्रायेण । गतिः आधारः । एव च ममापि त्वमेवाधार इति गम्यते। सन्तः सता मध्ये वर्तमाना न अवसीदन्ति न क्षीयन्ते । सता समागमोऽवसादाय न प्रकल्पत इत्यर्थः। एव च तव समागममनुप्राप्याह न सत्यवद्वियोगेनावसदेयमिति व्यज्यते। आत्मनः सत्त्वाभिधानाच्चानुग्रहार्हत्व द्योत्यते—

( ४८ ) अथ पुनरपि सदाचारोपदेशव्याजेनात्मनोऽभिलषितस्यार्थस्यानुष्ठानमभिप्रार्थयते । आर्यजुष्टमिति । इद परार्थानुष्ठानरूप वृत्त आचरित शाश्वतं शश्वद्भव सार्वदिक सततमवलम्बनीय नित्यमित्यर्थः । आर्यजुष्टं आर्यैः साधुभिः जुष्ट आसेवित आलम्बितमित्यर्थः । 'आर्यः साधौ सौविदल्ले' इति विश्वः । 'कर्तव्यमाचरन् काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः ॥' इति शब्दस्तोममहानिधिः । इति

---

१ नानुभवन्ति (च) २ भवन्ति सूराः (च) ३ न विषीदन्ति (च)

सन्तः परार्थं कुर्वाणा नावेक्षन्ति परस्परम् ॥ ४८
न च प्रसादः सत्पुरुषेषु मोघो न चाप्यर्थो नश्यति नापि मानः ।
यस्मादेतन्नियतं सत्सु नित्यं तस्मात्सन्तो रक्षितारो भवन्ति ॥ ४९
यम उवाच—
यथा यथा भाषसि धर्मसंहितं मनोनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा वरं वृणीष्वाप्रतिमं पतिव्रते ॥ ५०

---

विज्ञाय सन्तः परार्थं परस्याभीष्टं कार्यं कुर्वाणाः परस्परं अन्योन्यं न अवेक्षन्ति न पश्यन्ति । अन्यनिरपेक्षतया स्वयमेवानुतिष्ठन्ति परार्थं नैव पुनस्त्वयैवायमनुष्ठेय इत्यभिव्यञ्जयितुं परस्परमवेक्षन्त इत्यर्थः । एवं च ममापि मनोरथपूरणे निरलसेनैव भवितव्यं सता भवतेति द्योत्यते ।

( ४९ ) अथ सफलीभावमात्मनो मनोरथस्य कामयमाना सतां वृत्तिवर्णनव्याजेनाभिलषितमात्मीयमभिव्यञ्जयति । नेति । सत्पुरुषेषु सत्सु पुरुषेषु वर्तमानः । प्रसादः प्रसन्नता संतोष इत्यर्थः । मोघः निष्फलः न न भवति । अवश्य ह्यसौ प्रयच्छति फलं किमपीति । उक्तः किल त्वया 'निवर्ततुष्टोऽस्मि तवानया गिरे' ति वदताऽऽत्मवः संतोषः । स तावन्न निष्फलो भवत्विति गम्यते । सत्पुरुषेषु विषये प्रसादः प्रसादनं प्रसादजनकं कर्मेत्यर्थो वा । अयमेव च युक्तः प्रतिभाति तृतीयचरणानुरोधात् । अर्थः सत्पुरुषेषु क्रियमाणा अभ्यर्थना न नश्यति न निष्फलीभवतीत्यर्थः । फलशून्यता ह्यभ्यर्थनाया विनाश इति ' अर्थो विषयार्थनयो.' इति मेदिनी । अपि किं च सत्पुरुषेषु विषये मानो ग्रहः एते मे मनोरथं सफलीकरिष्यन्तीत्येवरूपा संभावनेत्यर्थः । न नश्यति । अभीष्टघटनानवाप्तिश्च तन्नाशः । स न भवतीत्यर्थः । यस्मात् सत्सु विषये एतदुपरिनिर्दिष्टं त्रितयं प्रसादनं चाभ्यर्थनं चाभीष्टघटनं चेत्येतत् त्रिकं पंरप्रयुक्तं अस्ति तस्मात् हेतोः सन्तो रक्षितारो भवन्ति । आत्मानं परित्रातुकामाः किल पुरुषाः सतः प्रपद्य प्रसादयन्ति चाभीष्टं प्रार्थयन्ते च तत्प्राप्तिं च संभावयन्तीति सदृश्यते सततम् । न ह्यरक्षितृष्वेव केपि वर्तेरन् । यतश्च वर्तन्ते ततः प्रतीयते सन्तो रक्षितारो भवन्तीति भावः । एवं चाहमपि सता त्वया वैधव्यदुःखतोऽस्मात्परित्रातव्येति भावः । ' मानश्चित्तोन्नतौ ग्रहे ' इति मेदिनी ।

( ५० ) यथायथेति । धर्मसंहितं धर्मेण संहितं सबद्धं यथातथा सुपदं शोभनानि पदानि यस्मिंस्तथाभूतं यथा तथा हृदयहारिपदन्यासं यथा तथेत्यर्थः। महार्थवत् महान् गंभीर इत्यर्थः अर्थः अभिधेयं अस्त्यस्मिंस्तद्यथा तथा । भाषसि भाषसे । अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम् । त्वयि त्वद्विषये भक्तिः पूज्यत्वानुगतोरागः भवतीति शेषः । अप्रतिमं नास्ति

---

१ परेष्टं ( च ) २ प्रतिक्रिया ( क ) नविश्चन्ने प्रतिक्रियाः ( च )

सावित्र्युवाच—
न तेऽपवर्गः सुकृताद्विना कृतस्तथा यथाऽन्येषु वरेषु मानद ।
वरं वृणे जीवतु सत्यवानयं यथा मृता ह्येवमहं पतिं विना ॥५१
न कामये भर्तृविनाकृता सुखं न कामये भर्तृविनाकृता दिवम् ।
न कामये भर्तृविनाकृता श्रियं न भर्तृहीना व्यवसामि जीवितुं ॥५२
वरातिसर्गः शतपुत्रता मम त्वयैव दत्तो ह्रियते च मे पतिः ।

प्रतिमा सदृश वस्त्वन्तर यस्य तथाभूत वर वृणीष्व स्वीकुरु । अप्रतिममिति सत्यवतः प्रदानमपि शक्यते कर्तुमिति गम्यते । पतिव्रते इति च पतिजीवितायां त्वयि नैव वैधव्यमापातयिष्यामीति द्योत्यते । परमार्थिकी किल पतिव्रतासीति भावः ।

(५१) नेति । हे मानद बहुमानदायिन् यम । एतेन बहुमानितास्मि तवानेन वचनेनेति गम्यते । यथा अन्येषु प्रथमादिचतुर्थान्तेषु वरेषु तथा अस्मिन्वर इति शेषः । अस्मिन्पञ्चमे वर इत्यर्थः । सुकृताद्विना पुण्येन विना । विना शब्दोऽव्ययमभाववाचि । तेन मदीयेन पुण्यस्याभावेनेत्यर्थः । कृतो जनितः अपवर्गः अपवर्जन सत्यवज्जीवितवरणस्य प्रतिषेध इत्यर्थः न नास्ति । न खल्विदानीं वर वृणीष्वेति समादिशता भवता 'विना पुनः सत्यवतोऽस्य जीवितम्' इत्युक्तम । यच्च प्रागुक्त तदपि न स्वीयया बुद्ध्या किन्तु मदीयापुण्यप्रेरितेनैवेति नात्र ते कश्चिद्दोष इति भावः । एष चार्थ उत्तरार्धे हेतुः । तेन च तस्मादित्यर्थात्सत्रध्यते । अय त्वत्समीपे विद्यमानः सत्यवान् जीवतु शरीरेण सयुज्यताम् । यस्माच्छरीरात्त्वयायमुद्धृतस्तेनैव पुनः सयुज्यतामिति भावः । एतच्च जीवतेः प्रयोगेण द्योत्यते । शरीरान्तरसयोगप्रार्थने तु जायतामित्येवावक्ष्यादिति । इत्येत वर वृणे प्रार्थय इत्यर्थः । कुतः प्रार्थ्यते जीवनमेतस्येति चेत् तत्राह यथेति । यथा यस्मात् एव पतिं विना विद्यमाना अह मृतैव मृततुल्यैवेत्यर्थः । प्राणायमानस्य पत्युरभावादिति भावः । अपवर्ग इत्यत्र वृजेर्भावे घञ् ।

(५२) न मे पतिं विनान्यदभीष्टमित्याह नेति । भर्तृविनाकृता भर्त्रा विरहिता सुख न कामये । अत्र करोतेः प्रयोगेण यमे कर्तृत्वारोपात् भर्त्रा विनाकरणमविनाकरणमपि वेदानीं सर्वथा त्वदायत्तमेवेति गम्यते । दिवं स्वर्गम् । भर्तृहीना पतिविरहिता सती जीवितु न व्यवसामि नोत्सहे । व्यवसामीत्यार्षम् । व्यवपूर्वको ह्यन स्यतिरिति । अध्यवस्यतिसमानार्थश्चायमत्र द्योतकत्वादुपसर्गाणाम् । अध्यवसायश्चोत्साहः ।

(५३) आत्मनो वचनमनुपालयितुमपि वा जीवनीय एव सत्यवान् भवतेत्याह । वरातिसर्ग इति । मम शतपुत्रता इत्येतद्रूपः वरातिसर्गः वरदानम् । सृजेर्घञ् । त्वयैव दत्तः कृत इत्यर्थ । प्रयुज्यते हि दानवाचिभ्यः शब्देभ्यः करणार्थ एव ददातिर्दान ददातीत्यादौ । च किंच मे पतिर्ह्रियते ।

१ सुखं (च) २ विनाकृत प्रिय (च) विनाकृता श्रिय (न)

सत्यवानुवाच—

सुचिरं बत सुप्तोस्मि किमर्थं नावबोधितः ।
क्व चासौ पुरुषः श्यामो योसौ मां संचकर्ष ह ॥ ६४

सावित्र्युवाच—

सुचिरं त्वं प्रसुप्तोसि ममाङ्के पुरुषर्षभ ।
गतः स भगवान्देवः प्रजासंयमनो यमः ॥ ६५
विश्रान्तोसि महाभाग विनिद्रश्च नृपात्मज ।
यदि शक्यं समुत्तिष्ठ विगाढां पश्य शर्वरीम् ॥ ६६

मार्कण्डेय उवाच—

उपलभ्य ततः संज्ञां सुखसुप्त इवोत्थितः ।
दिशः सर्वा वनान्तांश्च निरीक्ष्योवाच सत्यवान् ॥ ६७
फलाहारोस्मि निष्क्रान्तस्त्वया सह सुमध्यमे ।
ततः पाटयतः काष्ठं शिरसो मे रुजाऽभवत् ॥ ६८

---

(६४) सुचिरमिति । बतेति खेदे । अवबोधितः प्रबोधितः । योऽसौ यः सः मां संचकर्ष समाकृष्टवान् । आर्षः परोक्षत्वाभावेऽपि लिट् । हकारः पादपूर्त्ते ।

( ६५ ) सुचिरमिति । पुरुषर्षभ पुरुषश्रेष्ठ ममाङ्के । यमानुगमनाद्या-त्मवृत्तान्तकथने आत्मश्लाघा च प्रसज्येतास्मनः क्लेशसंभावनया च क्लेशोऽपि समुत्पद्येतेत्यतः प्रसुमोऽसीत्यन्यथा वचनम् । भगवान् पूज्यः देवो दीप्तिमान् प्रजासंयमनः प्रजानां संयमनो निग्रहीता ।

( ६६ ) विश्रान्त इति । महाभाग महान् भागो भाग्यं यस्य तथाभूत पुनः प्रत्युज्जीवनादिति भावः । विश्रान्तः गृहीतविश्रमः । विनिद्रः विगता निद्रा यस्य तथाभूतः । यदि शक्यं तदेति शेषः । विगाढां विशेषेण भूलोक प्रविष्टां अतिप्रौढीभूतामित्यर्थः । शर्वरीं रात्रिम् । सा हि प्रस्वापयन्ती शृणाति ( नाशयति ) प्राणिनां चेष्टा इति । ' कृशृगॄवृञ्चतिभ्यः ष्वरच् ' इत्यौ-णादिकः ष्वरच् । ' षिद्गौरादिभ्यश्च ' इति ङीष् च । ' अथ शर्वरी । निशा ' इत्यमरः । अतिक्रान्त आश्रमप्रतिगमनसमय इति भावः ।

( ६७ ) उपलभ्येति । संज्ञां चेतनां उपलभ्य प्राप्य सुखसुप्तः सुखेन निद्रितः । अनुभूतसुखस्वाप इत्यर्थः । उत्थितः प्रबुद्ध इव वर्तमानः । उत्पूर्वको हि तिष्ठतिः प्रबोधार्थोऽपि । सत्यवान् सर्वा दिशो वनान्तान् वनसीमाश्च विलोक्य । रात्रिपरिज्ञानाय दिगाद्यालोकनम् ।

( ६८ ) फलाहार इति । अस्मि अहं । विभक्तिप्रतिरूपकमव्ययमेतत् । फलाहारः फलानि आहर्तुम् । ' अण् कर्मणि च ' इत्यण् । हे सुमध्यमे शोभ-नशरीरमध्ये सुन्दरीत्यर्थः । ततः काष्ठं पाटयतो विदारयतः । पाटयतिर्हि विदारणवचनो धातूनामनेकार्थत्वात् । भासार्थं ह्येन चुरादौ मैत्रेयः पठति, रुजा वेदना अभवत् उदपद्यत ।

---

१ नारतीद कपुस्तके ।

शिरोभितापसंतप्तः स्थातुं चिरमशक्नुवन् ।
तवोत्सङ्गे प्रसुप्तोस्मि इति सर्वं स्मरे शुभे ॥ ६९
त्वयोपगूढस्य च मे निद्रयाऽपहृतं मनः ।
ततोऽपश्यं तमो घोरं पुरुषं च महौजसम् ॥ ७०
तद्यदि त्वं विजानासि किं तद्ब्रूहि सुमध्यमे ।
स्वप्नेन यदि वा दृष्टो मयि वा सत्यमेव तत् ॥ ७१
तमुवाचाथ सावित्री रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ॥ ७२
उत्तिष्ठोत्तिष्ठ भद्रं ते पितरौ पश्य सुव्रत ।
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ॥ ७३

(६९) शिर इति । शिरोऽभितापसंतप्तः शिरसः अभितापेन सर्वतः पीडया संतप्तः पीडितः अत एव चिरं स्थातुं उत्थानविशिष्टत्वमनुभवितुम् । स्मरे स्मरामीत्यर्थः । आर्षमात्मनेपदम् । शुभे कल्याणि सावित्रि ।

(७०) त्वयेति । उपगूढस्य आलिङ्गितस्य एष च मनसो निद्रयापहरणे हेतुः सुखविशेषसजनेन पीडायास्तिरोभावादिति भावः । निद्रया अपहृतं स्वायत्तीकृतमित्यर्थः । अन्यदीयस्य हि द्रव्यस्य विनाऽप्यनुज्ञां स्वायत्तीकरणमपहरणमिति । ततः तदनन्तरं । घोरं भयङ्करं तमः अन्धकारं, महौजसं महत् ओजः दीप्तिर्बलं वा यस्य तम् । 'ओजो दीप्तौ बले' इत्यमरः ।

(७१) तदिति । हे सुमध्यमे सुन्दरि यदि त्वं विजानासि तदेति शेषः तत् तमोऽवलोकनादिकं किं इति ब्रूहि । यदि मयि वियमानेनेत्यर्थः स्वप्नेन सुप्तस्य विषयानुभवरूपेणावस्थाविशेषेण हेतुभूतेन दृष्टः साक्षात्कृतः स पुरुष इत्यर्थात् । अथवा तत् पुरुषालोकनं सत्यमेव । वाकारः प्रश्ने । स्वप्नो मे यदि वा दृष्टो यदि वा सत्यमेव तत् । ' इति पाठे मे मयेत्यर्थः । अयं तु पाठः साधीयानिति प्रतिभाति ।

(७२) तमिति । रजनी रात्रिः व्यवगाहते विशेषेण जगत्प्रविशति । विशेषतः समुपचीयत इत्यर्थः । इदानीं हि मया निवेद्यमानं वृत्तमेतदतिपातयेद्गमनकालमिति भावः । ते तुभ्यं आख्यास्यामि कथयिष्यामि ।

(७३) उत्तिष्ठेति । उत्तिष्ठेति समतौ द्विर्वचनम् । 'वाक्यादेरामन्त्रितस्ये' त्यादिना । हे सुव्रत शोभनं व्रतं नियमो यस्य तथाभूत । एतेन पित्रोर्दर्शनस्यावश्यकत्वमभिद्योत्यते । पितरौ मातरं च पितरं च । 'पिता मात्रे' त्येकशेषः । इयं रजनी विगाढा विशेषेणोपचिता । दिवाकरः दिवा दिवसस्य करः कर्ता सूर्यः निवृत्तः अस्तमितः । अतो नेदानीं विलम्बितुं युक्तमिति भावः ।

१ स्वप्नो मे (च, म.) सुप्तेन यदि वा (न) स्वप्ने तु स मया (च)
२ यदि (क., च., म.) ३ स्वप्ने (च)

नक्तंचराश्चरन्त्येते हृष्टाः क्रूराभिभाषिणः ।
श्रूयन्ते पर्णशब्दाश्च मृगाणां चरतां वने ॥ ७४
एता घोरं शिवा नादान्दिशं दक्षिणपश्चिमाम् ।
आस्थाय विरुवन्त्युग्राः कम्पयन्त्यो मनो मम ॥ ७५

सत्यवानुवाच—
वनं प्रतिभयाकारं घनेन तमसा वृतम् ।
न विज्ञास्यसि पन्थानं गन्तुं चैव न शक्ष्यसि ॥ ७६

सावित्र्युवाच—
अस्मिन्नद्य वने दग्धे शुष्कवृक्षः स्थितो ज्वलन् ।
वायुना धम्यमानोऽत्र दृश्यतेऽग्निः क्वचित्क्वचित् ॥ ७७
ततोऽग्निमानयित्वेह ज्वालयिष्यामि सर्वतः ।

---

( ७४ ) नक्तचरा इति । नक्तं रात्रौ चरन्ति ते पिशाचादयः । क्रूराभिभाषिणः क्रूरं कठोरं यथा तथा भाषितुं शीलं येषां तथाभूताः । मृगाणां चरतां संचरतां सतां उत्पन्ना इति शेषः । पर्णशब्दा वृक्षादिपत्राणां शब्दाः । मृगाणां सञ्चरणेन पत्राणां सञ्चलनादिति भावः । अत्र पर्णशब्दस्थाने पदशब्देन भवितव्यमिति प्रतीयते । स्वारस्यविशेषात् । न पुनरसौ क्वापि संदृष्टः पाठः ।

( ७५ ) एता इति । एताः उग्रा भीषणाः शिवाः शृगाल्यः दक्षिणपश्चिमां दक्षिणस्या[1] पश्चिमायाश्च दिशोऽन्तरालभूतां नैर्ऋतीं दिशं आस्थाय आश्रित्य घोरं यथा तथा नादान् शब्दान् विरुवन्ति उदीरयन्ति । कथंभूताः शिवाः ? मम मनः कम्पयन्त्यः भीत्या कम्पितं कुर्वत्यः । मनसः कम्पनं च शिवारुतस्य निसर्गत एव परुषायतत्वेन भीतिजनकत्वात् । नैव पुनर्दक्षिणपश्चिमां दिशमाश्रित्य विरावात् । शुभफलो ह्येषः तदुक्तं वसन्तराजशाकुने 'रक्षः प्रचेतोऽनिलसोमशम्भुदिक्षु द्वितीये प्रहरे रुतेन । स्यादिष्टवार्ताश्रुतिरिष्टसिद्धिर्लाभः सुभिक्षं प्रियलोकसङ्गः ।' इति ।

( ७६ ) वनमिति । प्रतिभयाकारं प्रतिभयो भयङ्कर आकारो यस्य तथाभूतं तत्र च घनेन सान्द्रेण तमसा अन्धकारेण वृतं व्याप्तम् । अतस्त्वं पन्थानं न विज्ञास्यसि । चैवेति पादपूरणार्थे । किञ्च गन्तुं न शक्ष्यसि । एतेन त्वदेकावलम्बनं मे गमनमिति द्योत्यते ।

( ७७ ) अस्मिन्निति । दग्धे वनाग्निनेत्यर्थात् । स्थितः अस्तीत्यर्थः । वायुना धम्यमानो ध्मायमानः । ध्माधातोरार्षो धमादेशः । धमनं चात्रोद्दीपनम् ।

( ७८ ) तत इति । ततस्तस्माद्वृक्षात् अग्निं आनयित्वा आनीय । छान्दसः क्त्वा । इह सन्ति विद्यमानानि इमानि काष्ठानि सर्वतो ज्वालयिष्यामि । 'ज्वलह्वलह्मलनमामनुपसर्गाद्वे'ति मित्त्वविकल्पाद्वृद्धिः । आत्मनो

---

1 पश्चिमायाश्च )

काष्ठानीमानि सन्तीह जहि संतापमात्मनः ॥ ७८
यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥ ७९
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेकां रुचितं यदि तेऽनघ ॥ ८०

सत्यवानुवाच—

शिरोरुजा निवृत्ता मे स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि संयोगं त्वत्प्रसादजम् ॥ ८१
न कदाचिद्विकाले हि गतपूर्वो मयाऽश्रमः ।
अनागतायां संध्यायां माता मे प्ररुणद्धि माम् ॥ ८२
दिवाऽपि मयि निष्क्रान्ते सन्तप्येते गुरू मम ।

मनसः संताप मार्गादर्शनमूलकगमनासामर्थ्यजन्यम् । जहि नाशय त्यजेति यावत् । हन्तेर्लोट् । 'हन्तेर्ज' इति जः । प्रज्वालितेषु हि काष्ठेषु शक्यते तत्प्रकाशेन प्रयातुमिति नात्र खेदावसर इति भावः ।

( ७९ ) यदिति । अनुत्साहे कारणमाह सरुजामिति । हि यतः त्वां सरुजं रोगिणं लक्षये पश्यामि संभावयामीत्यर्थः । च किंच यदि तमसा संवृते सम्यग्व्याप्ते । हेतुरयं पथोऽविज्ञाने । वने ।

( ८० ) श्व इति । पूर्वश्लोकसंबद्धमेतत्पद्यमिति तत्रस्थयदिशब्दबलात्तदेत्यध्याहारः । तव अनुमते सति अनुमतौ सत्यां श्वः प्रभाते प्रातः वने दृश्ये शक्यदर्शने सति यास्यावः । वनपदं चात्र तद्गतान्मार्गादील्लँक्षयति । तेन प्रभाते वनगतेषु मार्गेषु चक्षुषा ग्रहीतुं शक्येषु यास्याव इत्यर्थः । इह अस्मिन्नेव प्रदेशे एकां क्षपां रात्रिम् । कालाध्वनोरत्यन्तसंयोग इति द्वितीया। वसाव । विधौ लोट् । यदि ते तुभ्यं रुचितम् । 'रुच्यर्थानां प्रीयमाणः' इति संप्रदानत्वाच्चतुर्थी ।

( ८१ ) शिरोरुजेति । मे शिरोरुजा शिरसो वेदना निवृत्ता प्रशान्ता अङ्गानि स्वस्थानि प्रकृतिस्थानि विकारशून्यानीत्यर्थः । लक्षये पश्यामि । त्वत्प्रसादजं तव प्रसादात् अग्निप्रज्वलनरूपादनुग्रहात् जायमानं मातापितृभ्यां सह संयोगं इच्छामि ।

( ८२ ) कुत एव त्वरयेत इति चेत्तत्राह । नेति । मया कदाचित् विकाले असमये समुचित कालमतिक्रम्येत्यर्थः । आश्रमो न गतपूर्वः पूर्वं न प्रविष्टः । अद्य यावत्कदाचिदपि नातिक्रम्य कालमाश्रमं गतवानस्मीति भावः । मे माता सन्ध्यायां पश्चिमायामित्यर्थात् । अनागतायां सत्याम् । प्रागेव सायन्तन्याः सन्ध्याया इत्यर्थः । प्ररुणद्धि बहिर्गमनतः प्रतिबध्नाति ।

( ८३ ) दिवेति । मयि निष्क्रान्ते बहिर्गते सति मे गुरू मातापितरौ संतप्येते दुःखमनुभवतः किमु पुनर्नक्तं रात्राविति भावः कथमेतत्सम्भा-

१ तप्यते (ञ) २ ह्याश्रमात् (क) ३ माता (ग) ४ महंगाद्धि(च)

त्वयि पिण्डश्च कीर्तिश्च सन्तानश्चावयोरिति ॥ ८८
माता वृद्धा पिताऽप्यन्धस्तयोर्यष्टिरहं किल।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः।
निद्रायाश्चाभ्यसूयामि यस्या हेतोः पिता मम।
माता च संशयं प्राप्ता मत्कृतेऽनपकारिणी।
अहं च संशयं प्राप्तः कृच्छ्रामापदमास्थितः ॥ ८९
मातापितृभ्यां हि[3] विना नाहं जीवितुमुत्सहे।
व्यक्तमाकुलया बुद्धया प्रज्ञाचक्षुः पिता मम ॥ ९०
एकैकमस्यां वेलायां पृच्छत्याश्रमवासिनम्।
नात्मानमनुशोचामि यथाऽहं[4] पितरं शुभे ॥ ९१

पिण्डान्निर्वपती'त्यादौ निवापस्य दानार्थकत्वदर्शनात्। 'पिण्डो देहे जपापुष्पे निवापे सिह्लकेऽपि च'। इति विश्वः। प्रतिष्ठित इत्यनुवर्तते। त्वदायत्तमेवास्माक निरापादि कर्मेत्यर्थ। कीर्तिः प्रतिष्ठितेति विपरिणमय्य योजना। सत्पुत्रेऽपि ह्यत्तावायतते। दुष्पुत्रो ह्येना विनिहन्तीति। सन्तानो वंशः। 'सतानः सततौ गोत्रे' इति मेदिनी। इति मामूचतुरितिपूर्वेण सबन्धः।

(८९) मातेति। अत' पर 'आपदमास्थित' इत्यन्तस्यैकपद्यत्वेनोपनिबन्धन प्रामादिक, कामवस्था गमिष्यत इत्येतदन्तस्य नैरपेक्ष्येण पार्थक्यार्हत्वात् 'प्रतापपुस्तका'नुरोधित्वात्तु निर्दिष्टमैकपद्य सार्धस्य पद्यद्वितयस्य। अन्यथा ह्यनुवादगवेषण न सौकर्यमापद्येतेति। तयोर्मातापित्रोः यष्टिः आधार इत्यर्थः। यस्या हेतोः यया हेतुभूतयेत्यर्थ। 'षष्ठी हेतुप्रयोगे' इति षष्ठी। मम पिता अनपकारिणी माता च मत्कृते मद्विषय इत्यर्थः सशय अनिष्टसदेहं प्राप्ता तस्या निद्राया' सम्प्रत्यनुभूताया गमनविलम्बे हेतुभूताया अभ्यसूयामि। शेषे षष्ठी। गुणभूतामपि निद्रा दोषपक्षे करोमीत्यर्थः। असूया हि गुणेषु दोषारोप इति। अहं च अहमपि सशय मद्वियोगेन पित्रोरनिष्टाशङ्का प्राप्तः सन् कृच्छ्रा दुस्तरामित्यर्थ आपद दु'ख आस्थितः समाश्रितवानस्मि। अनुप्राप्तोऽस्मीत्यर्थ।

(९०–९१) कुतः पित्रोर्विषयिण्याऽनिष्टाशङ्कया दु'खानुभव इत्यत्राह। मातेति। हि यतः। पुनरपि पितरमनुचिन्तयति व्यक्तमिति। प्रज्ञाचक्षुः प्रज्ञैव बुद्धिरेव चक्षुर्यस्य तथाभूतः। अन्ध इत्यर्थः। मम पिता आकुलया मद्विलम्बेन व्याकुलीभूतया बुद्ध्या उपलक्षितः सन् अस्या वेलायां एकैक एकमेकं आश्रमवासिन पृच्छति मद्वार्तामिति शेषः। इति व्यक्त स्पष्टम्। हे शुभे सावित्रि यथा पितर तथेति शेषः आत्मान नानुशोचामि न शोकविषयीकरोमि।

1 यद्यपि नारतीदमर्धमयं प्रतापपुस्तके तथापि सर्वत्र सदृश्यमानमावश्यकं लेखकभ्रमवशादेव प्रतापपुस्तकेऽनुपलब्धमिदमितिसगृहीतमस्माभिः। मातागुरुयोर्धर्मयोः सर्वत्र सुघटो छेदकस्य भ्रम इति। 2 पिता वृद्धः (क. न. म.) 3 रहितः (च) 4 तु (च)

भर्तारं चाप्यनुगतां मातरं परिदुर्बलाम्[1] ।
मत्कृतेन हि तावद्य सन्तापं परमेष्यतः ॥ ९२
जीवन्तावनु जीवामि[2] भर्तव्यौ तौ मयेति ह ।
तयोः प्रियं मे कर्तव्यमिति जानामि चाप्यहम् ॥ ९३[3]

मार्कण्डेय उवाच—

एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्तः सुस्वरं प्ररुरोद ह ॥ ९४
ततोऽब्रवीत्तथा दृष्ट्वा भर्तारं शोककर्शितम्[4] ।
प्रमृज्याश्रूणि पाणिभ्यां सावित्री धर्मचारिणी ॥ ९५
यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।

---

( ९२ ) भर्तारमिति । भर्तार पतिं मे पितर अनुगता परिदुर्बलां सर्वतो दुर्बलाम् । एतेन दुःखासहत्व द्योत्यते । यथानुशोचामि तथा नात्मानमपीति पूर्वेण सम्बन्ध. । कुतस्तयोर्विपये शोक इत्यत्राह मत्कृतेनेति । मत्कृतेन मम कर्मणा प्रतिगमनविलम्बरूपेण । अद्य तौ परममात्यन्तिक सन्ताप दुःखमेष्यतः प्राप्स्यत' ।

( ९३ ) तदर्थमेव च मदीय जीवितमित्याह । जीवन्ताविति । तौ मातापितरौ जीवन्तौ अनु जीवन्तावभिलक्ष्य जीवामि । तौ जीवत इत्येवाहं जीवामीत्यर्थ । 'लक्षणेत्थभूताख्यानवीप्सासु प्रतिपर्यनव' इति कर्मप्रवचनीयत्वाद्द्वितीया । कुतस्तदर्थत्व जीवितस्येत्याह । भर्तव्याविति । हकारोऽवधारणे । मया भर्तव्यौ ह पोषणीयावेव इति हेतोः । 'वृद्धौ च मातापितरौ साध्वी भार्या शिशु सुत । अप्यकार्यशत कृत्वा भर्तव्यौ मनुरब्रवीत्' ॥ इति मनुः । तयो प्रिय प्रीतिजनक कर्म मे मया । अतः पर पद्यमेकमधिक कपुस्तके स्पष्टार्थम् ।

( ९४ ) एवमिति । धर्मात्मा धर्म एवात्मा जीवो यस्य तथाभूत' । प्राणोपम धर्ममाकलयन्निति भाव । गुरुभक्त. गुर्वोर्मातापित्रोः भक्त' अनुरक्तः न केवलमयमेव तत्रानुरक्तस्तावपि त्वयेति प्राह गुरुप्रिय इति । गुर्वो प्रियः प्रेम्णो विषयः । दु खार्त सन् । एप च रोदने हेतुः । बाहू उच्छ्रित्य उन्नमय्य सुस्वर सु भृशः स्वरो ध्वनिर्यस्मिंस्तद्यथा तथा । उच्चै'स्वरमित्यर्थः 'सु पूजायां भृशार्थानुमतिकृच्छ्रसमृद्धिषु' । इति मेदिनी । हः पादपूरणे ।

( ९५ ) तत इति । ततो धर्मचारिणी धर्मे चरितु शील यस्यास्तथाभूता सावित्री कर्त्री । भर्तार पतिं तथा तेन प्रकारेण शोककर्शित शोकेन कृशीकृतम् । उत्साहादीनां क्षपणात्कर्शनोक्ति' । पाणिभ्यां अश्रूणि प्रमृज्य प्रोञ्छ्य ।

( ९६ ) यदीति । यदि ततमाचरित तप' दत्त दान हुत हवन च मे,

---

१ भृशदुःखिताम् ( क ) २ जीवामि ( च ) ३ अत पर ' परम दैवतं तौ मे पूजनीयौ सदा मया । तयोस्तु मे मदाऽस्त्येव मतमेन पुरातनम् ॥ ' इत्यधिक कपुस्तके । ४ पीडितम् ( च )

श्वश्रूश्वशुरभर्तॄणां मम पुण्याऽस्तु शर्वरी ॥ ९६
न स्मराम्युपूक्तर्वी वै स्वैरेष्वप्यनृतां गिरम् ।
तेन सत्येन ताबद्य [3]ध्रियेतां श्वशुरौ मम ॥ ९७

सत्यवानुवाच—

कामये दर्शनं पित्रोर्याहि सावित्रि माचिरम् ।
पुरा मातुः पितुर्वाऽपि यदि पश्यामि विप्रियम् ॥ ९८
न जीविष्ये वरारोहे सत्येनात्मानमालभे ।
[4]यदि धर्मे च ते बुद्धिर्मां चेज्जीवन्तमिच्छसि ॥ ९९
मम प्रियं वा कर्तव्यं गच्छावाश्रममन्तिकात् ।

मार्कण्डेय उवाच—

सावित्री तत उत्थाय केशान्संयम्य भाविनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥ १००

---

मम मत्स्वामिक मदुपभोग्यफलमिति भावः अस्ति तर्हीति शेषः । शर्वरी इयं रात्रिः । पुण्या शुभा शुभहेतुरित्यर्थः ।

( ९७ ) नेति । स्वैरेष्वपि स्वच्छन्दवर्तनेष्वपि अनृतामसत्या गिर उक्तपूर्वा पूर्वमुक्ता न स्मरामि । तेन सत्येन हेतुभूतेन अत्र मे श्वश्रूश्वशुरौ ध्रियेतां जीवताम् । आशिषि लोट् ।

( ९८–९९ ) कामय इति । माचिर अचिर सत्वरमेवेत्यर्थः । सुप् सुपेति समासः । याहि निर्गच्छेत्यर्थः । कुतर वरेत्यत्राह पुरेति । विप्रियं अनिष्टं मद्वियोगजन्य मरणमित्यर्थः । पुरा पश्यामि द्रक्ष्यामि । 'यावत्पुरानिपातयोर्लट्' इति भविष्यति लट् । न जीविष्यामि । आर्षमात्मनेपदम् । हे वरारोहे सुन्दरि । आत्मानं जीव स्व वा सत्येन शपथेन आलभे स्पृशामि । आङ्पूर्वको हि लभिः स्पर्शने । आत्मान शपथेन योजयामि आत्मनः शपथ करोमीत्यर्थः । 'सत्य कृते च शपथे' इति मेदिनी । तस्मात् यदि तर्हीति शेषः । अन्तिकात् अन्तिकं मार्गमासाद्य । ल्यब्लोपे कर्मणि षष्ठी । आश्रमं गच्छाव । गमेर्लोट् । दूरेण हि मार्गेण गच्छतोर्विलम्बः संपद्येत न पुनरसाविष्ट इत्यत उक्तमन्तिकादिति । उत्तममित्यपि पाठोऽत्र चतुर्भुजस्य ।

( १०० ) सावित्रीति । केशान् संयम्य यमानुगमनसंरम्भेण तत इतो विकीर्णान्नियम्य । बाहुभ्यामात्मनो भुजाभ्यां करणभूताभ्यां परिगृह्य अवलम्ब्येत्यर्थः । वैकारः पादपूरणे । उत्थापयामासेति उत्पूर्वात्तिष्ठतेर्णिजन्ताल्लिट् । 'अर्तिह्री' त्यादिना पुक् । 'उदः स्थास्तम्भोः पूर्वस्ये'ति पूर्वसवर्णः ।

---

१ क्षेमा ( च ) २ स्वैरेष्वपि ( न. ) ३ प्रीयतां ( च ) ४ इतः परं 'अपि नाम गुरू तौ हि पश्येयं ध्रियमाणकौ ॥' इत्यधिकं कपुस्तके । ५ च जीवितुं (च) ६ उत्तमम् ( च )

उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
सर्वा दिशः समालोक्य काठिने दृष्टिमादधे ॥ १०१
तमुवाचाथ सावित्री श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतं ते नेष्यामि परशुं त्वहम् ॥ १०२
कृत्वा काठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्तुः सकाशे पुनरागमत् ॥ १०३
वामे स्कन्धे तु वामोरूर्भर्तुर्बाहुं निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥ १०४

सत्यवानुवाच—

अभ्यासगमनाद्भीरु पन्थानो विदिता मम ।

---

(१०१) उत्थायेति । पाणिना हस्तेन अङ्गानि अवयवान् करचरणादीन् प्रमृज्य प्रोञ्छ्य । भूमौ शायितत्वेन गात्रेषु सलग्नानां धूल्यादीनामपाकरणार्थं प्रमार्जनम् । सर्वा दिशः समालोक्य दृष्ट्वा कालोपलक्षणार्थं दिशामवलोकनम्। तद्गतेन हि तमसा शक्यते रात्रिरवगन्तुमिति । काठिने स्थाल्या फलपूर्णाया-मित्यर्थः । दृष्टिं आदधे निहितवान् । तज्जिघृक्षासूचनार्थं चैतदाधानम् ।

(१०२) तमिति । अथ काठिने दृष्टेराधानोत्तरम् । श्वः आगामिनि दिने हारिष्यसि हरेत्यर्थः । परशुं कुठारम् । ते योगक्षेमार्थं अपूर्वार्थसम्प्राप्तिर्योगः प्राप्तस्य च परिपालनं क्षेमम् । ते अर्थः प्रयोजनं यस्य तथाभूतम् । तस्यैव तत्साधनत्वात् । 'योगोऽपूर्वार्थसम्प्राप्तिः' इति 'क्षेमोऽस्त्री लब्धरक्षणे' इति च मेदिनी । नेष्यामि नयामीत्यर्थः । आरब्धापरिसमाप्तः किल कालो वर्तमानः । स च प्रयोगसमानकाल इति वचनप्रयोगोत्तरमाविरत्वात्परशुनयनस्य भविष्यति लट् ।

(१०३) कृत्वेति । सा सावित्री । काठिनभारं फलभारवत्काठिनमित्यर्थः । भारवत्वाच्च कठिने भारत्वारोपः । वृक्षशाखावलम्बिनं वृक्षस्य शाखामवलम्बते तथाभूतम् । वृक्षशाखाश्रितमित्यर्थः काठिनस्य परशोश्च दूरेस्थितत्वात्पुनरागमादित्युक्तिः । आगमादिति गमेर्लुङ् । लादित्वादङ् ।

(१०४) वामस्कन्ध इति । वामोरूः वामौ ऊरू सक्थिनी यस्यास्तथाभूता । 'संहितशफलक्षणवामादेश्च' इत्यूङ् स्त्रियाम् । सुन्दरी सावित्रीत्यर्थः । वामे पत्युः सव्ये स्कन्धे भुजशिरसि निवेश्य प्रवेश्य अवस्थाप्येत्यर्थः। बाहु, स्कन्धप्रारभ्याङ्गुल्यन्तो भागो बाहुपदेनाभिधीयते । अत एव च प्रयुज्यते 'बाहू द्वौ च मृणालम्' इति 'सस्ताश्वावतिमात्रलोहिततलौ बाहू' इति च । स्वीयं बाहुम् । दक्षिणेन अपसव्येन बाहुनेत्यर्थात् सलभ्यते । परिष्वज्य आलिङ्ग्य परिपूर्वकौ हि स्वञ्जतिरालिङ्गने । एतेन सावित्र्याः पत्युर्दक्षिणतोऽवस्थानं गम्यते ।

(१०५) अभ्यासेनेति । अभ्यासेन पौनःपुन्येन गमनात् हेतोः । मम विज्ञाता अवगताः सन्ति । न किंच वृक्षान्तरालोकितया वृक्षाणामन्तरेण मध्येन

वृक्षान्तरालोकितया ज्योत्स्नया चापि लक्षये ॥ १०५
आगतौ स्वः पथा येन फलान्यवचितानि च ।
यथागतं शुभे गच्छ पन्थानं मा विचारय ॥ १०६
पलाशखण्डे चैतस्मिन्पन्था व्यावर्तते द्विधा ।
तस्योत्तरेण यः पन्थास्तेन गच्छ त्वरस्व च ॥ १०७
स्वस्थोस्मि बलवानस्मि दिदृक्षुः पितरावुभौ ।
ब्रुवन्नेव त्वरायुक्तः सम्प्रायादाश्रमं प्रति ॥ १०८

इति श्रीमन्महाभारते आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सत्यवदाश्रमगमने पण्णवत्याधिकद्विशततमोऽध्यायः ।

## सप्तनवत्यधिकद्विशततमोऽध्यायः ।



मार्कण्डेय उवाच—
एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।

छिद्रेण वा । ' अन्तरमवर छिद्र' इति हलायुध' । अवलोकितया दृष्टया ज्योत्स्नया चन्द्रिकया साधनभूतया लक्षये पश्यामि ।

( १०६ ) आगताविति । येन पथा मार्गेण आगतौ स्व' यस्मिन्निति विपरिणमय्य विभक्तिं योजिनीयम् । यस्मिन्मार्गे फलानि अवचितानि । स एवाय पन्था इति शेष' । यथागत आगत आगमनमनतिक्रम्य गच्छ ।

( १०७ ) पलाशखण्ड इति । एतस्मिन् पुरो दृश्यमाने पलाशखण्डे पलाशवृक्षाणा समूहे । षण्डशब्दः किल समूहमभिधत्ते । स एव च सपयोरभेदात्खण्डत्वमनुप्राप्तः । ' षण्डः पद्मादिसघात ' इति मेदिनी । पन्था मार्गः द्विधा द्वाभ्या प्रकाराभ्या व्यावर्तते भिद्यते । व्याङ्पूर्वो हि वृतिर्भेदे । तस्य पलाशखण्डस्य उत्तरेण उत्तरप्रदेशेन । त्वरस्व त्वरा कुरु । ञित्वरा सभ्रम इत्यतो लोट् । अतः पर मार्कण्डेय उवाचेत्येतदावश्यकम् । अन्यथा हि सत्यवतो वचने प्रथमः पुरुषो नोपपद्येतेति ।

( १०८ ) स्वस्थ इति । मार्कण्डेयोक्तिरियम् । स्वस्थः स्वे प्रकृतौ ति ष्ठति तथाभूतः निवृत्तविकार इत्यर्थ' । उभौ पितरौ मातर च पितर च । उभाविति तात्पर्यमाहकम् । दिदृक्षुः द्रष्टुमिच्छुः अस्मि । इति ब्रुवन्नेव यद्गमेव एवमिति पाठस्तु साधुः । अध्याहारायोगात् ।

इति श्रीसावित्र्युपाख्यानव्याख्याया बालबोधिन्या सप्तनवत्याधिकद्विशततमोऽध्यायः ।

( १ ) अथ सत्यवतोऽसन्निधानावसर आश्रमवृत्तमाख्यातुमुपक्रमते । एत-

१ ब्रुवन्नेव तथा ( च )

लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥ १
स सर्वानाश्रमान्गत्वा शैब्यया सह भार्यया ।
पुत्रहेतोः परामार्ति जगाम भरतर्षभ ॥ २
तावश्रमान्नदीश्चैव वनानि च सरांसि च ।
तस्यां निशि विचिन्वन्तौ दम्पती परिजग्मतुः ॥ ३
श्रुत्वा शब्दं तु यं कंचिदुन्मुखौ सुतशङ्कया ।
सावित्रीसहितोऽभ्येति सत्यवानित्यभाषताम् ॥ ४
भिन्नैश्च परुषैः पादैः सव्रणैः शोणितोक्षितैः ।
कुशकण्टकविद्धाङ्गावुन्मत्ताविव धावतः ॥ ५
ततोऽभिसृत्य तैर्विप्रैः सर्वैराश्रमवासिभिः ।
परिवार्य समाश्वास्य तावानीतौ स्वमाश्रमम् ॥ ६

स्मिन्निति । एतस्मिन् यस्मिन्सत्यवान् विनिर्गतस्तस्मिन् एव काले । महद्बलः महद् बल सामर्थ्य यस्य तथाभूतः लब्धचक्षुः प्राप्तदृष्टिश्च सन् । एतेन यमप्रदत्तस्य वरस्य फल प्रदर्शितम् । दृष्ट्या प्रसन्नाया प्रशान्तदोषाया सत्याम् । प्रसादो हि नैर्मल्य तच्च दृशि दोषप्रशमरूपमिति ।

( २ ) स इति । शैब्यया शैब्यासंज्ञया भार्यया सह । पुत्रहेतोः । पुत्रार्थम् । पुत्रस्यान्वेषणार्थमित्यर्थः सर्वानाश्रमान् गत्वा परां आर्ति पीडां जगाम । अनाधिगमनात्पुत्रस्येति भावः । भरतश्रेष्ठ भरतकुलश्रेष्ठ युधिष्ठिर ।

( ३ ) ताविति । तौ दम्पती जाया च पतिश्च शैब्याद्युमत्सेनौ । राजदन्तादिगणे निपातनाज्जायाशब्दस्य दम्भावः । विचिन्वन्तौ पुत्रमन्वेषयन्तौ ' लक्षणहेत्वोः क्रियायाः ' इति हेतौ शता । पुत्रस्यान्वेषणार्थमित्यर्थः । तस्यां निशि रात्रौ । ' पद्दन्नि ' त्यादिना निशाया निश् । नदीः वनानि सरांसि च परिजग्मतुः उपगतवन्तौ ।

( ४ ) श्रुत्वेति । सुतशङ्कया पुत्रस्य सभावनया । य कमपि वा शब्द पुत्रस्य पदशब्दमेव मत्वा तदागमनस्योत्प्रेक्षणादित्यर्थः। एतेनोत्कण्ठातिशयो द्योत्यते ।

( ५ ) भिन्नैरिति । परुषै' कठिनैः पाषाणखण्डादिभिर्मार्गगतैः कर्तृभिः भिन्नैर्विदारितैः अत एव च सव्रणैः तत एव च शोणितोक्षितैः रक्तेन सिक्तैः । उक्षितैरिति उक्ष सेचन इत्यतो निष्ठा । पादैरुपलक्षितौ । कुशकण्टकविद्धाङ्गौ कुशाना कण्टकैः पत्राग्रसूचीभि विद्धानि सजातक्षतानि अङ्गानि ययो तथाभूतौ । सम्भ्रमवशेन मार्गमनपेक्ष्यापि भ्रमणादिति भावः। अत्र हेतुमभिप्रेत्याह उन्मत्ताविवेति। पुत्रवियोगव्याकुलतयाऽऽत्मनो विस्मरणादिति भावः। धावतः अधावताम् । आर्षो भूते लट् ।

( ६ ) तत इति। तैः प्रसिद्धैः । अभिसृत्य उपगम्य । परिवार्य परिवृतौ कृत्वा समाश्वास्य धैर्येण योजयित्वा च स्वं स्वीय द्युमत्सेनीयमित्यर्थः ।

१ प्रसन्नया लब्धचक्षुर्दृष्ट्या ( च )

तत्र भार्यासहायः स वृतो वृद्धैस्तपोधनैः ।
आश्वासितोपि चित्रार्थैः पूर्वराज्ञां कथाश्रयैः ॥ ७
ततस्तौ पुनराश्वस्तौ वृद्धौ पुत्रदिदृक्षया ।
बाल्यवृत्तानि पुत्रस्य स्मरन्तौ भृशदुःखितौ ॥ ८
पुनरुक्त्वा च करुणां वाचं तौ शोककर्शितौ ।
हा पुत्र हा साध्वि वधूः क्वासि क्वासीत्यरोदताम् ।
ब्राह्मणः सत्यवाक्तेषामुवाचेदं तयोर्वचः ॥ ९

सुवर्चा उवाच—

यथास्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १०

गौतम उवाच—

वेदाः साङ्गा मयाऽधीतास्तपो मे संचितं महत् ।
कौमारब्रह्मचर्यं च गुरवोऽग्निश्च तोषिताः ॥ ११
समाहितेन चीर्णानि सर्वाण्येव व्रतानि मे ।

---

( ७ ) तत्रेति । अपिशब्द किंचेत्यर्थे । तत्र तस्मिन्नाश्रमे भार्यासहायः भार्या सहाया यस्य तथाभूत पत्नीयुक्त इत्यर्थ । वृद्धैस्तपोधनैः तप एव धन येषा तैर्मुनिभिः वृत परिवृत । अपि किंच पूर्वराज्ञा पूर्वेषा राज्ञाम् । समासान्तविधेरनित्यत्वान्न टच् । कथाश्रयैः कथा आश्रयो येषा तथाभूतैः चित्रार्थैः चित्रैराश्चर्यहेतुभिरर्थैर्विषयैः करणभूतैः आश्वासित धैर्येण योजित

( ८ ) तत इति । आश्वस्तौ मुनिवचनत प्राप्तधैर्यावपि तौ वृद्धौ । शैब्याद्युमत्सेनौ । पुत्रवात्सल्यातिशयवशादाश्वसनमपि क्षणिकतामापन्नमिति भावः ।

( ९ ) पुनरिति । करुणा हृदयस्य द्रावयित्रीं वाचम् । इति एव प्रकारेण । तेषा ब्राह्मणाना मध्ये सत्यवाक् सत्या वाक् यस्य तथाभूतो ब्राह्मणः सुवर्चा नाम तयो शैब्याद्युमत्सेनयो शेषे षष्ठी । तौ प्रतीत्यर्थ । इद वक्ष्यमाण वचः । आश्वासनार्थमुदीरयामासेत्यर्थ । सत्यवागिति श्रद्धेयता द्योत्यते ।

( १० ) यथेति । यथा यस्मात् अस्य सत्यवत भार्या सावित्री । आचारेण सद्वृत्तेन सयुक्ता सम्यक्सबद्धा अस्ति तथा तस्मात् । न हि धर्माचरण मनिष्टाय कल्पेतेति भावः ।

( ११–१३ ) आत्मनो वचसि श्रद्धोत्पादनाय पारमार्थिकमात्मनः स्वरूपमाह गौतमः सार्धद्वितयेन । विशेषक चैतत् । वेदा इति । वेदा ऋग्यजुःसामाथर्वाण एतैर्हीष्टस्य प्राप्तेरनिष्टस्य च परिहारस्यालौकिकोऽभ्युपायो विद्यत इति । तदाहुः ' प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते । एन विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ ' इति । साङ्गा अङ्गैरुपकारकैः शिक्षादिभिः

---

१ पूर्वराजकथाश्रये. ( क ) पूर्वं राज्ञां कथाश्रये ( च ) २ अत. पर ' सावित्र्या दर्शनानि च । शोक जगतुरन्योन्यं ' इत्यधिकं कपुस्तके । ३ नारतीदं चपुस्तके । ४ ब्राह्मण सुवर्चा उवाच ( च ) ५ च ( च )

वायुभक्षोपवासश्च[1] कृतो मे विधिवत्तथा ॥ १२
अनेन तपसा वेद्मि सर्वं परचिकीर्षितम् ।
सत्यमेतन्निबोधध्वं ध्रियते सत्यवानिति ॥' १३

शिष्य उवाच—
उपाध्यायस्य मे वक्त्राद्यथा वाक्यं विनिःसृतम् ।
नैवं जातु भवेन्मिथ्या तथा जीवति सत्यवान् ॥ १४

ऋषय ऊचुः—
यथाऽस्य भार्या सावित्री सर्वैरेव सुलक्षणैः ;
अवैधव्यकरैर्युक्ता तथा जीवति सत्यवान् ॥ १५

भारद्वाज उवाच—
यथाऽस्य भार्या सावित्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान् ॥ १६

---

सह वर्तमानाः । उपकारकतयाङ्गसदृशत्वादेषाङ्गत्वोक्तिः शिक्षादीनाम् । तानि च ' शिक्षा कल्पो व्याकरणं निरुक्तं छन्दसां चयः । ज्योतिषामयनं चैति वेदाङ्गानि षडेव तु । इत्युक्तानि । एतेषां चाङ्गत्वविवरणं यथा पाणिनीयशिक्षायाम् ' छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते । शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम् ॥' इति । अधीता अर्थज्ञानपूर्वकं पठिताः । सञ्चितं संपादितमित्यर्थः । महत् तपः मे मम अस्ति । कौमारब्रह्मचर्यं कौमारं कुमारत्वं तदारभ्य ब्रह्मचर्यं मेऽस्तीति सम्बन्धः । कौमारमारभ्य कालमेतावन्तं ब्रह्मचार्यस्मीत्यर्थः । समाहितेन सम्यगेकाग्रमनसा मे मया । चीर्णानि समाचरितानि । च किंच मे मया सदा विधिवत् यथाशास्त्रं वायुभक्षोपवासः वायुर्भक्षो भक्ष्यं यस्मिंस्तथाभूत उपवास आहारनिवृत्तिः । अनेनोपरिनिर्दिष्टेन तपसा हेतुभूतेन । परचिकीर्षितं परेषां कर्तुमिष्टमर्थं मनोगतमित्यर्थः । एतेन दिव्यदृष्टित्वं तत एव च सत्यवद्वृत्तान्तज्ञाने सामर्थ्यं द्योत्यते । निबोधध्वमवधारयध्वम् । आर्षमात्मनेपदम् । ध्रियते जीवति । ' धृङ् अवस्थाने ' इत्यतो लट् । न चेयमात्मप्रशंसा दोषायेति वक्तव्यम् । भूतार्थत्वात् । ' आत्मप्रशंसादोषश्च नास्ति भूतार्थशंसिनः ।' इति दण्डी ।

( १४ ) उपाध्यायस्येति । यथा यस्मात् मम उपाध्यायस्य उपेत्याधीयतेऽस्मादुपाध्यायोऽध्यापयिता तस्य वक्त्रात् मुखात् विनिःसृतं विनिर्गतं वाक्यं मिथ्या न भवेत् न भवतीत्यर्थः । यथा तस्मात् ।

( १५ ) यथेति । अवैधव्यकरैः विधवाया भावो वैधव्यं तद्विरोधि अवैधव्यं सौभाग्यं तस्य करैर्जनकैः । सुलक्षणैः शोभनैश्चिह्नैः ।

(१६) यथेति । नहि तपआदीनां वैधव्यकरत्वं युक्तं शङ्कितुमपीति भावः ।

---

1 कुशलानि च यानि मे ( च ) नैतज्जातु ( च )

दाल्भ्य उवाच—

यथा दृष्टिः प्रवृत्ता ते सावित्र्याश्च यथा व्रतम् ।
गताऽऽहारमकृत्वा च तथा जीवति सत्यवान् ॥ १७

आपस्तम्ब उवाच—

यथा वदन्ति शान्तायां दिशि वै मृगपक्षिणः ।
पार्थिवी च प्रवृत्तिस्ते तथा जीवति सत्यवान् ॥ १८

धौम्य उवाच—

सर्वैर्गुणैरुपेतस्ते यथा पुत्रो जनप्रियः ।
दीर्घायुर्लक्षणोपेतस्तथा जीवति सत्यवान् ॥ १९

मार्कण्डेय उवाच—

एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान्विगणयन्सर्वांस्ततः स्थिर इवाभवत् ॥ २०
ततो मुहूर्तात्सावित्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥ २१

ब्राह्मणा ऊचुः—

पुत्रेण संगतं त्वां तु चक्षुष्मन्तं निरीक्ष्य च ।

---

( १७ ) यथेति । दृष्टिश्चक्षुरिन्द्रियक्रिया प्रवृत्ता आरब्धा । प्रतिबन्धकनिवृत्त्या यथापूर्वं प्रवृत्तेत्यर्थः । आहार पारणाम् । पारणाया अवश्यकरणीयतया तत्र प्रतिबन्धकस्यासभवादेव कालान्तर एना पालयित्वा प्रयाता सावित्री । अन्यथा तु विधायैव पारणामगमिष्यदिति भावः ।

( १८ ) यथेति । शान्ताया क्षोभशून्याया दिशि मृगपक्षिणः पशवः पक्षिणश्च वदन्ति शब्द कुर्वन्ति । ते तव पार्थिवस्य राज्ञः सबन्धिनी राजोचितेत्यर्थः प्रवृत्तिः । अद्य यावत्तु तापसोचितैवासावासीत् तस्याश्चेयं परिवृत्तिस्तवाभ्युदय गमयतीति भाव. ।

( १९ ) सर्वैरिति । दीर्घायुर्लक्षणोपेत. दीर्घस्यायुषो लक्षणैर्शापकैश्चिह्नैः उपेतः युक्तः ।

( २० ) एवमिति । तांस्तान् सर्वान् विगणयन् अवगणयन् वर्तमानः स द्युमत्सेनः तैः सत्यवाग्भि. सत्यवचनै' तपस्विभिः आश्वासितः धैर्येण योजित. सान्त्वित इत्यर्थः । ततः स्थिर इव चाञ्चल्यशून्य इव ।

( २१ ) तत इति । मुहूर्तात् मुहूर्तं अल्प काल अतिक्रम्य । ल्यब्लोपे कर्मणि पञ्चमी । हकारश्चार्थे । किंच प्रहृष्टा सती प्राविवेश अन्तः प्रविष्टवती ।

( २२ ) पुत्रेणेति । हे पृथिवीपते राजन् द्युमत्सेन त्वा पुत्रेण सह संगत चक्षुष्मन्त चक्षुषी स्तोऽस्य तथाभूत प्राप्तचक्षुष्कमित्यर्थ' । निरीक्ष्य सर्वे

---

१ प्रावृताऽसि (च) २ अहृ वैव (क) ३ पार्थिवी चैव वृद्धि ते (क) ४ विगणयन्गतान् (च) ५ अत: परं 'दृष्ट्वा चोपगताः सर्वे हर्षं जग्मुश्च ते द्विजाः। ७५ माता पिता चास्य समाश्लिष्यपरोदताः ॥' इत्यधिक क्पुस्तके। ५ त्वाऽष(च)

सर्वे वयं वै पृच्छामो वृद्धिं वै पृथिवीपते ॥ २२
समागमेन पुत्रस्य सावित्र्या दर्शनेन च ।
चक्षुषश्चात्मनो लाभात्त्रिभिर्दिष्ट्या विवर्धसे ॥ २३
सर्वैरस्माभिरुक्तं यत्तथा तन्नात्र संशयः
भूयो भूयः समृद्धिस्ते क्षिप्रमेव भविष्यति ॥ २४
ततोऽग्निं तत्र संज्वाल्य द्विजास्ते सर्व एव हि ।
उपासांचक्रिरे पार्थ द्युमत्सेनं महीपतिम् ॥ २५
शैब्या च सत्यवांश्चैव सावित्री चैकतः स्थिताः ।
सर्वैस्तैरभ्यनुज्ञाता विशोकाः समुपाविशन् ॥ २६
ततो राज्ञा सहासीना सर्वे ते वनवासिनः ।
जातकौतूहला पार्थ पप्रच्छुर्नृपतेः सुतम् ॥ २७
प्रागेव नागतं कस्मात्सभार्येण त्वया विभो ।

---

वय वृद्धि अभ्युदयं पृच्छामः त्वामिति शेष. । इदानीं जातो न वा तवाभ्युदय - इति पृच्छाम इत्यर्थ. ।

( २३ ) समागमेनेति । पुत्रस्य समागमेन साविञ्या दर्शनेन आत्मनश्च-क्षुषो लाभाच्चेत्येतैस्त्रिभि कारणभूते. विवर्धसे विशेषेण अभ्युदय प्राप्नोषि इतीद दिष्टया अस्माकमानन्दाय । दिष्टयेति हर्षेऽव्ययम् । 'दिष्टया हर्षे मङ्गले च' ति मेदिनी ।

( २४ ) सर्वैरिति । ते तव क्षिप्रमेव सत्वरमेव भूयो भूयः पुनः पुनः समृद्धिः वृद्धिः अभ्युदय इत्यर्थ' ।

( २५ ) तत इति । तत्राश्रमप्रदेशे अग्निं सज्वाल्य प्रज्वाल्य शीतनि-वारणार्थमिति भाव । महीपतिं राजान द्युमत्सेन उपासाञ्चक्रिरे द्युमत्सेनस्य समीप उपविष्टवन्त इत्यर्थ' ।

( २६ ) शैब्येति । शैब्या द्युमत्सेनस्य भार्या सत्यवान् सावित्री चेत्येत-विशोका' एकत एकस्मिन्प्रदेशे स्थिता उत्थानवन्तः । तैः सर्वैः मुनिभिः अभ्यनुज्ञाता अनुमोदिताः । सन्तः । उपाविशन् ।

( २७ ) तत इति । राज्ञा द्युमत्सेनेन सह आसीना उपविशन्त उप-विष्टा इत्यर्थ । आस्तेः शानच् 'ईदास' इतीत् । वनावासिन । वने वस्तु शील येषा तथाभूता ऋषयः । नृपते राज्ञो द्युमत्सेनस्य सुत सत्यवन्तम् ।

( २८ ) प्रश्नमाह द्वाभ्याम् । प्रागिति । प्रागितः पूर्वमेव । विभो सामर्थ्य-सम्पन्न । एतेन विभोरपि विलम्बे बलीयसा कारणेन भवितव्यमिति जिज्ञा-साया उपपन्नत्व द्योत्यते । विरात्रे विशिष्टाया रात्रौ । 'अहः सर्व' इति

---

१ ऽस्य मो वृद्धि त ( ग ) २ स्थिता ३ 'अत परं मार्कण्डेय उवाच' इत्यधिक कुम्भ ( च. न. ) ४ विशोका समुपाविशन् ( च. म. )

विरात्रे चागतं कस्मात्को नु वन्धस्तवाभवत् ॥ २८
संतापितः पिता माता वयं चैव नृपात्मज ।
कस्मादिति न जानीमस्तत्सर्वं वक्तुमर्हसि ॥ २९

सत्यवानुवाच—

पित्राऽहमभ्यनुज्ञातः सावित्रीसहितो गतः ।
अथ मेऽभूच्छिरोदुःखं वने काष्ठानि भिन्दतः ॥ ३०
सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
तावत्कालं न च मया सुप्तपूर्वं कदाचन ॥ ३१
सर्वेषामेव भवतां संतापो मा भवेदिति ।
अतो विरात्रागमनं नान्यदस्तीह कारणम् ॥ ३२

गौतम उवाच—

अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्थ सावित्री वक्तुमर्हति ॥ ३३
श्रोतुमिच्छामि सावित्रि त्वं हि वेत्थ परावरम् ।
त्वां हि जानामि सावित्रि सावित्रीमिव तेजसा ॥ ३४

---

चकारेण सख्याव्ययादेर्ग्रहणाद्रात्रेर्विपूर्वाया अच् । 'रात्राह्नाहाः पुंसि च' इति पुंस्त्वम् । नुः प्रश्ने । वन्धः प्रतिबन्धः ।

(२९) संतापित इति । संतापितो दुःखितः अभवदिति शेषः । तत् तस्मात् । वयमिति । संतापिता इति विपरिणामेन योज्यम् ।

(३०) पित्रेति । अभ्यनुज्ञातोऽनुमोदितः । अथ गमनानन्तरम् । काष्ठानि भिन्दतो विदारयतः मे मम ।

(३१) सुप्त इति वेदनया शिरःपीडया हेतुभूतया चिरं बहुकालं सुप्तो निद्रित इति उपलक्षये संभावयामि । तावत्कालं तावन्तं कालम् । न सुप्तपूर्वं पूर्वं न सुप्तम् ।

(३२) विरात्र आगमने कारणमाह । सर्वेषामिति । मा भवेत् न भवतु । नायं माङ् किन्तु माशब्द इति न लुङ् । इति हेतोः । इह अस्मिन् विषये अन्यत् कारणं नास्ति ।

(३३) बलीयसा किञ्चात्र कारणेन भवितव्यमिति संभावयन्नसमाहितः सत्यवतो वचसा सावित्रीं प्रष्टुमुपक्रमते गौतमः । अकस्मादिति । अस्य तव च विरात्रागमनं पितुश्च ते चक्षुषः प्राप्तिरित्येतस्य द्वितयस्य । त्वं न वेत्सि न जानासि अत इति शेषः । सावित्री वक्तुमर्हति ।

(३४) सावित्रीं पृच्छति । हि यतः परावरम् परं भावि अवरं भूतं च । 'सर्वो द्वन्द्वो विभाषयैकवद्भवति' इत्येकवद्भावः । तेजसा हेतुभूतेन सावित्रीं ब्रह्मणः पत्नीं देवताम् जानामि मन्ये । एतेन परावरज्ञानसामर्थ्यमुपपाद्यते । वेत्थ जानासि । 'विदो लटो वा' इति सिपस्थल् ।

त्वमत्र हेतुं जानीषे तस्मात्सत्यं निरुच्यताम् ।
रहस्यं यदि ते नास्ति किंचिदत्र वदस्व नः ॥ ३५

सावित्र्युवाच—

एवमेतद्यथा वेत्थ संकल्पो नान्यथा हि वः ।
न हि किंचिद्रहस्यं मे श्रूयतां तथ्यमेव तत् ३६
मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥ ३७
सुप्तं चैनं यमः साक्षादुपागच्छत्सकिंकरः ।
स एनमनयद्बद्ध्वा दिशं पितृनिषेविताम् ॥ ३८
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान्मम ॥ ३९
चक्षुषी च स्वराज्यं च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं पुत्राणां चात्मनः शतम् ॥ ४०
चतुर्वर्षशतायुर्मे भर्ता लब्धश्च सत्यवान् ।

( ३५ ) त्वमिति । अत्र अस्मिञ्श्वशुरः प्राप्तेर्विरात्रागमनस्य च विषये । निरुच्यतां कथ्यताम् । निरत्र धात्वर्थानुवर्ती । विब्रियतामिति वाऽर्थः । निर्वचनं हि विववरणमिति । रहस्य गोपनीय नास्ति तदेति शेषः । वदस्व ब्रूहि । आर्षमात्मनेपदम् । 'न चेद्रहस्य प्रतिवक्तुमर्हसि' इति कालिदासः ।

( ३६ ) एवमिति । यथा वेत्थ जानीथ । आर्षो गुणः । त्वमिति वा कर्तृपदाध्याहारः । त्व यथा वेत्थ एवमेतत् इति सबन्धः । हि यतः वः सकल्पः सभावना अन्यथा न भवतीति शेषः । तत् तस्मात् तथ्य परमार्थभूतमेव वृत्तं श्रूयताम् ।

( ३७ ) मृत्युरिति । आख्यातः भावितया कथितः । स नारदेन कथितो मरणहेतुः । ततः तस्मात् एन पतिं सत्यवन्त न जहामि न त्यजामि ।

( ३८ ) स्वापान्त यावत्कथितो वृत्तान्तः सत्यवता । ततः परमाचष्टे । सुप्तमिति । सुप्त पूर्वोक्तेन प्रकारेण निद्रित एन सत्यवन्तम् । सकिङ्करः किङ्करैः सह वर्तमानो यमः उपागच्छत् उपागतवान् । प्रयोजनाभावात्तु नोपवर्णित प्राक् सकिङ्करत्व यमस्यात्र तु तन्निर्दिष्टम् । एन पितृनिषेविता पितृभिः सेविता दिश दक्षिणा दिशम् । तस्या हि पितरो निवसन्तीति ।

( ३९ ) अस्तौषमिति । सत्येन सत्यविशिष्टेन । अर्शआदित्वादच् । वचसा करणभूतेन अस्तौष स्तुतवती । स्तौतेर्लुङ् । तेन यमेन वैकारः पादपूरणार्थश्चार्थो वा । मे मह्यम् । ममेति शेषे षष्ठी मत्सकाशादित्यर्थः ।

( ४०–४१ ) पञ्च वरान्निरूपयति । चक्षुषी इति । द्वयोरपि चक्षुषोः आत्मनो राज्यस्य च प्राप्तिरित्यर्थः । मे श्वशुरस्य सबन्धिनौ । तृतीय वर-

१ विविच्यताम् ( न ) २ तथ्यमव वन् ( क ) तथ्यमत्र वन् ( च ) ३ दशान्वसन् ( च ) ४ चक्षुष्मत्व ( च )

भर्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम् ॥ ४१
एतत्सर्वं मयाऽऽख्यातं कारणं विस्तरेण वः ।
यथा वृत्तं सुखोदर्कमिदं दुःखं महन्मम ॥ ४२

ऋषय ऊचुः—

निमज्जमानं व्यसनैरभिद्रुतं कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशीलव्रतपुण्यया कुलं समुद्धृतं साध्वि पुनः कुलीनया४३

मार्कण्डेय उवाच—

तथा प्रशस्य ह्यभिपूज्य चैवं वरस्त्रियं तामृषयः समागताः ।

---

माह लब्धामिति । पितुः पुत्रशत लब्धम् । यमाद्वरेणेत्यर्थात् । तुरीयमाह । पुत्राणामिति । च किंच आत्मनः स्वस्य ममेत्यर्थः पुत्राणा शत लब्धमित्यनुषज्यते । पञ्चममाह । चतुरिति । चतुर्वर्षशतायुः चत्वारि वर्षाणां शतानि यस्मिंस्तथाविधमायुर्जीवनकालो यस्य तथाभूतः । मे मया । मृतस्य पुनर्लाभादुक्त लब्ध इति । हि यतः भर्तुर्जीवनार्थं तु जीवनार्थमेव । तुकार एवार्थो निपातानामनेकार्थत्वात् । इद दिनत्रयनिर्वर्त्यं व्रत चीर्णमाचरितम् । चीर्णमिति पृषोदरादित्वात्साधु ।

( ४२ ) एतदिति । वो युष्मभ्यम् । मम इद भवद्भ्यो निवेदित पतिनिधनजन्य महत् दुःख यथा येन प्रकारेण सुखोदर्क सुखः सुखहेतुः उदर्को भावि फल यस्य तथाभूत वृत्त जातम् तत्कारणमिति सबन्धः । ' उदर्कः फलमुत्तरम् ' इत्यमरः ।

( ४३ ) निमज्जमानामिति । नृपतेर्द्युमत्सेनस्य कुल व्यसनैर्दुःखैः अभिद्रुत आक्रान्त तत एव च तमोमये अन्धकारप्रचुरे । प्राचुर्ये मयट् । ह्रदे । अगाधजलो ह्रदः । अत्र पुनर्जलस्थाने तम एवेति तमोमयोऽथ ह्रद इत्युक्तम् । निमज्जमान निमङ्क्तु शील यस्य तथाभूतम् । आसीदिति शेषः । यथा गाढे तमसि विनिमग्नस्य पुरः पश्चाद्वा किमपि न दृश्यते एव विपद्ग्रस्ततया यस्य पुरः पश्चाद्वा किमपि भव्य न दृश्यते तथाभूतमासीदित्यर्थः । पुनः परतु हे साध्वि । तदित्यध्याहार्यम् तत्कुल कुलीनया प्रशस्तकुलसभूतया सुशीलव्रतपुण्यया शोभनेन शीलेन व्रतेन च पुण्यया पवित्रया त्वया समुद्धृतम् । निमज्जमानामिति ताच्छील्ये चानश् ।

( ४४ ) तथेति । समागताः तत्र मिलिता ऋषयः कर्तारः तां वरस्त्रियं श्रेष्ठां स्त्रियं सावित्रीं तथा तेनोक्तेन प्रकारेण प्रशस्य स्तुत्वा अभिपूज्य बहुमानयित्वा च । चैवेत्यव्ययद्वय चार्थे । अञ्जसा सत्वरम् । अव्ययमेतत् । ' अञ्जसाऽह्नाय द्राक् ' इत्यमरः । सपुत्र नरेन्द्र राजान द्युमत्सेन आमन्त्र्य

---

१ निमज्ज्यमान ( क ) २ व्रतधर्मयुक्तया ( च ) ३ चैव ते ( च )

नरेन्द्रमामन्त्र्य सपुत्रमञ्जसा शिवेन जग्मुर्मुदिताः स्वमालयम् ४४

इति श्रीमन्महाभारते आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि सावित्रीकथायां सप्तनवत्यधिकद्विशततमोऽध्यायः ।

## अष्टनवत्यधिकद्विशततमोऽध्यायः ।

मार्कंडेय उवाच—

तस्यां रात्र्यां व्यतीतायामुदिते सूर्यमण्डले ।
कृतपौर्वाह्णिकाः सर्वे समेयुस्ते तपोधनाः ॥ १
तदेव सर्वं सावित्र्या महाभाग्यं महर्षयः ।
द्युमत्सेनाय नातृप्यन्कथयन्तः पुनः पुनः ॥ २
ततः प्रकृतयः सर्वाः साल्वेभ्योऽभ्यागता नृपम् ।
आचख्युर्निहतं चैव स्वेनामात्येन तं द्विपम् ॥ ३

---

आपृच्छ्य शिवेन तदीयेन मङ्गलेन मुदिता आनन्दं प्राप्ताः सन्तः स्व स्वीयं आलय गृह जग्मुः । आमन्त्रण च गमनाभ्यनुज्ञाप्रार्थनम् ।

इति श्रीसावित्र्युपाख्यानव्याख्याया बालबोधिन्या सप्तनवत्यधिकद्विशततमोऽध्यायः ।

---

( १ ) तस्यामिति व्यतीतायां अतिक्रान्तायां सत्याम्। सूर्यमण्डले उदिते सति। कृतपौर्वाह्णिकाः कृत पौर्वाह्णिक पूर्वाह्णे अह्नः पूर्वभागे भव कर्म सन्ध्योपासनहोमादिक यैस्तथाभूताः। पौर्वाह्णिकामिति 'विभाषा पूर्वाह्णापराह्णाभ्याम्' तिटयुविकल्पाट्ठञ्। तपोधना ऋषयः तेषा हि धन तप एवेति । समेयुःसमागतवन्तः।समाङ्पूर्वादिणो लिट्। द्युमत्सेनसकाशमागतवन्त इत्यर्थः।

( २ ) तदिति । पुनः पुनः कथयन्तो नातृप्यन् तृप्तिं ( अलम्बुद्धिं ) न प्राप्तवन्तः । कथनमेव तस्य भूयोऽप्यभ्यलष्यन्नित्यर्थः । एतेन प्रमोदातिशयो व्यज्यते ।

( ३ ) तत इति । साल्वेभ्य एतत्संज्ञकाद्देशात् । केवलाः किल देशसंज्ञावाचिनः शब्दा बहुवचनान्ताः प्रयुज्यन्ते । आगताः सर्वाः प्रकृतयः प्रजाः कर्त्र्यः स्वेन स्वीयेन द्युमत्सेनपक्ष्येणेत्यर्थः । अमात्येन कर्त्रा । तं येन प्रच्यावितो राज्याद्द्युमत्सेनस्त द्विष शत्रु, द्विषमिति द्विषेः कर्तरि क्विप् । निहत आचख्युः कथितवत्यः ।

( ४ ) तमिति । ससहाय सहायैः साहाय्यकर्तृभिः सुहृद्भिः सह वर्तमान सबान्धव बान्धवैः सह वर्तमान च त शत्रु हत प्रोच्य उक्त्वा । वि-
त विशेषेण पलायित द्विषद्बल द्विषतः शत्रोर्बलं सैन्य कर्तृ यथा यत्प्रकार वृत्त सवृत्त तत् न्यवेदयन् कथितवत्यः ।

---

१ द्रष्टु तदेव सावित्र्या ( न )

तं मन्त्रिणा हतं प्रोच्य ससहायं सबान्धवम् ।
न्यवेदयन्यथा वृत्तं विद्रुतं च द्विषद्बलम् ॥ ४
ऐकमत्यं च सर्वस्य जनस्याथ नृपं प्रति ।
सचक्षुर्वाऽप्यचक्षुर्वा स नो राजा भवत्विति ॥ ५
अनेन निश्चयेनेह वयं प्रस्थापिता नृप ।
प्राप्तानीमानि यानानि चतुरङ्गं च ते बलम् ॥ ६
प्रयाहि राजन्भद्रं ते घुष्टस्ते नगरे जयः ।
अध्यास्व चिररात्राय पितृपैतामहं पदम् ॥ ७

मार्कण्डेय उवाच—

चक्षुष्मन्तं च तं दृष्ट्वा राजानं वपुषाऽन्वितम् ।
मूर्ध्ना निपतिताः सर्वे विस्मयोत्फुल्ललोचनाः ॥ ८

( ५ ) निवेदनान्तरमाह त्रिभिः । ऐकमत्यमिति । सचक्षुः दृष्टियुक्तः अचक्षुरन्धोऽपि वा स द्युमत्सेनः नः अस्माकं प्रजानां राजा भवतु इति नृपं प्रति राजविषये सर्वस्य जनस्य सर्वासामपि प्रजानां ऐकमत्यं समानमतत्वं च न्यवेदयन्निति पूर्वेण सम्बन्धः ।

( ६ ) अनेनेति । अतः पूर्वं प्रकृतय ऊचुरित्येतदावश्यकमिव प्रतिभाति । नैव पुनरेतत्कुत्रापि सदृष्टम् । अनेन त्वदीयनृपत्वविषयकेण निश्चयेन हेतुभूतेन । वयं प्रस्थापिता साल्वेभ्य इतोमुखं प्रस्थिताः । प्रपूर्वात्तिष्ठतेर्निवृत्तप्रेषणाण्णिचि निष्ठा । ते तव । यानानि वाहनानि । चतुरङ्गं चत्वारि हस्त्यश्वरथपदातिरूपाणि अङ्गानि अवयवा यस्य तथाभूतं बलं सैन्यम् । प्राप्तमिति विपरिणामेन सम्बन्धः ।

( ७ ) प्रयाहीति । ते तव भद्रं कल्याणं भवत्विति शेषः । प्रयाहि नगरं प्रति प्रयाणं कुरु । नगरे ते जयः घुष्टो घोषितः । घुषेरन्तर्भावितण्यर्थान्निष्ठा । चिररात्राय चिरम् । 'चिरायचिररात्रायचिरस्याद्याश्चिरार्थकाः ।' इत्यमरः । अव्ययमेतत् । पितृपैतामहं पितामहात् पितुः पितुः आगतं पैतामहम् । पितुरपि पितामहात्प्राप्तमित्यर्थः । पैतामहमिति तत आगत इत्यणू औत्सर्गिकः । कुलक्रमागतमित्यर्थः । पदं नृपाधिकारं अध्यास्व आलम्बस्व । 'अधिशीङ्स्थाऽऽसां कर्म' ति कर्मसंज्ञाया द्वितीया ।

( ८ ) चक्षुष्मन्तमिति । तं राजानं द्युमत्सेनं चक्षुष्मन्तं वपुषा प्रशस्तेन आकारेण अन्वितं च दृष्ट्वा मूर्ध्ना करणभूतेन निपतिताः प्रणताः । प्रनिपूर्वो हि पततिः प्रणामार्थः । अत्र चायं विनैव प्रेण तस्मिन्नर्थे प्रयुक्तः विस्मयोत्फुल्ललोचनाः विस्मयेन अन्धस्य पुनर्दृष्टिप्राप्तिजन्येनाश्चर्येण उत्फुल्लानि विकसितानि लोचनानि येषां तथाभूताः उत्फुल्लेति त्रिफला विशरण इत्यस्मादिकसनार्थान्निष्ठायां 'उत्फुल्लसम्फुल्लयोरुपसंख्यानम्' इतिनिपातनात्साधु । 'वपुः क्लीबं तनौ शस्ताकृतावपि' इति मेदिनी ।

१ जनस्य स ( क ) जनस्यासीत् ( च ) २ वपुषाचितम् ( न. )

ततोऽभिवाद्य तान्वृद्धान्द्विजानाश्रमवासिनः ।
तैश्चाभिपूजितः सर्वैः प्रययौ नगरं प्रति ॥ ९
शैब्या च सह सावित्र्या स्वास्तीर्णेन सुवर्चसा ।
नरयुक्तेन यानेन प्रययौ सेनया वृतः ॥ १०
ततोऽभिषिषिचुः प्रीत्या द्युमत्सेनं पुरोहिताः ।
पुत्रं चास्य महात्मानं यौवराज्येऽभ्यषेचयन् ॥ ११
ततः कालेन महता सावित्र्याः कीर्तिवर्धनम् ।
तद्वै पुत्रशतं जज्ञे शूराणामनिवर्तिनाम् ॥ १२
भ्रातॄणां सोदराणां च तथैवास्या भवच्छतम् ।
मद्राधिपस्याश्वपतेर्मालव्यां सुमहाबलम् ॥ १३

---

( ९ ) तत इति । द्युमत्सेन इति कर्तृपदमनाध्याहार्यम् । अभिवाद्य प्रणम्य । तै. अभिपूजितो बहुमानितः । नगर राजधानीं प्रति ।

( १० ) शैब्येति । शैब्या द्युमत्सेनभार्या । स्वास्तीर्णेन शोभनमास्तीर्णं आस्तरणं यस्मिंस्तेन । सुवर्चसा शोभनं वर्चो दीप्तिर्यस्य तथाभूतेन । नरयुक्तेन नरेषु मनुष्येषु युक्तेन । योजितेन । मनुष्यवाह्येनेत्यर्थः ।

( ११ ) तत इति । ततो नगरगमनानन्तरं पुरोहिताः ' वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादवचोयुक्त एष राजपुरोहितः ॥ ' इत्युक्तलक्षणा ब्राह्मणाः । प्रीत्या प्रेम्णा हर्षेण वा । ' प्रीतिर्योगान्तरे प्रेम्णि स्मरपत्नीमुदो स्त्रियाम् ' इति मेदिनी । महात्मानं उदारमनसम् । आत्मशब्दो हि मनोवचनोऽपि यौवराज्ये युवराजत्वे युवराजपद इत्यर्थः ।

(१२) तत इति । ततः तदनन्तरं हे पुन वत्स युधिष्ठिर । युधिष्ठिरस्य मार्कण्डेयं प्रति शिष्यभूततया पुत्रेति सम्बुद्धि । तदाहुः ' वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुत । शिष्योऽनुजश्च वक्तव्य. ' इति । पुत्रकेत्यत्र कस्यार्थ इति तदभावेऽपि प्रयोगो न दोषाय । पुत्रशतमिति समस्ततया पाठस्त्वसमञ्जस एव । ' सविशेषणानां वृत्तिर्न वृत्तानां च विशेषणविशेष्यभावो ने ' त्युक्तेः । सावित्र्याः सावित्रीतः अनिवर्तिनां सङ्ग्रामादपरावर्तनशीलानां शूराणां पुत्राणामित्यर्थः । तत् यमेन प्रदत्तं शतं जज्ञे उदपद्यत । जनेर्लिट् ।

(१३) भ्रातॄणामिति । अस्याः सावित्र्याः । सोदराणां सह समानं उदरं मातृकुक्षिर्येषां तथाभूतानाम् । तुल्यमातृकाणामित्यर्थः समानार्थकसहशब्देन समासः । ' वोपसर्जनस्ये ' ति वा सभावः । सोमनन्दीतु समानस्य च्छन्दसीत्यत्र योगविभागेन सोदरपदं साधयतीति शरणदेवः प्राह । सहपदस्य समानार्थकत्वादेव सहोदरपदं प्रामर्थं द्रष्टम् । भ्रातॄणां शतं भवत अभवदित्यर्थः भवतेर्लङि अडभावश्छान्दसः । ' बहुलं छन्दस्यमाङ्योगेऽपि ' इत्युक्तेः । मद्राधिपस्य अश्वपतेर्मालव्यां एतत्संज्ञायां भार्यायाम् ।

एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्तुः कुलं च सावित्र्या सर्वं कृच्छ्रात्समुद्धृतम् ॥ १४
तथैवैषा हि कल्याणी द्रौपदी शीलसंमता ।
तारयिष्यति वः सर्वान्सावित्रीव कुलाङ्गना ॥ १५

वैशंपायन उवाच—

एवं स पाण्डवस्तेन अनुनीतो महात्मना ।
विशोको विज्वरो राजन्काम्यके न्यवसत्तदा ॥ १६
यश्चेदं शृणुयाद्भक्त्या सावित्र्याख्यानमुत्तमम् ।
स सुखी सर्वसिद्धार्थो न दुःखं प्राप्नुयान्नरः ॥ १७

इति श्रीमन्महाभारत आरण्यपर्वणि पतिव्रतामाहात्म्यपर्वणि
द्युमत्सेनराज्यलाभेऽष्टनवत्यधिकद्विशततमोऽध्यायः ।

## समाप्तं पतिव्रतामाहात्म्यपर्व
## सावित्र्युपाख्यानं च ।

( १४ ) सावित्र्युपाख्यानमुपसंहरति एवमिति । कृच्छ्राद्दुःखात् । 'स्यात्कष्टं कृच्छ्रमाभीलम्' इति दुःखपर्यायेष्वमरः ।

( १५ ) तथैवेति । हिकारोऽवधारणे । शीलसंमता शीलेन सद्वृत्तेन संमता समानं प्राप्ता । कुलाङ्गना कुलविशिष्टा स्त्री । शाकपार्थिवादित्वात्समासः । कुलपदं च प्रशस्तकुलपरम् । कुलीना स्त्रीत्यर्थः । सर्वान् वो युष्मांस्तारयिष्यति उद्धरिष्यतीत्यर्थः ।

( १६ ) एवमिति । तेन महात्मना मार्कण्डेयेन एव अनुनीतः सान्त्वितः पाण्डवो युधिष्ठिरः विज्वरः विगतो ज्वरः पीडा यस्मात्तथाभूतः । हे राजन् जनमेजय । अनुनयः सान्त्वनमिति शब्दस्तोममहानिधिः ।

( १७ ) सावित्र्युपाख्यानश्रवणफलमाह य इति । भक्त्या आदरानुगतेनानुरागेण । सावित्र्याख्यानं सावित्र्या आख्यानं चरितमित्यर्थः । आख्यानं च प्रसिद्धवृत्तकथनमिति श्रीतारानाथः । सर्वसिद्धार्थः सिद्धाः सफलीभूता अर्थाः मनोरथाः सिद्धार्थाः सर्वे सिद्धार्थाः यस्य तथाभूतः सन् । इति ।

पाराशर्यमुखाम्बुजाद्विगलितः क्वायं सुधासोदरः
प्रस्यन्दो वचसां मितम्पचतमा क्वेयं मदीयाऽपि धीः ।
व्याख्यां यत्तदपि व्यधामिह सुखं बालावबोधेच्छया
सोयंऽथेवलमिन्दुचूडचरणाम्भोजद्वयानुग्रहः ॥
सारल्योज्झितमत्र नैव विहितं प्रामाण्यपक्षे मया
प्राचां वाऽपि वचो, नवीनमथवा नोक्तं न युज्यते ।
सारासारविचारपेशलमतिः सूक्ष्मेक्षिकातः स्फुटं

1 यः शुभ ( व )

विज्ञातुं प्रभवेद्बुधः परगुणप्रेमा सदेतत्त्वयम् ॥
प्राचामेव वचःसु मीलितदृशो यस्यानुरागः पर-
स्तस्मै सन्तु नमांसि चारुमतये, नेयं तदर्था कृतिः ।
ये तत्त्वैकदृशो मुनीन्द्रहृदयं जिज्ञासमानाः परं
ते तु प्रीतिमयीं किरन्त्विह दृशं स्वाभीप्सितप्रेप्सवः ॥

श्रीबादरायणमुनीन्द्रमुखोद्गतानां
वाचां व्यधायि विघृतिः किल या मयेयम् ।
सेयं सुरासुरशिरःशिखरार्चनीये
पुष्पायतां गिरिशपादसरोजयुग्मे ॥

इति श्रीमत्पण्डितराजवंशावतंसश्रीमत्कान्ताचार्यसूरिणा ज्ञानेन श्री-
मत्सदाशिवबुधेन्द्रतनुजन्मना राशिवडेकरोपाह्वेन वासिष्ठेन
वङ्गीयविबुधमण्डलीवितीर्णविद्यावाचस्पतिबिरुदेन
श्रीमद्भारतधर्ममहामण्डलसमुपहृतविशालङ्-
कारमहोपदेशकोपाधिना गीर्वाणवाणी
परिचरणबद्धादरेण श्रीअप्पाश
र्मणा विनिर्मितायां बालबो-
धिन्याख्यायां श्रीसावित्री ।
चरितव्याख्यायामष्ट
नवत्युत्तरद्विशत-
तमोऽध्यायः ।

श्रीसदाशिवार्पणमस्तु ।

---

O great king, it is not the duty of a Kshatriya to live in the woods (15) The wise are of opinion that to rule is the foremost duty of a Kshatriya O king thou art conversant with Kshatriya morality Do not therefore, deviate from the path of duty (16) Turning away from the woods, let us summoning pârtha and Janârdana, slay, O king the sons of Dhritarashtra, even before the twelve years are complete (17) O illustrious monarch, O king of kings even if these Dhirtarshtras be surrounded by soldiers in array of batte, I shall send them to the other world by dint of might alone (18) I shall slay all the sons of Dhritarashtra along with Sauvalas, indeed Duryodhana, and Karna and any one else that will fight with me (19) And after I shall have slain all our foes thou mayst come back unto the woods By acting thus O king, no fault will be thine (Or if any sin be thine), (20) O repressor of foes O mighty monarch washing it off, O sire by various secrifices we may ascend a superior heaven (21) Such a consummation may come to pass, if our king proveth not unwise or procrastinating Thou art, however, virtuous (22) Verily the deceitful should be destroyed by deceit To slay the deceitful by deceit, is not regarded as sinful (23) O Bhârata it is also said by those versed in morality that one day and night is, O great prince equal unto a full year (24) The Veda text also O exalted one is often heard, signifying that a year is equivalent to a day when passed in the observance of certain difficult vows (25) O thou of unfading glory, if the Vedas are an authority with thee, regard thou the period of a day and something more as the equivalent of thirteen years (26) O repressor of foes this is the time to slay Duryodhana with his adherents Else, O king he will beforehand bring the whole earth obedient to his will (27) O foremost of monarchs all this is the result of thy *addiction to gambling* *We are on the verge of destruction* already in consequence of thy promise of living one year undiscovered (28) I do not find the country where if we live the wicked minded Suyodhana may not be able to trace us by his spies (29) And finding us out, that wretch will again deceitfully send us into such exile in the woods (30 31) Or if that sinful one beholdeth us emerge, after the expiry of the pledged period of non discovery, he will again invite thee O great king to dice and the

play will once more begin Summoned once more, thou wilt again efface thyself at dice (32) Thou art not skiled at dice, and when summoned at play, thou wilt be deprived of thy senses Therefore, O mighty monarch, thou wilt have to lead a life in the woods again (33 35) If, O mighty king, it behoveth thee not to make us wretched for life observe thou fully the ordinance of the Vedas, (which inculcateth that) verily the deceitful ought to be slain by deceit If I but have thy command, I would go (to *Hastinápura*) and, even as fire falling upon a heap of grass consumeth it, would slay Duryodhana, putting forth my utmost might It behoveth thee, therefore, to grant me the permission "

(36) Vaishampáyana continued,—" Thus addressed by Bhima, king Yudhishthira the just smelt the crown of that son of Pándu and pacifying him said —(37) 'O mighty-armed one, without doubt thou wilt assisted by the wielder of the *Gándiva*, slay Suyodhana at the expiry of the thirteenth year (38) But O son of prithá as for thy assertion—*O lord the time is complete* —I cannot dare tell an untruth, for untruth is not in me (39) O son of Kunti, without the help of fraud, wilt thou kill the wicked and irrepressible Duryodhana, with his allies

(40) While Yudhishthira the just was speaking unto Bhima thus, there came the great and illustrious Rishi Brihadashwa befor them (41) And beholding that virtuous ascetic before him, the righteous king worshipped him according to the ordinance, with the offering of *Madhuparka* * (42) And when the ascetic was seated and refreshed the mighty armed Yudhishthira sat by him, and looking up at the former, addressed him thus in exceedingly piteous accents—

(43) 'O holy one, summoned by cunning gamblers skilled at dice, I have been deprived of wealth and kingdom through gambling (44) I am not an adept at dice, and am unacquainted with deceit Sinful men, by unfair means, vanquished me at play They even brought into the public assembly my wife dearer unto me than life itself (45) And defeating me a second time, they have sent me to distressful exile in this great forest, clad in deerskins (46 47) At present I am

* The usual ingredients are honey, curd, clarified butter, sugar, and milk in a small cup of some metal

leading a distressful life in the woods in grief of heart. Those harsh and cruel speeches they addressed me on the occasion of that gaming match and the words of my afflicted friends relating to the match at dice and other subjects are all stored up in my remembrance Recollecting them I pass the whole night in (sleepless) anxiety (48) Deprived also (of the company) of the illustrious wielder of the *Gandiva*, on whom depend the lives of us all I am almost deprived of life (49) Oh, when shall I see the sweet speeched and large-hearted Bibhatsu so full of kindness and activity, return to us having obtained all weapons ! (50) Is there a king on this earth who is more unfortunate than myself ? Hast thou ever seen or heard of any such before ? To my thinking there is no man more wretched than I am "

(51) Brihadashwa said — O great king O son of Pándu, thou sayest —' *There is no person more miserable than I am* (52) O sinless monarch If thou wilt listen I will relate unto thee the history of a king more wretched than thyself '

(53) Vaishampáyana continued —" And thereupon the king said unto the ascetic — O illustrious one, tell me I desire to hear the history of a king who had fallen into such a condition

(54) Brihadashwa said — O king O thou that never fallest off listen attentively with thy brothers ! I will narrate the history of a prince more miserable than thyself (55) There was a celebrated king among the Nishadhas, named Virasena He had a son named Nala versed in (the knowledge of) virtue and wealth (56) It hath been heard by us that that king was deceitfully defeated by Pushkara, and afflicted with calamity he dwelt in the woods with his spouse (57) And O king while he was living in the forest he had neither slaves nor cars neither brothers nor friends with him (58) But thou art surrounded by thy heroic brothers like unto the celestials and also by foremost regenerate ones like unto Brahmá himself There fore it behoveth thee not to grieve

(59) Yudhishthira said,— I am anxious to hear in detail O thou foremost of eloquent men the history of the illustrious Nala It behoveth thee therefore to relate it unto me

Thus ends the fifty-second Section in the Nalopakhyána of the Vana parva

# SECTION LIII.

( 1 ) Brihadashwa said,—' There was a king named Nala, the son of Virasena. And he was strong and handsome and well-versed in ( the knowledge of ) horses, and possessed of every desirble accomplishment ( 2 ) And he was at the head of all the kings, even like the lord of the celestials And, exalted over all, he resembled the sun in glory ( 3 ) And he was the king of the Nishadhas, intent on the welfare of the Brahmanas, versed in the Vedas, and possessed of heroism And he was truth-telling, fond of dice, and the master of a mighty army * ( 4 ) And he was the beloved of men and women, and of great soul and subdued passions And he was the protector ( of all ), and the foremost of bowmen, and like unto Manu himself ( 5 ) And like him, their was among the Vidarbhas ( a king named ) Bhima, of terrible prowess heroic and well affected towards his subjects, and possessed of every virtue ( But withal ) he was childless ( 6 ) And with a fixed mind he tried his utmost for obtaining issue And, O Bhârata, there came unto him ( once ) a *Brahmarshi* named Damana ( 7 ) And, O king of kings, desirous of having offspring, Bhima, versed in morality, with his queen gratified that illustrious Rishi by a respectful reception ( 8 ) And Damana, well-pleased, granted unto the king and his consort a boon in the form of a jewel of a daughter, and three sons possessed of lofty souls and great fame ( 9 ) ( And they were called respectively ) Damayanti, and Dama and Dânta, and the illustrious Damana And the three sons were possessed of every accomplishment and terrible mien and fierce prowess. ( 10 ) And the slender-waisted Damayanti, in beauty and brightness in good name and grace and luck, became celebrated all over the wrold ( 11 ) And on her attaining to age, hundreds of hand maids, and female slaves, decked in ornaments, waited upon her like *Shachi*† herself ( 12 ) And Bhima's daughter of faultlesss features, decked in every ornament, shone in the midst of her handmaids, like the luminous lightning of the clouds ( 13 14 ) And the large eyed damsel was possessed of great beauty

* The word in the text is *Akshauhini*, which mean a large force consisting of 1, 09, 350 foot, 65, 610 horse, 21, 870 chariots, and 27, 870 elephants

† The queen of heaven, Indra s wife,

like that of *Shree*$ herself And neither among celestials, nor among Yakshas, nor among men was any body possessed of such beauty, seen or heard of before. And the beautiful maiden filled with gladness the hearts of even the gods* (15) And that tiger among men, Nala also had not his peer in the (three) worlds, for in beauty he was like *Kandarpa** himself in his embodied form (16) And moved by admiration, (the heralds) again and again celebrated the praises of Nala before Damayanti and those of Damayanti before the ruler of the Nishadhas (17) And repeatedly hearing of each other's virtues, they conceived an attachment towards each other, not begot of sight, and that attachment O son of Kunti, began to grow in strength (18) And then Nala was unable to control the love that was in his bosom And he began to pass much of his time in solitude in the gardens adjoining the inner apartments (of his palace) (19) And there he saw a number of swans furnished with golden wings, wandering in those woods And from among them he caught one with his hands (20) And thereupon the sky ranging one said unto Nala,—Deserve I not to be slain by thee O king, I will do something that is agreeable to thee (21) O king of the Nishadhas, I will speak of thee before Damayanti in such a way that she will not ever desire to have any other person (for her lord)—(22) Thus addressed, the king liberated that swan And those swans then rose on their wings and went to the country of the Vidarbhas (23) And on arriving at the city of the Vidarbhas, the birds alighted before *Damayanti, who beheld them all (24) And Damayanti in* the midst of her maids, beholding those birds of extraordinary appearance was filled with delight, and strove without loss of time to catch those coursers of the skies (25) And the swans at this, before that bevy of beauties, fled in all directions And those maidens there pursued the birds, each (running) after one (26) And the swan after which Damayanti ran, having led her to a secluded spot addressed her human speech, saying —(27) O Damayanti, there is a king amongst the Nishadhas named Nala He is equal unto the Ashwins in beauty, not having his peer among men Indeed, in comeliness, he is like unto Kandarpa himself in his embodied form (28) O fair-complexioned one, O thou of slender waist, if thou becomest his wife, thy existence and this thy beauty may be of purpose

$ *Lakshmi*.

* The god of love

(29) We have indeed, beheld celestials and Gandharvas, and Nágas and Rákshasas and men, but never saw we before any one like Nala (30) Thou also art a jewel among thy sex, as Nala is the prime among men The union of the best with the best is happy (31 —Thus addressed by the swan, Damayanti, O monarch, replied unto him there, saying,—Do thou speak thus unto Nala also 32 —Saying, *So be it*—to the daughter of Vidarbha, the oviparous one, O king returned to the country of the Nishadhas, and related everything unto Nala ' '

Thus ends the fifty third Section in the Nalopákhyána of the Vana Parva

## SECTION LIV

(1) Brihadashwa said,— O Bhárata hearing those words of the swan Damayanti thenceforth lost all peace of mind on account of Nala (2) And heaving frequent sighs, she was filled with anxiety and became melancholy and pale faced and lean (3) And with her heart possessed by the god of love she soon lost color, and with her up-turned gaze and moods of abstraction looked like one demented (4) And she lost all inclination for beds and seats and objects of enjoyment And she ceased to lie down by day or night, always weeping with exclamation of *Oh!* and *Alas!* (5 7) And beholding her uneasy and fallen into that condition her hand maids represented, O king the matter of her illness unto the ruler of Vidarbha by indirect hints And king Bhima hearing of this from the hand-maids of Damayanti, regarded the affair of his daughter to be serious And he asked himself,—Why is it that my daughter seemeth to be so ill now? (8) And the king, reflecting by himself that his daughter had attained to puberty, concluded that Damayanti's *Swayamvara* should take place 9 And the monarch, O exalted one, (invited) all the rulers of the earth, saying —*Ye heroes, Know that Damayanti's Swayamvara is at hand!* 10 11 And all the kings hearing of Damayanti's *Swayamvara* came unto Bhima, agreeably to his message, filling the earth with the clatter of their cars, the roar of their elephants and the neighing of their horses and accompanied with their fine looking battalions decked in ornaments and graceful garlands 12 And the

mighty armed Bhima paid due reverence unto those illustrious monarchs and duly honored by him they took up their quarters there

(13 14) ' And at this juncture, those foremost of celestial Rishis, possessed of great splendour, of great wisdom and great vows, —namely, Narada and Parvata, having arrived in course of their wanderings at the regions of Indra, entered the mansion of the lord of the immortals, receiving proper worship (15) And Maghavat, having worshipped them reverentially, inquired after their undisturbed peace and welfare as regards all respects (16) And Nârada said, O lord, O divine one, peace attendeth us in every respect. And, O Maghavat peace attendeth also, O exalted one, the kings of the whole world —

(17 18) ' Brihadashwa continued,—Hearing the words of Nârada, the slayer of Vala and Vritra said —Those righteous rulers of earth who fight renouncing all desire of life, and who meet death when their time is come by means of weapons, without flying from the field —theirs is the region everlasting unto them and granting all desires even as it is to me (19) Where be those Kshatriya heroes? I do not see those approach (now) who are my favorite guests —Thus addressed by Shakra, Narada replied —(20) Listen, O Maghavat, why thou seest not the king (now)! The ruler of the Vidarbhas hath a daughter—the celebrated Damayanti In beauty she transcendeth all the women of the earth (21) Her *Swayamvra*, O Shakra will take place shortly Thither are going all the kings and princes from all directions (22) And all the lords of earth desire to have that pearl of the earth —desire to have her eagerly, O slayer of Vala and Vritra (23) And while they were talking thus, those foremost of the immortals, the *Lokapalas* with Agni among them appeared before the lord of the celestials (24) And all of them heard the words of Narada fraught with grave import And as soon as they heard them, they exclaimed in rapture —*We also will go there.*—(25) And O mighty monarch, accompanied by their attendants and mounted on their (respective) vehicles they set out for the country of the Vidarbhas, whither (had gone) all the kings (26) And, O son of Kunti, the high souled king Nala also, hearing of that concourse of kings set out with a cheerful heart full of Damayanti's love (27) And (it came to pass) that the gods saw Nala on the way treading the earth And his form

owing to its beauty was like that of the god of love him self ( 28 ) And beholding him resplendent as the sun the *Lokapalas* were filled with astonishment at his wealth of beauty, and abandoned their intention ( 89 ) And O king, laveing their cars in the sky the dwellers of heaven alighted from the welkin And spake unto the ruler of Nishadhas saying —' 30 ) O formost of monarchs ruling the Nishadhas, O Nala, thou art devoted to troth Do thou help us O best of men be thou our messenger — '

Thus ends the fifty fourth Section in the Nalopakhyâ a of the Vana Parva

## SECTION LV

( 1 ) Brihadashwa continued – O Bhârata Nala pledged his word to the celestials saying *I will do it* And then approaching these he asked with folded hands —(2) Who are ye ? And who also is he that desireth me to be his measenger ? And what further shall I have to do for you ? O tell me truly !—( 3 ) When the king of the Nishadhas had spoken thus Maghavat replied —Know us as the immortals come hither for *Damayanti's sake* ( 4 ) I am Indra this one is Agni this the lord of waters and this O king is even Yama the destroyer of the bodies of *men* ( 5 ) *Do* thou inform Damayanti of our arrival saying —The guardians of the world ( consisting of ) the great Indra and the others, are coming to the assembly desirous of beholding ( the Swayamyvara ) ( 6 ) The gods—Shakra and Agni and Varuna and Yama desire to obtain thee Do thou therefore, choose one of them for thy lord ( 7 ) Thus addressed by Shakra Nala said with joined hands —I have come here with the selfsame object It behoveth you not *to send me on this errand* ( 8 ) How can a person who is himself under the influence of love bring himself to speak thus unto a lady on behalf of others ? Therefore spare me ye gods !—( 9 ) The gods however said —O ruler of the Nishadhas having promised first saying, *I will* —why wilt thou not act accordingly now ? O ruler of the Nishadhes, *tell us this without delay* —

( 10 ) Brihadashwa continued –Thus addressed by those celestials the ruler of Nishadhas spake again saying —Those mansions are well guarded How can I hope to enter

them? (11) Indra replied,—Thou shalt be able to enter And, saying 'So be it'—Nala thereupon went to the palace of Damayanti (12 13) And having arrived there, he beheld the daughter of the king of Vidarbha surrounded by her hand maids blazing in beauty and excelling in symmetry of form, of limbs exceedingly delicate, of slender waist and fair eyes And she seemed to rebuke the light of the moon by her own splendour (14) and as he gazed in that lady of sweet smiles, Nala's love increased, but desirous of keeping his truth, he suppressed his passion, (15) And at the sight of Nishadha, overpowerd by his effulgence, those first of women sprang up from their seats in amazement (16) And filled with wonder (at his sight!) they praised Nala in gladness of heart And without saying anything, they mentally paid him homage, (17) *Oh, what beauty! Oh, what comeliness! Oh, what gentleness belongeth to this high souled one! Who is he? Is he some god or Yaksha or Gandharva!* (18) And those foremost of women, confounded by Nala's splendour and from bashfulness, could not accost him at all in speech, (19) And Damayanti, although herself struck with amazement smilingly addressed the warlike Nala, who also gently smiled at her, saying, (20) What art thou O thou of faultless features, that hast come here awakening my love? O sinless one O hero of celestial form, I am anxious to know who thou art that hast come hither (21) And why hast thou come hither? And how is it that thou hast not been discovered by any one, considering that my apartments are well guarded and the king's mandates are stern —Thus addressed by the the daughter of the king of the Vidarbhas Nala replied — (22) O beauteous lady, know that my name is Nala I come here as the messenger of the gods The celestials Shakra, Agni, Varuna, and Yama, desire to have thee O beautiful lady, do thou choose one of them for thy lord (23) It is through their power that I have entered here unperceived, and it is for this reason that none saw me on my way or obstructed my entrance (24) O gentle one, I have been sent by the foremost of the celestials even for this object Hearing this, O fortunate one, do what thou pleasest —'

Thus ends the fifty fifth Section in the Nalopākhyāna of the Vana Parva

---

# SECTION LVI.

(1) "Brihadashwa said,—Damayanti, having bowed to the gods, thus addressed Nala with a smile,—O king love me with proper regard, and command me what I shall do for thee. (2) Myself and what else of wealth is mine, are thine. Grant me, O exalted one, thy love in full trust. (3) O king, the language of the swans is burning me. It is for thy sake, O hero, that I have caused the kings to meet. (4) O giver of proper honor, if thou forsake me who adore thee, for thy sake will I resort to poison, or fire, or water or the rope—(5) Thus addressed by the daughter of the king of the Vidarbhas, Nala answered her, saying,—With the *Lokapalas* present, choosest thou a man ? (6) Do thou turn thy heart to those highsould lords; the creators of the worlds, unto the dust of whose feet I am not equal. (7) Displeasing the gods, a mortal cometh by death. Save me, O thou of faultless limbs ! Choose thou the all-excelling celestials. (8) By accepting the gods, do thou enjoy spotless robes, and celestial garlands of varriegated hues, and excellent ornaments. (9) What woman would not choose as her lord Hutâsha—the chief of the celestials, who compressing the earth swalloweth it ? (10) What woman would not choose him as her lord the dread of whose mace induceth all creatures to tread the path of virtue ? (11) And what woman would not choose as her lord the virtuous and high-sould Mahendra, the lord of the celestials, the chastiser of Daityas and Dânavas ? (12) Or if thou couldst choose in thy heart Varuna amongst the *Lakapalas*, do so unhesitatingly. O accept this friendly advice ! (13) Thus addreesed by Nishadha, Dymayanti, with eyes bathed in tears begot of grief, spake thus unto Nala,— (14) O lord of earth, bowing to all the gods, I choose thee for my lord. Truly do I tell thee this (15) The king, who had come as the messenger of the gods, replied unto the trembling Damayanti standing with folded hands,—O amiable one, do as thou pleasest. (16) Having given my pledge, O blessed one, unto the gods in especial, how can I, having come on other's mission, dare seek my own intrerest ? (17) If seeking my own intrest consist with virtue, I will seek it, and do thou also, O beautiful one, act accordingly, (18) Then Damayanti of luminous smiles

slowly speak unto king Nala, in words choked with tears — (19) O lord of men I see a blameless way, by which no sin whatever will attach unto thee (20) O king, do thou, O foremost of men come to the *Swayamvara* in company with all the gods headed by Indra (21) There O monarch in the presence of the *Lokapalas* I will, O tiger among men choose thee —at which no blame will be thine (22) Thus addressed O monarch by the daughter of Vidarbha, king Nala returned to where the gods were staying together (23) And beholding him approach, those great gods, the *Lokapalas* eagerly asked him about all that had happened saying —(24) Hast thou, O king, seen Damayanti of sweet smiles ? What hath she said unto all ? O sinless monarch, tell us everything (25) Nala answered,—commanded by you, I entered Damayanti s palace furnished with lofty portals guarded by veteran warders bearing wands. (26) And as I entered no one perceived me by virtue of your power, except the princess (27) And I saw her hand maids, and they also saw me And O exalted of celestials seeing me, they were filled with wonder (28) And as I speak unto her of you, the fair faced maiden her will fixed on me,* O ye best of the gods chose me ( for her spouse ) (29) And the maiden said,—*Let the gods O tiger among men come with thee to the Swayamvara (30) I will, in their presence, choose thee At this, O thou of mighty arms, no blame will attach to thee* —(31) This is all ye gods, that took place, as I have said Finally, every thing rests with you ye foremost of celestials—"

Thus ends the fifty sixth Section in the Nalopakyhana of the Vana Parva

## Section LVII

(1) " Brihadashwa continued — Then at the sacred hour of the holy lunar day of the auspicious season king Bhima summoned the kings to the *Swayamvara* (2) And hearing of it, all the lords of earth smit with love, speedily came thither, desirous of ( possesing ) Damayanti (3) And

* The word in the text is *Gatasankalpa*—will fixed (on me.) The Rev H H Milman renders it bereft of reason ', evidently a mistake in such a connection

the monarchs entered the amphitheatre decorated with golden pillars and a lofty portal arch like mighty lions entering the mountain wilds (4) And those lords of earth decked with fragrant garlands and polished ear rings hung with jewels seated themselves on their several seats (5) And that sacred assembly of kings graced by those tigers among men resembled the *Bhogavati** swarming with the Nagas or a mountain cavern with tigers (6) And their arms were robust and resembling iron maces, and well-shaped, and graceful and looking like five headed snakes (7) And graced with beautiful locks and fine noses and eyes and brows the countenance of the kings shone like stars in the firmament (8) And (when the time came), Damayanti of beauteous face stealing the eyes and hearts of the princes by her dazzling light entered the hall (9) And the glances of those illustrious kings were rivetted to those parts of her person where they had chanced to fall first without moving at all (10) And when O Bhârata, the names of the monarchs were proclaimed the daughter of Bhima saw five persons all alike in appearance (11) And beholding them seated there without difference of any kind in form doubt filled her mind and she could not ascertain which of them was king Nala (12) And at whomsoever (among them) she looked she regarded to be the king of the Nishadhas (13) And filled with anxiety, the beauteous one thought within herself —Oh how shall I distinguish the celestials and how discern the royal Nala!— And thinking thus the daughter of Vidarbha became filled with grief (14 28) And O Bhârata recollecting the marks belonging to the celestials of which she had heard, she thought —Those attributes of the celestials of which I have heard from the aged do not pertain to any of these deities present here upon earth —And revolving the matter long in her mind, and reflecting upon it repeatedly she decided upon seeking the protection of the gods themselves And bowing down unto them with mind and speech with folded hands she addressed them trembling —Since I heard the speech of the swans I chose the king of the Nishadhas as my lord For the sake of truth O let the gods reveal him to me And as in thought or word I have never swerved from him, O let the gods for the sake of that truth reveal him to me

* The nether region, called also *Pâtála*

